# भूमिका

इदम् सुविदितम् अस्ति यत् स्वरूपेण व्यापके परिमाणन च विशाले अपि संस्कृतसाहित्ये पद्यसाहित्यस्य अपेक्षया गद्यसाहित्यस्य अल्पीयस्त्वम् अस्ति । गद्यसाहित्ये अपि च शास्त्रीयगद्यस्य अपेक्षया साहित्यिकगद्यस्य अल्पीयस्त्वम् अस्ति । साहित्यिकगद्ये अपि च पुनः अन्यासाम् कथाख्यायिका-दीनाम् गद्यविधानाम् अपेक्षया कञ्चित् एकम् विषयम् अधिकृत्य स्वतन्त्र-रूपेण लिखितानाम् निबन्धानाम् अल्पीयस्त्वम् अस्ति । एवम् संस्कृतसाहित्ये निबन्धसाहित्यस्य तु अत्यन्तम् एव न्यूनता वर्तते ।

यद्यपि संस्कृतसाहित्यस्य विभिन्नेषु शास्त्रीयेषु गद्यग्रन्थेषु तेषाम् प्रतिपाद्यस्य अङ्गरूपे मुख्यतः प्रसङ्गतः वा प्राप्तान् विभिन्नान् विषयान् अधिकृत्य लिखिताः अनेके एतादृशाः अंशाः सन्ति ये यदि स्वाकरभूतेभ्यः ग्रन्थेभ्यः उद्धृत्य स्वतन्त्ररूपेण स्थापिताः स्युश्चेत् उच्चकोटिकानाम् विचा-रात्मकानाम् निबन्धानाम् रूपे दृश्येरन्, अथ च सहैव कथाख्यायिकात्मकेषु साहित्यिकेषु गद्यग्रन्थेषु अपि उक्तप्रकारेण लिखिताः अनेके एतादृशाः अंशाः सन्ति ये उक्तरूपेण स्थापिताः स्युश्चेत् उच्चकोटिकाः वर्णनात्मकाः, विवर-णात्मका, भावात्मकाः वा निबन्धाः प्रतीयेरन्, किन्तु पुनरपि प्राचीने मध्य-कालीने च संस्कृतसाहित्ये कञ्चित् एकम् विषयम् अधिकृत्य स्वतन्त्ररूपेण लिखितानाम् तादृशानाम् निबन्धानाम् लेखानाम् वा प्रायः अभाव एव वर्तते यादृशाश्च आधुनिककाले विश्वस्य अन्यासाम् समृद्धानाम् भाषाणाम् साहित्ये बाहुल्येन उपलभ्यन्ते । इदम् स्वाभाविकम् अपि वर्तते, यतो हि एतादृशानाम् निबन्धानाम् रूपे गद्यस्य या विधा इदानीम् व्यापकरूपेण प्रचलिता वर्तते, सा प्राचीना मध्यकालीना वा न सती प्रायः आधुनिककाले एव विकसिता अस्ति । विदुषाम् विचारः अस्ति यत् अस्याः विधायाः आविष्कारः सर्व-प्रथमम् विदेशेषु—मुख्यतः यूरोपीयदेशेषु—जातः, पुनश्च अस्याः व्यापक-रूपेण स्वीकारः सर्वत्र जातः । किमपि स्यात्, इदानीम् तु गद्यस्य इयम् विधा प्रायः सर्वत्र एव बाहुल्येन प्रचलिता वर्तते । आधुनिक्यः भारतीयभाषाः अपि एतदपवादत्वम् न भजन्ते, अपि तु तासाम् अपि साहित्यम् एतादृशैः निबन्धैः निरन्तरम् पूर्यमाणम् वर्तते । यतो हि संस्कतभाषा अतिशयितरूपेण प्राचीना

अपि सती आधुनिककाले जीवन्ती तिष्ठति, अतः तस्याः साहित्यस्य अपि एतादृशैः निवन्धैः पूरणम् केभ्यश्चित् वर्षेभ्यः समारब्धम् अस्ति ।

संस्कृतभाषायाः आधुनिककाले अपि यथावत् जीवितरूपे वर्तमानत्वात् तत्र यथा अन्यासाम् काव्यनाटककथाख्यायिकादीनाम् रचना क्रियमाणा वर्तते, तथैव उक्तरूपाणाम् आधुनिकानाम् निवन्धानाम् अपि रचना निरन्तरम् सम्पाद्यमाना वर्तते, यस्याश्च दर्शनम् अधुना एव लिखितेषु प्रकाशितेषु च विभिन्नेषु संस्कृतनिबन्धग्रन्थेषु प्रकाश्यमानासु च विभिन्नासु संस्कृतपत्रपत्रिकासु कर्तुम् शक्यते । इत्थम् संस्कृतसाहित्यम् निबन्धैः अपि पूरयितुम् प्रयासः विभिन्नैः विद्वद्भिः कृतः क्रियमाणश्च वर्तते । अस्याम् एव दिशि यथाशक्ति योगदानम् कर्तुम् प्रस्तुतलेखकेन अपि संस्कृतनिवन्धानाम् इयम् एका स्वकीया 'अञ्जलिः' समर्प्यते, येन ऋषितर्पणम् सम्पद्येत । यदि संस्कृतस्य विद्वांसः संस्कृतसाहित्याय निवन्धानाम् स्वकीयाम् एकैकाम् अञ्जलिम् एवमेव दद्युश्चेत् अन्यदृष्टया पूर्वत एव समृद्धम् इदम् साहित्यम् विभिन्नविषयाकाणाम् आधुनिकनिवन्धानाम् अपि दृष्टया अचिरम् एव समृद्धम् सम्पद्येत । दृढा आशा प्रबलश्च विश्वासः अस्ति यत् एतादृशम् अवश्यम् एव भविष्यति ।

प्रस्तुता 'संस्कृतनिवन्धाञ्जलिः' अपि अत्र किञ्चित् वक्तव्यम् अपेक्षते। अस्याः विषये सर्वप्रथमम् वक्तव्यम् तु इदम् अस्ति यत् छात्राणाम् सामान्यपाठकानाम् च प्रतिपाद्यविषयस्य अथ च सहैव संस्कृतभाषायाः अपि ज्ञानम् सारल्येन स्यात्, इति दृष्टया अस्याः रचनायाम् यत् लक्ष्यम् परमप्रमुखत्वेन निर्धारितम् तत् भाषायाः शैल्याश्च सारल्यम् अस्ति । एतदर्थम् 'संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इति नियमम् अनुसृत्य अत्र वाक्येषु सन्धेः विवक्षा प्रायः न कृता अस्ति । यद्यपि संस्कृतभाषायाः प्रकृतिः प्रायः सन्ध्यनुकूला वर्तते अथ च सन्धिविधानेन बहुषु स्थलेषु भाषायाम् प्रवाहः अपि वर्धते, किन्तु सहैव इदम् अपि तथ्यम् अस्ति यत् सन्धिभिः महतः काठिन्यस्य अपि सृष्टिः भवति । यदि वर्तमानकाले संस्कृतप्रचारः विदुषाम् संस्कृतलेखकानाम् अपेक्षितः वर्तते चेत्, तेषाम् कृते इदम् अनिवार्यत्वेन आपतति यत् ते स्वप्रयुक्तसंस्कृतभाषातः काठिन्यम् यथाशक्ति दूरीकुर्युः । अस्य च सर्वप्रथमः उपायः अयम् एव वर्तते यत् सन्धिविधानम् केवलम् तत्रैव क्रियेत यत्र तत् अत्यन्तम् आवश्यकम् अनिवार्यम् वा स्यात्, अथवा तेन विना भाषायाः स्वाभाविकप्रवाहे बाधा उत्पद्येत, प्रचलनात्, प्रतिकूलता वा संभाव्येत । एतदतिरिक्तम्, यदि सन्धिविधानेन सरलतायाम् कापि बाधा न उत्पद्यते चेत् तदा अपि स्वेच्छया सरलम् सन्धिविधानम् कर्तुम् शक्यते, अन्यथा तस्य यथाशक्ति परिहार एव श्रेयस्करः अस्ति । अद्य भाषाः प्रायः अश्लिष्टाः अयोगात्मिकाः

वा निरन्तरम् सम्पद्यमानाः सन्ति, अतः यदि संस्कृतभाषा अपि तदनुरूपम् सन्धिराहित्येन एतादृशी एव सम्पद्येत चेत्, तस्याः प्रचारे सारल्यम् भविष्यति। एकस्मिन् एव शब्दरूपे विभिन्नेषु स्थलेषु विभिन्नरूपाणाम् सन्धीनाम् विधानेन तस्य विभिन्नानि रूपाणि सम्पद्यन्ते येन पाठकानाम् तस्य मूलस्वरूपस्य अभिज्ञाने काठिन्यम् भवति। अपरतः, यदि सन्धिराहित्येन हेतुना समानम् एव शब्दरूपम् पाठकानाम् सर्वत्र दृष्टिगोचरम् भवति चेत्, ते तस्य पुनः पुनः दर्शनेन तत् सरलतया यथावद्रूपेण परिचिन्वन्ति, येन ते संस्कृतम् अपि केवलम् तत्पुस्तकानाम् पठनेन एव तथैव ज्ञातुम् शक्नुवन्ति, यथा ते अन्याः भाषाः ज्ञातुम् पारयन्ति। अस्तु! भाषायाः सारल्यस्य दृष्ट्या अत्र 'अञ्जलौ' वाक्येषु सन्धिविधानम् विरलतया एव कृतम् नस्ति। अत्र प्रायः एतादृशेषु स्थलेषु एव सन्धिविधानम् कृतम् अस्ति, यत्र 'अत एव' इत्यादिरूपे तस्य व्यापकम् सर्वपरिचितम् च प्रचलनम् अस्ति।

भाषायाः सारल्यस्य दृष्ट्या एव समासविधानम् अपि अत्र तत्र एव कृतम् अस्ति, यत्र प्रवाहानुरोधेन अन्येन केनचित् कारणेन वा तस्य आवश्यकता अनुभूता, अथवा तत् सरलम् प्रतीतम्, अन्यथा तस्य प्रायः परिहार एव कृतः। सारल्यस्य दृष्ट्या एव अत्र शब्दावली अपि तादृशी एव प्रायः प्रयुक्ता या संस्कृतनिष्ठायाम् हिन्दीभाषायाम् अन्यासु च संस्कृतनिष्ठासु आधुनिकीषु भारतीयभाषासु प्रयुज्यते। यदि पाठकैः सामान्यरूपेण व्यवहृतानाम् भाषाणाम् शब्दावल्या एव समाना शब्दावली संस्कृतरचनासु अपि प्राप्येत चेत् तेषाम् संस्कृतज्ञानाय कोऽपि अधिकः आयासः न स्यात्। आधुनिकीनाम् भारतीयभाषाणाम् शब्दावल्या समानतासम्पादनाय अत्र कुत्रचित् परीक्षणार्थम् एतादृशानाम् अपि शब्दानाम् शब्दरूपाणाम् वा प्रयोगः कृतः अस्ति ये सामान्यतः संस्कृतव्याकरणनियमानुकूलाः न प्रतीयन्ते, किन्तु प्रकारान्तरेण तदनुकूलाः सम्पादयितुम् शक्यन्ते, यथा—अत्र 'राष्ट्रिय' इति रूपस्य स्थाने हिन्द्यादिभाषासु प्रचलितस्य 'राष्ट्रीय' इति रूपस्य एव प्रयोगः कृतः अस्ति, यच्च प्रचलनानुरोधेन 'राष्ट्रावारपाराद् घखौ' इत्यस्य उपेक्षायाम् कृतायाम् 'वृद्धाच्छः' इत्यनेन निष्पादयितुम् शक्यते। संस्कृतभाषा स्वप्रयोगरूपम् जीवनम् धारयति, अतश्च यदि जीवन्त्याः अस्याः भाषायाः शब्देषु स्वसमयानुसारेण यत्र-कुत्रचित् किञ्चित् रूपान्तरम् स्याच्चेत् अस्वाभाविकम् नास्ति। अस्माकम् वैदिकैः पूर्वजैः बहूनि एतादृशानि शब्दरूपाणि धातुरूपाणि वा प्रयुक्तानि यानि पश्चात् तत्परवर्तिभिः अस्माकम् पूर्वजैः एव परित्यक्तानि। एवमेव पूर्वजैः 'राष्ट्रिय' इत्यादीनि रूपाणि प्रयुक्तानि, किन्तु यदि तेषाम् वंशधरैः इदानीम् राष्ट्रीय' 'इत्यादीनि' रूपाणि बाहुल्येन प्रयुज्यन्ते चेत् तानि स्वीकरणीयानि व्याकरणेन च साधनीयानि, यतो हि

लक्ष्यानुसारि लक्षणम् भवति। भाषायाः सारल्यस्य दृष्ट्या अत्र वाक्य-विन्यासः अपि हिन्द्यादिभाषासु प्रचलित एव अङ्गीकृतः वर्तते।

भाषावत् शैल्याः अपि सारल्यम् अत्र संरक्षितम्। पाठकानाम् विषयावगतिम् एव मुख्यलक्ष्यत्वेन दृष्टौ धृत्वा अत्र सर्वस्य प्रतिपाद्यस्य सरलया सुबोधया च एव शैल्या प्रतिपादनस्य प्रयासः कृतः अस्ति।

यद्यपि निबन्धाः अनेकप्रकारकाः भवन्ति यथा वर्णनात्मकाः, विवरणात्मकाः, भावात्मकाः, विचारात्मकाश्च इत्यादयः किन्तु यतो हि दृष्टौ धृताः पाठकाः मुख्यतः विश्वविद्यालयीयाः स्नातकोत्तरकक्षाछात्राः सन्ति, तेषाञ्च प्रौढत्वात् विचारशीलत्वाच्च तेषाम् कृते विचारात्मकाः निबन्धाः अतिशयितरूपेण उपयोगिनः रुचिकराश्च भवन्ति. अतः अत्र प्रायः विचारात्मकाः निबन्धाः प्रस्तुताः सन्ति येषु कुत्रचित् विवेचनम् समीक्षणम् वा अस्ति, कुत्रचित् च गवेषणा अस्ति, किन्तु विचारस्तु कुत्रापि न व्यभिचरति।

अत्र प्रस्तुतानाम् निबन्धानाम् विषयाः यद्यपि विभिन्नाः सन्ति, किन्तु बाहुल्येन ते भारतीयसंस्कृत्या संस्कृतवाङ्मयेन च सम्बद्धाः सन्ति। अत्र विभिन्नानाम् निबन्धानाम् माध्यमेन भारतीयसंस्कृतेः आधारभूतानाम् प्रमुखानाम् तत्त्वानाम् विभिन्नानाम् च तत्प्रकाशकानाम् रूपाणाम् अथ च संस्कृतवाङ्मयस्य वेदवेदाङ्गदर्शनेतिहासपुराणकाव्यनाटककथादिकासु विभिन्नासु शाखासु प्रायः प्रत्येकम् शाखायाः प्रतिनिधित्वम् कुर्वताम् प्रमुखानाम् ग्रन्थानाम् लेखकानाम् च विषये विचाराः प्रकटिताः सन्ति, येन सामान्य-पाठकानाम् छात्राणाम् च भारतीयसंस्कृतेः संस्कृतवाङ्मयस्य च स्वरूपस्य गौरवस्य च अधिकतरज्ञानाय अभिलाषा जागृयात्। अत्र प्रस्तुतेषु निबन्धेषु यत्र संस्कृतवाङ्मयसम्बद्धाः निबन्धाः प्रायः समग्रस्य अपि संस्कृतवाङ्मयस्य संक्षिप्तम् चित्रम् पाठकानाम् समक्षम् उपस्थापयन्ति, तत्र संस्कृतिसम्बद्धाः निबन्धाः तान् आत्मगौरवम् स्वराष्ट्रगौरवम् च अनुभावयन्तः तान् स्व-चरित्रनिर्माणेन आत्मोन्नतिम् कर्तुम् प्रेरयन्ति।

अत्र प्रायः प्रत्येकम् निबन्धे तद्वर्णनीयविषयसम्बन्धिनी पर्याप्ता सामग्री दत्ता वर्तते, येन ताम् उपयुज्य, तस्याः सङ्केतेन च अन्याम् अपि तादृशीम् सामग्रीम् अन्विष्य पाठकाः छात्राः स्वतंत्ररूपेण विषयाणाम् वर्णने समर्थाः स्युः। निबन्धेषु सर्वत्र एव प्रायः वर्णनीयविषयसम्बन्धे मौलिकानि चिन्तनसूत्राणि प्रस्तुतानि सन्ति, येन छात्राणाम् सामान्यतः चिन्तनशीलता उत्पद्येत अथ च सहैव विशिष्टतः तद्विषयस्य सम्बन्धे अधिकतराय चिन्तनाय प्रेरणा प्राप्येत। अत्र कतिचन विभिन्नविषयकाः अपेक्षाकृतरूपेण लघवः निबन्धाः अपि प्रस्तुताः सन्तिः। अस्तु ! एवम् अत्र ग्रन्थस्य प्रायः सर्वविधाम् उपयोगिताम् सम्पादयितुम् प्रयासः कृतः अस्ति।

यतो हि निबन्धाः स्वभावतः परस्परनिरपेक्षरूपेण स्वतन्त्राः भवन्ति, अतः अत्रापि प्रस्तुताः निबन्धाः सम्पूर्णस्य ग्रन्थस्य एतादृशाः अंशाः न सन्ति ये कस्य अपि ग्रन्थस्य विभिन्नाः अध्यायाः इव परस्परसापेक्षाः स्युः, अपि तु ते परस्परनिरपेक्षाः सन्तः स्वस्वरूपे स्वतन्त्राः पूर्णाश्च सन्ति। फलतः अत्र परस्परसम्बद्धविषयकेषु केषुचित् निबन्धेषु स्वस्वविषयस्य पूर्णतायाः अनुरोधात् कस्यचन अंशस्य परस्परम् आवृत्तिः अपि जाता अस्ति, अन्यथा पुनरुक्तिः परिहरणीयत्वेन परिहृता एव।

पुरुषस्वभावसुलभदोषेभ्यः अन्यथा वा कथञ्चित् अत्र विभिन्नरूपाः त्रुटयः न्यूनताः वा अपि संभाव्यन्ते, मुद्रणस्य अशुद्धयः अपि च यत्र-तत्र जाताः स्युः। एतासाम् बोधे जाते एतासाम् निराकरणस्य अपि यथाशक्ति प्रयत्नः अनन्तरे संस्करणे करिष्यते। इदानीम् तु संस्कृतानुरागिभ्यः अनया आशया इयम् लघ्वी कृतिः प्रस्तुते रूपे समर्प्यते एव यत् ते इमाम् संस्कृतानुरागवशात् स्वीकरिष्यन्ति एव।

अत्र येभ्यः विभिन्नेभ्यः स्रोतोभ्यः यत्किञ्चित् अपि साहाय्यम् गृहीतम् अस्ति तदर्थम् तेषाम् आभारः सादरम् अनुभूयते।

आगरानगरस्थविनोदपुस्तकमन्दिराध्यक्षमहोदयाः संस्कृतसाहित्यसेवोद्देश्येन इमाम् कृतिम् प्रकाशितवन्तः, एतदर्थम् ते धन्यवादार्हाः सन्ति।

प्रारूपसंशोधनादिभिः मदीयेन प्रियशिष्येण श्रीदामोदरप्रसादशर्मणा (एम. ए., बी. टी.) अत्र पर्याप्तम् साहाय्यम् दत्तम् अस्ति, यदर्थम् तस्मै हार्दिकः सधन्यवादः आशीर्वादः वितीर्यते।

संस्कृत-विभागः,
राजा बलवन्तसिंह कालेज,
आगरा

रामकृष्ण आचार्यः

गणतन्त्रदिवसः, १९७०

# द्वितीयम् संस्करणम्

अल्पीयसा कालेन एव संस्कृतनिबन्धाञ्जलेः द्वितीयसंस्करण-प्रकाशनाय अवसरः समायातः इति प्रसन्नतायाः विषयः। एतेन ज्ञायते यत् निबन्धपुष्पाणाम् इयम् 'अञ्जलिः' पाठकैः सस्नेहम् स्वीकृता। एतदर्थम् लेखकः तेभ्यः धन्यवादान् अर्पयति।

प्रस्तुते संस्करणे 'महाकविः भासः' अथ च 'महाकविः अश्वघोषः', इति निबन्धद्वयम् अभिनवरूपेण संयोजितम् वर्तते। सहैव पूर्वतः वर्तमानेषु केषुचित् निबन्धेषु किञ्चित् संशोधनम् परिवर्धनम् च अपि अत्र कृतम् अस्ति। फलतः इदम् संस्करणम् पूर्वतः अपि अधिकतरम् उपयोगि जातम् अस्ति। आशा कर्तुम् शक्यते यत् पाठकाः पूर्ववत् एव इमाम् 'अञ्जलिम्' स्नेह-पूर्वकम् ग्रहीष्यन्ति।

राजा बलवन्तसिंह कालेज,<br>आगरा<br>गाँधिजयन्ती, १९७२

रामकृष्ण आचार्यः

# अनुक्रमणिका

# १

## संस्कृत-महत्त्वम्

१—**प्रास्ताविकम्**—यद्यपि संस्कृतभाषा वर्तमानकाले कुत्र अपि तथा व्यवह्रियमाणा न वर्तते, यथा अद्य विभिन्नाः आधुनिकभाषाः व्यवह्रियन्ते, तथापि सा पूर्वकाले तथैव व्यवहृता जाता, यथा अद्य कापि आधुनिकी भाषा व्यवह्रियमाणा वर्तते । व्यवहृता अपि सा तैः महद्भिः जनैः येषाम् संस्कृतिः अद्य विश्वे प्रकाशमाना वर्तते, यैश्च ज्ञानविज्ञानयोः विभिन्नेषु क्षेत्रेषु महत् कार्यम् कृतम्, यत्फलस्वरूपम् च यैः महान्तः सिद्धान्ताः आविष्कृताः, बहूनि च तथ्यानि प्रकाशितानि कृतानि, येषाम् च इदम् कार्यम् अद्यापि जगत्कल्याणाय पर्याप्तम् वर्तते । एतैः जनैः याः विभिन्नाः अनुभूतयः प्राप्ताः, तदाधारेण च ये संस्काराः प्राप्ताः, तत्समष्टिरूपा च या संस्कृतिः विकसिता कृता, तदनुरूपम् च ये आदर्शाः सिद्धान्ताश्च स्थापिताः, तस्य सकलस्य प्रकाशनम् तैः स्वकीयायाः संस्कृतभाषायाः माध्यमेन एव कृतम् । एवम् च, यतो हि संस्कृतभाषायाम् प्रकाशितम् इदम् सर्वम् मानवजातेः एकः अमूल्यः निधिः वर्तते, अतो हि एतन्महत्त्वपूर्णनिधेः प्रकाशिकायाः संस्कृतभाषायाः महत्त्वम् स्वत एव सुविदितम् भवति ।

२—**वाङ्मयाधारकम् महत्त्वम्**—कस्याश्चित् अपि भाषायाः महत्त्वम् द्वयोः तथ्ययोः आधारे स्थितम् भवति । तयोः एकम् तु तथ्यम् इदम् यत् तस्याः भाषायाः वाङ्मयम् कीदृशम् वर्तते, अपरम् च तथ्यम् इदम् यत् सा भाषा स्वयम् कीदृशी अस्ति । इत्थम् कस्याः अपि भाषायाः महत्त्वम् स्वप्रतिपाद्याधारकम् स्वाधारकम् च भवति । एताभ्याम् द्वाभ्याम् अपि दृष्टिभ्याम् दर्शने कृते सति संस्कृतभाषायाः महत्त्वम् स्पष्टम् प्रतीयते । संस्कृतभाषायाः वाङ्मयम् स्वकीये स्वरूपे व्यापकम् परिमाणे च विशालम् वर्तते । तत्र ज्ञानविज्ञानयोः प्रत्येकम् क्षेत्रम् प्रकाशितम् विद्यते । संस्कृतभाषायाः ज्ञानवाङ्मयम् भाववाङ्मयम्, इति द्विविधम् अपि वाङ्मयम् अतीव उत्कृष्टम् अस्ति । सहैव च विश्वस्य प्राचीनतमम् वाङ्मयम् अपि संस्कृतभाषायाम् एव उपलभ्यते ।

**(अ) वैदिकम् वाङ्मयम्**—इदम् सुविदितम् यत् विश्वस्य प्राचीनतमम् वाङ्मयम् वेदचतुष्टयात्मकम् वेदवाङ्मयम् एव अस्ति, तच्च संस्कृतभाषायाम् एव निबद्धम् वर्तते। वेदवाङ्मयम् सुदूरे अतीतकाले वर्तमानस्य मानवसमाजस्य धार्मिकभावनानाम् दार्शनिकविचारधाराणाम् च वर्णनम् प्रस्तुतम् करोति। अस्मात् वाङ्मयात् अतिरिक्तम् अन्यत् किमपि एतादृशम् वाङ्मयम् सम्पूर्णेऽपि विश्वे नास्ति यत् इदम् वाङ्मयम् इव मानवसंस्कृतेः प्राचीनतमम् स्वरूपम् प्रकाशितम् करोति। मानवसंस्कृतेः प्राचीनतमस्य स्वरूपस्य प्रकाशकम् इदमेव एकमात्रम् वाङ्मयम् सुरक्षितम् वर्तते। वेदवाङ्मये अनेकानि वैज्ञानिकानि तथ्यानि प्रकाशितानि सन्ति यानि स्वसमकालीनमानवसमाजस्य वैज्ञानिकचिन्तनस्य उत्कृष्टत्वम् प्रदर्शयन्ति, सहैव च यानि मानवजातेः पथप्रदर्शनाय अद्यापि समर्थानि सन्ति। एतदतिरक्तम्, तत्र अध्यात्मज्ञानस्य मानवधर्मस्य च यत् तत्त्वम् निहितम् वर्तते तस्य सार्वकालिकम् सार्वदेशिकम् च महत्त्वम् अस्ति। विश्वधर्माणाम्, तुलनात्मके अध्ययने सहैव च तेषाम् ऐतिहासिके अध्ययने वेदानाम् महती उपयोगिता अस्ति। ब्राह्मणादिकेन वैदिकेन वाङ्मयेन अपि तत्काले प्रचलितस्य धर्मस्य उपरि महान् प्रकाशः पात्यते, सहैव च तेन तत्कालीनः इतिहासः अपि समीचीनतया प्रकाशितः क्रियते। वैदिकवाङ्मयस्य एव अङ्गभूतेषु आरण्यकोपनिषदाख्येषु ग्रन्थेषु अध्यात्मतत्त्वज्ञानस्य या आनन्दमयी धारा प्रवहमाना वर्तते, तस्याम् निमज्जनेन सर्वदा एव जिज्ञासुभिः महती शान्तिः अधिगता, साम्प्रतम् च अधिगम्यते।

**(आ) अन्यत् ज्ञानवाङ्मयम्**—वैदिकवाङ्मयात् पश्चात् अस्तित्वम् प्राप्नुवत्सु सूत्रग्रन्थेषु धर्मशास्त्रस्य, दर्शनशास्त्रस्य, व्याकरणादिशास्त्राणाम् च सूक्ष्मतमानि तथ्यानि यस्याम् शैल्याम् प्रकाशितानि सन्ति, सा विश्ववाङ्मये स्वकीयम् अपूर्वम् एव महत्त्वम् धत्ते। एतेषाम् सूत्रग्रन्थानाम् गम्भीरव्याख्यानपराणाम् भाष्याणाम् अपि महत्त्वपूर्णम् स्थानम् सुविदितम् अस्ति। एवमेव संस्कृतभाषायाम् निबद्धानि निरुक्तज्यौतिषायुर्वेदार्थशास्त्रराजमात्यादीनि विभिन्नानि शास्त्राणि तस्याः वैज्ञानिकवाङ्मयस्य ज्ञानवाङ्मयस्य वा गौरवम् वितन्वन्ति। स्मृतयश्च विधिशास्त्रस्य सूक्ष्मतमानि तत्त्वानि प्रकाशयन्ति। एवं संस्कृतभाषायाः वैज्ञानिकम् ज्ञानमयम् वा वाङ्मयम् अतीव व्यापकम् फलतश्च अतीव विशालम् वर्तते।

**(इ) पुराणेतिहासात्मकम् वाङ्मयम्**—संस्कृतभाषायाम् निबद्धम् एकम् एतादृशम् अपि पुराणेतिहासात्मकम् वाङ्मयम् अस्ति यस्य स्वरूपम् ज्ञानवाङ्मयात्मकम् भाववाङ्मयात्मकम् च, इति उभयात्मकम् वर्तते। इदम् वाङ्मयम् विश्ववाङ्मये स्वकीयम् प्रतियोगि न धत्ते। इदम् वाङ्मयम्

स्वप्रतिपाद्यदृष्ट्या अतीव व्यापकम् स्वपरिमाणदृष्ट्या च अतीव विशालम् वर्तते । अस्मिन् वाङ्मये धर्मस्य, दर्शनस्य, इतिहासस्य, भूगोलस्य, राजनीतेः, समाजशास्त्रस्य अन्येषाम् च अनेकेषाम् विषयाणाम् समन्वयः वर्तते, फलतश्च इदम् वाङ्मयम् ज्ञानविज्ञानयोः भावराशेश्च एकम् व्यापकम् विशालम् च निधानम् अस्ति ।

(ई) **भाववाङ्मयम्**—संस्कृतभाषायाः विशुद्धस्य भाववाङ्मयस्य उपरि दृष्टिपाते कृते सति स्पष्टम् ज्ञायते यत् तदपि व्यापकम् अस्ति । तत्र आदिकाव्यम् वाल्मीकीयरामायणम् तु गौरवपूर्णम् महत् काव्यम् विराजते एव, यच्च अनेकेषाम् परवर्तिनाम् काव्यनाटकादीनाम् उपजीव्यम् वर्तते । अन्यानि अपि अश्वघोषकालिदासभारविमाघश्रीहर्षादिभिः महाकविभिः प्रणीतानि बुद्धचरितसौन्दरानन्दरघुवंशकुमारसम्भवकिरातार्जुनीयशिशुपालवधनैषधीयचरितादीनि महाकाव्यानि नैकशः सन्ति। सहैव तत्र नाटककथाख्यायिकागद्यकाव्यादीनि भाववाङ्मयस्य विभिन्नानि रूपाणि विभिन्नाभिः कृतिभिः पूर्णानि सन्ति । तत्र नाटकसाहित्ये अभिज्ञानशाकुन्तलविक्रमोर्वशीयमालविकाग्निमित्रोत्तररामचरितमहावीरचरितमालतीमाधवादीनि विभिन्नानि नाटकानि विराजन्ते, कथाख्यायिकादिषु च वासवदत्तादशकुमारचरितकादम्बरीहर्षचरितादीनि प्रकाशमानानि सन्ति ।

भाववाङ्मयस्य काव्यनाटकादीनाम् विभिन्नानाम् रूपाणाम् तदाधारभूतानाम् च शब्दार्थरसालंकारादीनाम् तत्त्वानाम् सैद्धान्तिकीम् आलोचनाम् प्रस्तुवन्तः अपि अनेकशः गम्भीरतराः ग्रन्थाः संस्कृतभाषायाम् निबद्धाः सन्ति। आधुनिककाले अपि संस्कृतभाषायाम् विविधविषयकाःविभिन्नाःग्रन्थाः निर्मीयमाणाः सन्ति ।

एवम् संस्कृतवाङ्मयम् स्वकीयेषु सर्वेषु रूपेषु सर्वाभिः दृष्टिभिः परिपूर्णम् सत् विश्वस्य विभिन्नानाम् वाङ्मयानाम् मध्ये समुज्ज्वलम् रत्नम् इव प्रकाशते । एतस्य रत्नस्य दर्शनम् तदा एव समुपलब्धुम् शक्यते यदा संस्कृतभाषायाः समाश्रयणम् स्वीक्रियेत, फलतः तस्याः महत्त्वम् स्पष्टम् एव वर्तते । वस्तुतः स्ववाङ्मयाधारकम् स्वप्रतिपाद्याधारकम् वा संस्कृतभाषायाः महत्त्वम् एतादृशम् वर्तते यत् कदापि न्यूनम् न भवितुम् शक्नोति, अपि तु चिरकालम् स्थास्यति ।

**३—स्वाधारकम् महत्त्वम्**—संस्कृतभाषायाः स्वाधारकम् महत्त्वम् अपि न्यूनम् नास्ति, तस्याः वर्णमाला तथा वैज्ञानिकी वर्तते यथा च विश्वस्य कस्याः अपि भाषायाः नास्ति । शब्दाः अपि तथा व्युत्पत्तिमन्तः सन्ति, यथा अन्यत्र कस्याम् अपि भाषायाम् सुदुर्लभाः । फलतः अस्याः भाषायाः व्युत्पत्तिशास्त्रम् स्वकैः व्यापकैः नियमैः सह राजमार्गः एव वर्तते । अर्थविज्ञानदृष्ट्या

दर्शने कृतेऽपि संस्कृतभाषा महती वैज्ञानिकी प्रतीयते। स्वकीयैः नियमैः सह सा वैज्ञानिकरीत्या स्वार्थम् प्रकाशयति। स्वरूपे अपि सा एवम् पूर्णा यत् विश्वे किमपि प्रतिपाद्यम् ईदृशम् नास्ति यत् तस्याः माध्यमेन प्रतिपादयितुम् न शक्येत। एतदतिरिक्तम्, विश्वस्य प्राचीनतमाभिः भाषाभिः सह अस्याः गाढः सम्बन्धः वर्तते। फलतः तुलनात्मकभाषाविज्ञानस्य अध्ययने अस्याः महती उपयोगिता वर्तते। वस्तुस्थितिः तु इयम् वर्तते यत् तुलनात्मकभाषाविज्ञानस्य समारम्भः एव संस्कृतभाषापरिचयवशात् जातः। अस्तु! विश्वस्य विभिन्नाः भाषाः स्वकीयवर्णमालायाः संशोधने, व्युत्पत्तिशास्त्रनिर्माणे, अर्थविज्ञानपूरणे च संस्कृतभाषायाः पथप्रदर्शनम् प्राप्तुम् शक्नुवन्ति।

संस्कृतभाषायाः स्वाधारकम् एकम् इदम् अपि महत्त्वम् वर्तते यत् सा अतीव मधुरा भाषा अस्ति, येन तन्निबद्धम् काव्यादिकम् गीयमानम् सत् स्वमाधुर्येण परमाम् आध्यात्मिकीम् शान्तिम् ददाति।

४—राष्ट्रीयम् महत्त्वम्—पूर्वोक्तप्रकारेण संस्कृतभाषायाः विश्वव्यापकम् महत्त्वम् वर्तते। तस्याः प्रतिपाद्यम् विश्वव्यापकस्य महत्त्वस्य वस्तु सत् जगतः निधिः वर्तते। स्वयम् अपि च स्वस्वरूपेण विश्वभाषाभ्यः तुलनात्मकभाषाविज्ञानाय च किंचित् दातुम् एव शक्नोति। किन्तु यदि भारतवर्षस्य दृष्ट्या दृश्येत चेत् तदा तु अस्याः महत्त्वम् अतुलितम् एव वर्तते। सा प्राचीनकालीना अपि सती भारतवर्षस्य सांस्कृतिकी भाषा अस्ति। तस्याम् भारतस्य सांस्कृतिकम् जीवनम् एव निहितम् वर्तते। ताम् विना भारतम् भारतम् एव न स्थास्यति, अन्यत् किमपि तत् स्यात्। भारतस्य यत् व्यक्तित्वम् वर्तते, येन तत् विश्वस्य अन्येभ्यः देशेभ्यः पृथक् स्वत्वम् रक्षितुम् शक्नोति, तत् संस्कृतभाषायाम् एव निहितम् वर्तते। संस्कृतभाषापरित्यागेन भारतम् स्वस्वरूपेण हीनम् भविष्यति। भारतस्य सांस्कृतिकम् ऐक्यम् संस्कृतभाषायाः आधारेण एव स्थातुम् शक्नोति। स्वकीयम् राष्ट्रगौरवम् अपि संस्कृतभाषायाम् निहितेन निधना एव प्रकाशयितुम् शक्यते, अन्यथा भारतस्य समीपे किम् अवशिष्टम् स्थास्यति, येन स्वगौरवम् प्रकाश्येत, अथ च यदाधारेण कथयितुम् शक्येत यत् तेन मानवजातये ज्ञानविज्ञानादिक्षेत्रे स्वकीयम् किम् दत्तम्।

संस्कृतभाषा एव स्वकीयवेदवाङ्मयद्वारा मानवसंस्कृतेः प्राचीनतमस्य स्वरूपस्य प्रकाशिका वर्तते, तस्याम् एव च भारतस्य सांस्कृतिकजीवनम् निहितम् वर्तते, अतः मानवसंस्कृतिदृष्ट्या भारतीयसंस्कृतिदृष्ट्या च इदम् कथनम् यथातथम् एव वर्तते यत् 'संस्कृतिः संस्कृताश्रिता'।

आधुनिकीनाम् सर्वासाम् भारतीयानाम् भाषाणाम् विशेषेण च राष्ट्र-

भाषात्वेन स्वीकृतायाः हिन्दीभाषायाः अपि विकासः संस्कृतभाषायाः आधारेण एव भवितुम् शक्नोति, यतो हि तासाम् स्वरूपम् एव संस्कृताधारकम् वर्तते, आधारभूतया तया विना तु ताः निर्जीवाः एव भविष्यन्ति ।

इत्थम् सम्पूर्णस्य विश्वस्य दृष्ट्या विशेषतश्च भारतवर्षस्य दृष्ट्या संस्कृतभाषायाः स्ववाङ्मयाधारकम् स्वाधारकम् च महत् महत्त्वम् वर्तते। फलतश्च सा स्ववाङ्मयेन सह अध्ययनस्य अनुशीलनस्य च वस्तु सिद्ध्यति। अन्यत्र क्व अपि तस्याः अध्ययनम् स्यात् न वा स्यात्, किन्तु यतो हि भारतस्य सर्वस्वम् पूर्वोक्त प्रकारेण संस्कृताधारकम् एव वर्तते, अतः भारतम् अधिकृत्य तस्याः विषये इयम् मङ्गलकामना करणीया एव वर्तते यत्—'भारते भातु भारती ।'

# २

## संस्कृताध्ययन-प्रयोजनम्

१—**प्रास्ताविकम्**—संस्कृताध्ययनप्रयोजनविषये सर्वप्रथमम् इदम् वक्तव्यम् अस्ति यत् सर्वेषाम् जनानाम् एकानि समानानि वा प्रयोजनानि न सन्ति, फलतः संस्कृताध्ययनेन यानि प्रयोजनानि सिध्यन्ति, तानि सर्वेषाम् जनानाम् अभीष्टानि स्युः, इदम् आवश्यकम् नास्ति। इदमेव कारणम् यत् इदानीन्तनाः जनाः प्रायः संस्कृताध्ययने रुचिम् न दधते, यतो हि यानि संस्कृताध्ययनेन प्रयोजनानि सिध्यन्ति, तानि इदानीम् तेषाम् जीवनस्य प्रयोजनानि एव न सन्ति।

कस्याः अपि विशिष्टायाः भाषायाः कस्य अपि विशिष्टस्य विषयस्य वा अध्ययनस्य तु वार्ता दूरे वर्तते, बहवः जनाः तु कीदृशीम् अपि शिक्षाम् न गृह्णन्ति, अपि तु यावज्जीवनम् अशिक्षिताः एव सन्तः तिष्ठन्ति, अथ च 'काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते' इतिवाक्यप्रतिपाद्यं चरितार्थयन्ति। एतादृशानाम् जनानाम् कृते तु संस्कृताध्ययनेन एव किम्, कस्याः अपि भाषायाः अध्ययनेन कस्य अपि विषयस्य वा अध्ययनेन किमपि प्रयोजनम् एव नास्ति। किन्तु ये जनाः शिक्षायाम् अभिरुचिम् दधते, तेषाम् कृते इदम् विचारयितुम् शक्यते यत् अन्यासाम् भाषाणाम् अध्ययनेन यथा विभिन्नानि प्रयोजनानि सिध्यन्ति तथा संस्कृताध्ययनेन अपि किंचित् प्रयोजनम् सिध्यति। यदि तत् प्रयोजनम् तेषाम् अभीष्टम् स्यात् चेत् तैः संस्कृताध्ययनम् कर्त्तव्यम् एव, अथ च एतादृशम् प्रयोजनवत् संस्कृताध्ययनम् कुर्वद्भिः सद्भिः तैः 'संस्कृताध्ययनस्य भवताम् किम् प्रयोजनम्' इत्येतादृशाम् प्रश्नानाम् उत्तरम् सरलतया दातव्यम् एव।

२—**भाषाध्ययनप्रयोजनानि**—कस्याः अपि भाषायाः अध्ययनस्य मुख्यतः द्विविधम् प्रयोजनम् भवति। एकम् तु स्वयम् भाषाध्ययनसाध्यम्, अपरम् च तन्निबद्धवाङ्मयाध्ययनसाध्यम्। भाषाध्ययनसाध्यम् प्रयोजनम् अपि पुनः मुख्यतः द्विविधम् भवति—एकम् तु व्यावहारिकम्, अपरम च

शास्त्रीयम् सैद्धान्तिकम् वा। भाषाध्ययनसाध्यम् व्यावहारिकम् प्रयोजनम् तद्भाषाभाषिभिः सह तस्याम् भाषायाम् वार्तालापद्वारा परस्परम् विचाराणाम् आदान-प्रदानम्, अथ च तैः सह विभिन्नव्यावहारिककार्यसम्पादनम् अस्ति। भाषाध्ययनसाध्यम् शास्त्रीयम् सैद्धान्तिकम् वा प्रयोजनम् तस्याः भाषायाः अन्याभिः भाषाभिः सह भाषावैज्ञानिकरीत्या तुलनात्मकेन अध्ययनेन इदम् ज्ञानम् अस्ति यत् तस्याः भाषायाः अन्याभिः भाषाभिः सह कः सम्बन्धः अस्ति, तया अन्याभ्यः भाषाभ्यः कस्मिन् रूपे किम् दत्तम्, अन्याभ्यश्च तया किम् गृहीतम्, अथ च तद्भाषाभाषिणाम् जनानाम् अन्यभाषाभाषिभिः जनैः सह कः कीदृशः वा विभिन्नः धार्मिकः, सामाजिकः, आर्थिकः, राजनैतिकः, सांस्कृतिकः, ऐतिहासिकः, भौगोलिकः वा सम्बन्ध आसीत् अस्ति वा, येन तदनुकूलम् परस्परम् ऐक्यभावना सम्पद्यते। तद्भाषानिबद्धवाङ्मयाध्ययनसाध्यम् च प्रयोजनम् तद्वाङ्मयप्रतिपादितविभिन्नविषयाणाम् ज्ञानम् तद्द्वारा च विभिन्नानाम् धर्मार्थकाममोक्षादीनाम् पुरुषार्थानाम् साधनम् अस्ति।

३—**संस्कृतभाषाध्ययनसाध्यम् व्यावहारिकम् प्रयोजनम्**—उक्तेषु प्रयोजनेषु संस्कृताध्ययनेन कानि प्रयोजनानि सिध्यन्ति, अत्र विषये इदम् निःसंकोचरूपेण कथयितुम् शक्यते यत् इदानीम् संस्कृतभाषाध्ययनसाध्यम् व्यावहारिकम् प्रयोजनम् नगण्यम् वर्तते, यतो हि इदानीम् विश्वे स्वयम् भारते वा कः अपि भूखण्डः प्रान्तः प्रदेशः वा एतादृशः नास्ति यद्वासिनाम् जनानाम् मातृभाषा व्यावहारिकी भाषा वा संस्कृतम् स्यात्, येन तैः सह संस्कृतभाषायाम् वार्तालापद्वारा विचाराणाम् आदानप्रदानाय विभिन्नव्यावहारिककार्यसम्पादनाय च संस्कृतभाषाध्ययनम् अनिवार्यम् स्यात्। सम्पूर्णे अपि विश्वे यत्र-कुत्र अपि निवसन्तः ये जनाः संस्कृतम् जानन्ति, तस्मिन् वार्तालापम् च कर्तुम् शक्नुवन्ति, ते अन्याम् अपि कांचन प्रचलिततराम् स्वकीयाम् परकीयाम् वा भाषाम् समीचीनतया जानन्ति, अतः तैः सह तस्याम् सौविध्येन वार्तालापः कर्तुम् शक्यते, तद्द्वारा च विभिन्नव्यावहारिककार्याणि सम्पादयितुम् शक्यन्ते, यथा च इदानीम् सम्पाद्यमानानि वर्तन्ते। अत्र विषये इयम् अन्या वार्ता वर्तते यत् विभिन्नेषु भूखण्डेषु प्रदेशेषु वा निवसताम् जनानाम् विभिन्नाः भाषाः वर्तन्ते, येन व्यवहारे किंचित् काठिन्यम् भवति, अतः यदि ते सर्वे अपि जनाः संस्कृतम् जानीयुः चेत् तस्मिन् सौविध्येन व्यवहारम् सम्पादयेयुः, किन्तु एकम् तु इदम् असम्भवम् अव्यावहारिकम् च प्रतीयते, अपरम् च इदम् कस्याः अपि अन्यस्याः भाषायाः विषये कथयितुम् शक्यते।

४—**संस्कृतभाषाध्ययनसाध्यम् शास्त्रीयम् प्रयोजनम्**—उक्तप्रकारेण यद्यपि संस्कृतभाषाध्ययनसाध्यम् व्यावहारिकम् प्रयोजनम् नगण्यम् अस्ति,

तथापि तदध्ययनसाध्यम् शास्त्रीयम् सैद्धान्तिकम् वा प्रयोजनम् विपुलम् वर्तते संस्कृतभाषा विश्वस्य प्राचीनतमा प्राचीनतमासु भाषासु अन्यतमा वा भाषा वर्तते । अतः तस्याः विश्वस्य अन्याभिः भाषाभिः सह भाषावैज्ञानिकरीत्या तुलनात्मकेन अध्ययनेन विपुलतया इदम् ज्ञातुम् शक्यते यत् तस्याः विश्वस्य अन्याभिः विभिन्नाभिः भाषाभिः सह कः सम्बन्धः वर्तते, तया अन्याभ्यः भाषाभ्यः कस्मिन् रूपे किम् दत्तम्, किम् वा ताभ्यः गृहीतम्, अथ च प्राचीनकाले वर्तमानानाम् संस्कृतभाषाभाषिणाम् पूर्वजानाम् इदानीम् ये परस्परभिन्न-भाषाभाषिणः वंशधराः वर्तन्ते, तेषाम् परस्परम् वस्तुतः के विभिन्नाः पूर्वोक्ताः धार्मिकादयः सम्बन्धाः सन्ति । यदि एतादृशम् ज्ञानम् सम्पद्येत चेत् विश्वे साम्प्रतम् या परस्परविघटनभावना अनैक्यभावना वा वर्तते, सा अधिकांशतः निराकृता स्यात्, सहास्तित्वभावना च प्रबलरूपेण जागृयात्, स्वयम् भारते च साम्प्रतम् या बङ्गादिषु विभिन्नेषु प्रदेशेषु निवसत्सु जनेषु परस्परम् अनैक्यभावना वर्तते, सा अपि पूर्णरूपेण निरस्ता स्यात् । राजनैतिकरूपेण विभिन्नाः भूखण्डाः प्रदेशाः वा भारतात् तथैव पूर्वम् पृथक् जाताः सन्ति यथा च वर्तमानकाले एव कतिपये प्रदेशाः 'पाकिस्तान' रूपेण पृथक् जाताः सन्ति । एषु परस्परम् भारतेन सह वा यत् वैमनस्यम् वर्तते तत् संस्कृताध्ययनेन सांस्कृतिकादिकम् ऐक्यम् अनुभूय सौकर्येण दूरीकर्तुम् शक्यते ।

५—**संस्कृतवाङ्मयाध्ययनसाध्यम् राष्ट्रीयम् प्रयोजनम्**—अनेन एव प्रकारेण संस्कृतभाषानिबद्धवाङ्मयाध्ययनसाध्यम् प्रयोजनम् विपुलम् अस्ति। सर्वप्रथमम् च एतादृशम् प्रयोजनम् संस्कृतनिबद्धस्य विपुलस्य वाङ्मयस्य संरक्षणम् अस्ति । कस्य अपि वाङ्मयस्य संरक्षणम् अध्ययनाध्यापनेन एव भवति । अध्ययनाध्यापनेन विना वाङ्मयम् लुप्तम् भवति, यथा संस्कृतस्य एव भूयः वाङ्मयम् लुप्तम् जातम् । यदि अध्ययनाध्यापनाभावात् अवशिष्टम् प्राचीनम् संस्कृतवाङ्मयम् लुप्तम् स्यात् तदा राष्ट्रगौरवम् राष्ट्रैश्वर्यम् च पूर्णतः नष्टम् भवेत् । इदानीम् तु भारतीयैः इदम् घोषयितुम् शक्यते घोष्यते च यत् तेषाम् वेदवाङ्मयम् विश्वस्य उपलब्धम् प्राचीनतमम् वाङ्मयम् अस्ति, यदाधारेण च इदम् कथयितुम् शक्यते यत् तेषाम् संस्कृतिः सभ्यता च अतीव प्राचीना वर्तते, पूर्वकाले ते असंस्कृताः असभ्याः वा न आसन्, अपि तु यदा विश्वस्य बहूनाम् राष्ट्राणाम् जन्म अपि न जातम् जातेषु अपि तेषु सम्यक् विवेकः एव न उत्पन्नः आसीत्, तदा भारतम् ज्ञान-विज्ञानयुक्तम् सत् विराजते स्म । सहैव च तस्य समीपे अन्यत् अपि विविध-विषयकम् ज्ञानविज्ञानपूर्णम् एतादृशम् प्राचीनम् वाङ्मयम् वर्तते यत् अस्य तथ्यस्य साक्षि वर्तते यत् भारतेन ज्ञानविज्ञानक्षेत्रे बहु आविष्कृतम्, बहु च अन्येभ्यः राष्ट्रेभ्यः दत्तम् । इत्थम् संस्कृतवाङ्मयसंरक्षणेन राष्ट्रगौरवम्

राष्ट्रैश्वर्यम् च संरक्षितम् भवति, अन्यथा विश्वस्य जनाः कथयिष्यन्ति यत् यथा आधुनिककाले भारतेन पाश्चात्त्यदेशेभ्यः बहु गृहीतम्, गृह्यते च, तथैव सदैव प्राचीनकालात् आरभ्य गृह्यते स्म। इत्थम् भारतम् प्राचीनकालात् आरभ्य एव दरिद्रम् उद्घोष्यते, पुनः किम् राष्ट्रगौरवम् अवशिष्टम् स्थास्यति एतद्विपरीतम्, यदि निष्ठया संस्कृतवाङ्मयाध्ययनम् भारतीयैः कृतम् स्यात् सहैव च तत्र आवश्यकतानुसारेण समयानुसारेण च प्रयत्नपूर्वकम् परिष्करणम् संवर्द्धनम् वा कृतम् स्यात् चेत् तदा यथा तैः पूर्वकाले विश्वाय बहु दत्तम् तथा इदानीम् अपि दातुम् शक्यते, इदम् कृत्वा च तैः प्राचीनकालात् समुपार्जिते राष्ट्रगौरवे काचन उल्लेखनीया वृद्धिः एव कर्तुम् शक्यते ।

**६—संस्कृतवाङ्मयाध्ययनसाध्यम् ज्ञानरूपम् सार्वजनीनम् प्रयोजनम्**· संस्कृतवाङ्मयाध्ययनस्य द्वितीयम् प्रयोजनम् तत्प्रतिपादितविभिन्नविषयाणाम् ज्ञानम् वर्तते । अस्मिन प्रयोजने एकम् तु भारतीयानाम् सार्वजनीनम् इदम् अवान्तरप्रयोजनम् समाविष्टम् वर्तते यत् ते ज्ञास्यन्ति यत् तेषाम् सांस्कृतिकः राजनैतिकः धार्मिकश्च इतिहासः कियत्प्राचीनः कीदृशश्च वर्तते, द्वितीयम् सार्वजनीनम् अवान्तरप्रयोजनम् इदम् ज्ञानम् वर्तते यत् तेषाम् पूर्वजैः ज्ञानविज्ञानक्षेत्रे विभिन्नानि अनुसन्धानानि विधाय कः निधिः तेषाम् कृते समर्पितः, कथम् च अधुना तदाधारेण एव तस्मिन् सम्वर्धनम् कृतम् स्यात् ।

**७—संस्कृतवाङ्मयाध्ययनसाध्यम् ज्ञानरूपम् वैयक्तिकम् प्रयोजनम्**— ज्ञानरूपस्य प्रयोजनस्य उक्तात् अवान्तरप्रयोजनद्वयात्मकात सार्वजनीनरूपात् अतिरिक्तम् इदम् अन्यवाङ्मयसामान्यम् वैयक्तिकम् अपि रूपम् वर्तते यत् संस्कृतवाङ्मयनिबद्धेषु विषयेषु यस्मिन् विषये यस्य अभिरुचिः स्यात् तस्य ज्ञानम् तेन तस्मात् प्राप्तव्यम् । सुदूरात् अतीतकालात् प्रवर्तमाने अद्यावधि च प्रचीयमाने संस्कृतवाङ्मये स्वभावत एव प्रतिपाद्यविषयाणाम् बाहुल्यम् वर्तते । धर्मशास्त्रम्, अर्थशास्त्रम्, काव्यशास्त्रम्, दर्शनशास्त्रम्, राजनीतिशास्त्रम्, ज्योतिःशास्त्रम्, आयुर्वेदशास्त्रम्, शिल्पशास्त्रम्, अन्यानि च यानि विविधानि वैज्ञानिकानि शास्त्राणि सन्ति, तैः विभिन्नैः शास्त्रैः सम्बद्धाः विभिन्नाःविषयाः, भाषाशास्त्र-व्युत्पत्तिशास्त्र-काव्यशास्त्र-नाट्यशास्त्र-तर्कशास्त्रादिसम्बद्धाश्च विभिन्नाः विषयाः, इतिहासपुराणकाव्यनाटककथाख्यायिकादिरूपाश्चः विभिन्नाः साहित्यिकग्रन्थाः संस्कृतवाङ्मये विद्यन्ते । यथारुचि यथापेक्षम् च तेषाम् अध्ययनम् जनैः कर्तुम् शक्यते । स्वाभीष्टानुसारेण च विविधानि धर्मार्थकाममोक्षादिरूपाणि प्रयोजनानि तैः साधयितुम् शक्यन्ते ।

अस्तु ! इत्थम् भाषावैज्ञानिकरीत्या संस्कृतभाषायाः अन्याभिः विभिन्नाभिः भाषाभिः सह तुलनात्मकेन अध्ययनेन पूर्वोक्तम् विविधम्

महोद्देश्यम् ज्ञानम् प्राप्तुम्, संस्कृतवाङ्मयसंरक्षणेन राष्ट्रगौरवम् राष्ट्रै-श्वर्यम् च संरक्षितुम्, भारतस्य प्राचीनम् पूर्वोक्तम् धार्मिकादिकम् इतिहासम् ज्ञातुम्, तुलनात्मकधर्मविज्ञानम् च परिज्ञातुम्, संस्कृतवाङ्मये प्रतिपादितानाम् विभिन्नानाम् वैज्ञानिकानाम् विषयाणाम्, अन्येषाम् च विभिन्नानाम् विषयाणाम् ज्ञानेन विविधान् लाभान् सम्पादयितुम्, अथ च सहैव प्राचीनाम् भारतीयाम् वैज्ञानिकीम् तदितराम् च बहुमुखीम् प्रतिभाम् द्रष्टुम् वैज्ञानिकेऽस्मिन् युगे अपि संस्कृताध्ययनम् परमावश्यकम् वर्तते, सामान्यतश्च तु तत् महाप्रयोजनम् वर्तते एव । फलतश्च इदानीम् इदम् कथयितुम् अपेक्षा न अवशिष्यते यत् उक्तानि विभिन्नानि उद्देश्यानि सम्पादयितुम अभिनवभारते संस्कृतज्ञानाम् परमावश्यकता वर्तते ।

# ३

## संस्कृताभ्युदयोपाय:

१—**भाषाभ्युदयस्य स्वरूपम्** —कस्याः अपि भाषायाः अभ्युदयः कथम् स्यात्, इति प्रश्नस्य समाधानार्थम् सर्वप्रथमम् इदम् विचारणीयम् भवति यत् भाषायाः अभ्युदयस्य किम् स्वरूपम् भवति, भाषायाः अभ्युदयेन किम् अभिप्रेयते वा । एवं लक्ष्यस्य स्वरूपे निर्धारिते सति तत्प्राप्तिसाधनानाम् विचारः अवसरप्राप्तः भवति, सहैव च सः सौविध्येन कर्तुम् शक्यते, एवम् निर्धारितानि साधनानि च तदा निश्चितरूपेण सफलतादायकानि सिद्धानि भवन्ति ।

कस्याः अपि भाषायाः अभ्युदस्य पूर्णरूपस्य विविधानि अवान्तराणि रूपाणि भवन्ति, यैः तत् पूर्णम् स्वरूपम् संघटितम् भवति । एषु अभ्युदयस्वरूपसंघटकेषु अवान्तररूपेषु प्रथमम् रूपम् स्वयम् भाषास्वरूपनिष्ठम् भवति अर्थात् सा भाषा स्वयम् एतावत्सम्पन्ना स्यात् यत् तस्याम् सर्वविधविषयप्रतिपादनक्षमता स्यात् । अस्मिन् रूपे भाषायाः शब्दकोशः व्याकरणम् च तदङ्गताम् सहकारिताम् वा भजेते । भाषायाः अभ्युदयस्य द्वितीयम् रूपम् वर्तते यत् सा केन अपि कारणेन लोकप्रिया सती लोके अधिकाधिकजनैः अध्ययनीया व्यवहरणीया च स्यात् । तृतीयम् रूपम् वर्तते यत् तस्याः वाङ्मयम् सर्वविधैः अपेक्षितैः विषयैः पूर्णम् स्यात्, सहैव च लोके जनानाम् स्वत एव एतादृशी रुचिः स्यात् यत् ते तस्याम् नवनवानाम् ग्रन्थानाम् रचनाम् कुर्युः, येन तस्याः वाङ्मयम् अभिनवानाम् अपि विषयाणाम् स्वस्मिन् समावेशेन उत्तरोत्तरम् सम्पन्नम् स्यात् ।

२—**संस्कृते भाषास्वरूपनिष्ठः अभ्युदयः**—यदवधि संस्कृते भाषाभ्युदयस्य स्वयम् भाषास्वरूपनिष्ठस्य रूपस्य सम्बन्धः अस्ति, तदवधि इदम् निस्सन्देहरूपेण कथयितुम् शक्यते यत् अभ्युदयस्य इदम् रूपम् संस्कृते पूर्वत एव प्राप्तम् वर्तते, अतः तस्य प्राप्त्यै कस्य अपि विशिष्टस्य प्रयासस्य आवश्यकता नास्ति । संस्कृतभाषा पूर्वत एव एतावत्सम्पन्ना वर्तते यत् तस्याम्

सर्वविधविषयाणाम् प्रतिपादनाय क्षमता अस्ति। तस्याः शब्दकोशः एतावद्-विपुलः वर्तते यत् कस्य अपि विषयस्य प्रतिपादनावसरे यदि कस्य अपि विशिष्टस्य अर्थस्य द्योतनाय शब्दस्य शब्दानाम् वा आवश्यकता अनुभूता स्यात् चेत् तदा एव सः शब्दकोशः स्वापरिमितभाण्डागारेण सह समुपस्थितः सन् स्वस्मात् यथेष्टशब्दग्रहणाय घोषणाम् करोति। अस्मिन् विषये तत्र किंचित् अपि दारिद्र्यम् नास्ति। यदि कदाचित् शब्दकोशसाहाय्ये प्राप्ते अपि काचित् न्यूनता अनुभूयेत चेत् व्याकरणम् तस्याः पूर्तये सदैव उपस्थितम् वर्तते। संस्कृतव्याकरणम् तु शब्दानाम् एतादृशी शक्तिपूर्णा कर्मशाला एव वर्तते यत् तस्याः आधारेण यथेष्टम् शब्दा निर्मातुम् शक्यन्ते। यदि पुनरपि आवश्यकता चेत् अवसरेषु प्राप्तेषु अन्याभ्यः भाषाभ्यः अपि शब्दाः ग्रहीतुम् शक्यन्ते, ये च मूलरूपे संस्कृतरूपे वा परिणताः सन्तः उपयोक्तुम् शक्यन्ते। तत्र न कापि हानिः, सर्वाः एव सजीवाः भाषाः इदं कुर्वन्ति, संभवतया संस्कृतेन अपि पूर्वम् इदम् कृतम् अस्ति। एवम् एतादृशरूपाभ्युदयाय कस्य अपि विशिष्टस्य उपायस्य आवश्यकता नास्ति।

**३—संस्कृते व्यावहारिकः अभ्युदयः**—भाषाभ्युदयस्य द्वितीयम् रूपम् संस्कृते अवश्यमेव इदानीम् नास्ति, सा इदानीम् लोकप्रिया अथ च अधिकाधिक जनैः अध्ययनीया व्यवहरणीया च न वर्तते। कस्याः अपि भाषायाः अभ्युदयस्य इदम् रूपम् तदा प्राप्तम् भवति यदा सा जनानाम् मातृभाषा स्यात् अथवा तस्याम् ताम् प्रति वा तेषाम् हृदये ममता स्यात्, अथवा सा राष्ट्रभाषा राजभाषा वा स्यात्, अथवा तस्याः वाङ्मयम् एतादृशम् स्यात् यत् तस्य अध्ययनम् तेषाम् पुरुषार्थसाधनाय विशेषतः अर्थसाधनाय अनिवार्यरूपेण आवश्यकम् स्यात्। फलतः संस्कृते अभ्युदयस्य इदम् रूपम् सम्पादयितुम् तत्सम्बन्धिन्यः उक्ताः स्थितयः परिस्थितयः वा उत्पादनीयत्वेन आवश्यकाः सन्ति।

**(अ) मातृभाषात्वपरिस्थितिः**—एतासु परिस्थितिषु मातभाषात्वपरिस्थितिः प्राथमिकरूपेण असंभवा एव वर्तते, अतः तस्याः उत्पादनाय तु कस्य अपि उपायस्य वार्ता एव न विचारणीया, यतो हि वर्तमानानाम् बालकानाम् सा मातृभाषा अतएव न भवितुम् शक्नोति, यतः सा तेषाम् जननीनाम् भाषा नास्ति। यदा वर्तमानाः मातरः पितरश्च संस्कृतभाषाभाषिणः भविष्यन्ति, तदैव भविष्यति जनिष्यमाणाः तेषाम् बालकाः संस्कृतभाषाभाषिणः भवितुम् शक्ष्यन्ति।

**(आ) ममत्वपरिस्थितिः राष्ट्रभाषात्वपरिस्थितिश्च**—भारते संस्कृतम् प्रति ममत्वपरिस्थितिः उत्पादयितुम् शक्यते, किन्तु इदम् कार्यम् तदा एव संभवम् वर्तते, यदा जनानाम् उद्वोधनम स्यात् यत् इयम् तेषाम् एव

वास्तविकी भाषावर्तते,तेषाम् पूर्वजाः इमाम् एव भाषाम् प्रयुक्तवन्तः, एवञ्च कस्याः अपि भाषायाः सम्पन्नता परःसहस्रेषु परःशतेषुवा वर्षेषु सम्पद्यते, पुनः एवं सम्पन्ना जाता च भाषा एकम् निधानम् इव भवति, किन्तु उपेक्षणेन तत् निधानम् नष्टम् भविष्यति, येन ते सम्पन्नभाषादरिद्राः भविष्यन्ति, अतः संस्कृतसमाना स्वकीया समृद्धा भाषा तैः न उपेक्षणीया, अपि तु अध्ययना- ध्यापनेनतस्याम् विविधव्यवहारेणच संरक्षणीया। वस्तुतः एतादृशम् उद्- बोधनम् विबुद्धानाम् भारतीयानाम् जनानाम् हृदये वर्तते अपि, किन्तु तेषाम् एतादृशी नैतिकी शक्तिः नास्ति यया ते स्वयम् एव स्वकीयाम् संस्कृतभाषाम् स्वीकृत्य तस्याःअध्ययनम् तस्याम् व्यवहारम् चसम्पादयेयुः, तत्फलस्वरूपञ्च राष्ट्रे वास्तविकम् तिरोहितम् ऐक्यम् पुनः स्थापयेयुः। अतः एतत्परिस्थिति- समुत्पादनाय अपि प्रयासः अकिंचित्करः एव भविष्यति। फलतः राष्ट्रभाषा- त्वपरिस्थितिसमुत्पादनप्रयासः अपि विफल एव भविष्यति। यतो हि यदि ममत्वपरिस्थितिः स्यात् चेत् राष्ट्रभाषात्वपरिस्थितिः स्वत एवसमुत्पद्येत, अतः यदि ममत्वपरिस्थितिः एव नास्ति, तदा राष्ट्रभाषात्वपरिस्थितिः केवलम् बलेन उत्पादयितुम् न शक्यते, अत एव संस्कृतस्य राष्ट्रभाषात्व- प्रस्तावः बहुजनासमर्थितः सन् अल्पजनसमर्थितः एव वर्तते। फलतश्च इदम् कथनम् आदर्शवाक्यमात्रम् एव प्रतिभाति यत् –'राष्ट्रभाषापदमारोढुं भारतेऽर्हा सुरभारती।'

(इ) **राजभाषात्वपरिस्थितिः**—राजभाषात्वपरिस्थितिसमुत्पादनम् सुकरम् वर्तते, एतेन च संस्कृतप्रचारः सौकर्येण भवितुम् शक्नोति। यथा आङ्ग्लभाषायाः राजभाषात्वे जाते जनाः ताम् भाषाम् अधीतवन्तः, तथैव ते संस्कृतम् अपि अध्येष्यन्ते, तत्र किंचित् अपि काठिन्यम् न भविष्यति। किन्तु शासनम् एतदर्थम् प्रस्तुतम् नास्ति, जनतायाः अपि विरोधः संभाव्यते, अतः एतदर्थम् अपि प्रयासः व्यर्थः एव भविष्यति।

(ई) **पुरुषार्थसाधनत्वपरिस्थितिः**—इदानीम् भाषाभ्युदयोक्तद्वितीय- रूपस्य अन्तिमा परिस्थितिः एव संस्कृतविषये विचारणीयत्वेन अवशिष्टा अस्ति। संस्कृतवाङ्मयाध्ययनम् यावत् पुरुषार्थसाधनभूतम् वर्तते, तावत् तत् तत्तत्पुरुषार्थाभीप्सुभिः अधीयते एव। प्राचीनकाले तदध्ययनम् सर्वपुरुषार्थ- साधनभूतम् आसीत्, अतः तदा तत् प्रायः सर्वैः अपि क्रियमाणम् आसीत्। इदानीम् तदध्ययने अर्थव्यतिरिक्तपुरुषार्थसाधनता तु विपुलरूपेण वर्तते, किन्तु अर्थसाधनता तत्र तादृशी नास्ति। फलतः धर्मकाममोक्षाभीप्सवः जनाः तु तत् कुर्वन्ति, किन्तु केवलम् अर्थस्य उपसकाः तत्र प्रायेण न प्रवर्तन्ते। इदानीम् तत्र अर्थसाधनता तु इयती एव वर्तते यत् कर्मकाण्डिनः पण्डिताः तदाधारेण कर्मकाण्डम् सम्पादयित्वा अर्थम् उपार्जयन्ति, ज्योतिर्विदश्च

ज्योतिःशास्त्रेण किंचित् उपार्जयन्ति, वैद्याः वा आयुर्वेदाध्ययनेन स्वजीविकाम् सम्पादयन्ति, अथवा संस्कृतशिक्षकाः विद्यालयेषु, महाविद्यालयेषु विश्वविद्यालयेषु वा संस्कृतशिक्षणम् कृत्वा वेतनभोगिनः सन्तः जीवनम् यापयन्ति । एतासु संस्कृताधारितासु वृत्तिषु कर्मकाण्डस्य भविष्यत् तु समीचीनम् न दृश्यते । सा वृत्तिस्तु, नष्टप्राया एव अस्ति, नापि च तत्र कर्मकाण्डिब्राह्मणपुत्राणाम् अभिनिवेशः एव वर्तते, अतः तत्र संस्कृताध्ययनम् लुप्तम् एव भविष्यति । फलतः अस्मिन् विषये इदम् आवश्यकम् वर्तते यत् प्रथमम् तु भारतीयज्योतिर्विज्ञानाय चिकित्साविज्ञानाय च शासनेन साहाय्यम् देयम्, येन तयोः विकासः स्यात् । जनतायाः तत्र अभिरुचिः अपि अस्ति, अतः तदध्ययनाय जनाः प्रोत्साहिताः भविष्यन्ति, तदुद्देश्येन च संस्कृताध्ययनम् स्वत एव भविष्यति । एवमेव शासनेन विद्यालयात् आरभ्य विश्वविद्यालयपर्यन्तम् पाठ्यक्रमे संस्कृतम् अनिवार्यम् कृतम् स्यात् । एतेन एकम् तु संस्कृतशिक्षकाः भवितुम् जनाः तत् अध्येष्यन्ते, द्वितीयम् भारतीयाः विद्यार्थिनः, ये इदानीम् स्वतस्तु कस्मिन् विषये अपि रुचिम् एव न दधते, संस्कृतस्य अनिवार्यपाठ्यत्वे तदध्ययनम् करिष्यन्ति, तृतीयम् अधीतसंस्कृताः विद्यार्थिनः स्वाधीतविशिष्टविषयेण समस्य विषयस्य प्रतिपादनम् संस्कृतवाङ्मये अनुसन्धाय तत् स्वकीयेन आधुनिकज्ञानेन पल्लवितम् करिष्यन्ति, येन अग्रे संस्कृतवाङ्मयस्य अर्थसाधनता वर्धिष्यते एव । ते विद्यार्थिनः संस्कृते एव नवीनविषयकान् नवीनान् ग्रन्थान् लिखेयुः, एतदर्थम् शासनेन पुरस्कारयोजना अपि प्रवर्तनीया । इदम् सुनिश्चितम् वर्तते यत् यावत्कालपर्यन्तम् संस्कृते अर्थसाधनता न समायास्यति, तावत् सा लोकप्रिया अथ च बहुजनानाम् अध्ययनीया व्यवहरणीया च न भविष्यति । अर्थसाधनता च तावत् न समायास्यति यावत् वर्तमानकालानुसारेण अर्थसाधनभूतस्य विषयज्ञानस्य समावेशः तत्र न भविष्यति, एतादृशस्य ज्ञानस्य समावेशः तत्र तावत् न भविष्यति, यावत् संस्कृतज्ञानेन सह तादृशविषयाणाम् ज्ञानम् अपि लेखकानाम् न स्यात् । इदानीम् स्थितिः इयम् वर्तते यत् संस्कृतज्ञानाम् तादृशविषयज्ञानम् नास्ति, तादृशविषयज्ञाश्च संस्कृतज्ञाः न सन्ति । इयम् स्थितिः संस्कृताभ्युदयाय अवश्यम् एव दूरीकरणीया । एतदर्थम् सर्वप्रथमम् संस्कृतज्ञैः एव अयम् प्रयासः कार्यः यत् ते विविधविज्ञानादिकान् विषयान् अधीत्य तेषाम् प्रतिपादनम् संस्कृते एवंविधरूपेण कुर्युः यत् तादृशम् प्रतिपादनम् अन्यत्र दुर्लभम् स्यात् । एतदर्थम् यद्यपि महतः त्यागस्य महत्याः च तपस्यायाः आवश्यकता भविष्यति, किन्तु अद्यत्वे एतादृशसंस्कृतसाहित्यनिर्माणस्य परमम् महत्त्वम् आवश्यकता च वर्तते, अथ च एतादृशसाहित्यनिर्माणम् संस्कृतज्ञानाम् परमम् कर्तव्यम् अस्ति ।

**४—संस्कृते सम्पन्नवाङ्मयनिष्ठः अभ्युदयः**—उक्तेन प्रकारेण भाषाभ्युदयस्य तृतीयम् रूपम् अपि संस्कृते सम्पद्यमानम् भविष्यति, अतः तत्र विषये अधिककथनस्य आवश्यकता नास्ति। संस्कृतवाङ्मयम् धर्मकाम मोक्षादिविषयैः पूर्वत एव पूर्णम् वर्तते, अर्थविषयेण अपि तत् पूर्वोक्तप्रकारेण सम्पन्नम् कर्तव्यम्। एतेन जनानाम् तदध्ययनाय रुचिः भविष्यति, एतादृश्याम् च जनरुचौ सम्पन्नायाम् लेखकानाम् स्वत एव एतादृशी रुचिः भविष्यति यत् ते संस्कृत नवनवानाम् ग्रन्थानाम् रचनाम् कुर्युः, येन संस्कृतवाङ्मयम् अभिनवविषयाणाम् समावेशेन उत्तरोत्तरम् सम्पन्नम् भविष्यति।

**५—संक्षेपतः संस्कृताभ्युदयोपायाः**—पूर्वोक्तप्रकारेण संस्कृतसंरक्षणार्थम् संस्कृताभ्युदयस्य उक्तविविधरूपसम्पादनार्थम् वा शासनस्य, संस्कृतज्ञानाम्, जनतायाश्च करणीयाः विभिन्नाः उपायाः इमे वर्तन्ते यत्—

१—शासनेन संस्कृताध्ययनम् अनिवार्यम् करणीयम्। अत्र विषये भारतीयायाः जनतायाः कः अपि विरोधः न भविष्यति, इति निश्चितम् वर्तते।

२—शासनेन संस्कृतग्रन्थलेखकेभ्यः पुरस्कारयोजना प्रवर्तनीया। संस्कृते लिखितानाम् अभिनवविषयकाणाम् ग्रन्थानाम् प्रकाशनम् अपि शासनेन कार्यम्, तदर्थम् साहाय्यम् वा देयम्।

३—ये संस्कृतज्ञाः अभिनवविषयाणाम् ज्ञानम् उपार्जयितुम् वाञ्छन्ति, अथवा ये अभिनवविषयज्ञाः संस्कृतज्ञानम् अभीप्सन्ति, ये च अग्रे अनुसन्धानम् कर्तुम् वाञ्छन्ति, तेभ्यः शासनेन पूर्णम् सर्वविधम् साहाय्यम् देयम्।

४—संस्कृतज्ञाः संस्कृतभाषायाम् सरलाम् कुर्युः, तद्व्याकरणम् च सरलम् कुर्युः, सरलायाम् संस्कृतभाषायाम् ग्रन्थान् लिखेयुः, सरलाम् च संस्कृताध्यापनशैलीम् विकासयेयुः, तस्यामेव च संस्कृताध्यापनम् कुर्युः।

५—जनता संस्कृते अभिरुचिम् दधती सती तदध्ययनम् कुर्यात्, संस्कृताध्ययनसम्वर्धनाय पूर्ववत् आर्थिकम् साहाय्यम् दद्यात्। सहैव इदम् कर्तुम् समर्था असमर्था वा सती अपि शासनस्य तदा कदापि विरोधम् न कुर्यात् यदा तत् संस्कृताध्ययनम् अनिवार्यम् कुर्यात्, अथ च संस्कृत संरक्षणहेतवे तस्याम् किंचित् करारोपणम् कुर्यात्।

एवं कृते सति संस्कृतस्य अभ्युदयः सुनिश्चितः वर्तते, अन्यथा चापि समयस्य प्रवाहः एव एतादृशः इदानीम् समागच्छन् वर्तते यत् संस्कृतस्य अभ्युदयः अवश्यम् एव भविष्यति, पुनः कथम् न तत्र सर्वैः यथाशक्ति सहयोगः प्रदेयः ?

## ४

# संस्कृतेः स्वरूपम्

१—**'संस्कृति' शब्दाभिधेयम्**—आधुनिककाले 'संस्कृति' शब्दः बाहुल्येन प्रयुज्यते। एतस्य शब्दस्य कः अर्थः भावः वा, इत्यत्र अपि विदुषाम् ऐकमत्यम् नास्ति। केन अपि विदुषा संस्कृतेः का अपि परिभाषा कृता, अन्येन विदुषा अन्या एवपरिभाषा दत्ता, इत्थम् संस्कृतेः स्वरूपम् सर्वसम्मतरूपेण स्पष्टम् नास्ति। अस्मिन् विषये सर्वप्रथमम् इदम् ज्ञातव्यम् अस्ति यत् यद्यपि 'संस्कृति' शब्दः संस्कृतभाषायाः शब्दः वर्तते, तस्य निष्पत्तिश्च संस्कृतव्याकरणानुसारेण 'सम्+कृ+क्तिन् (ति)' इति रूपे प्रदर्शयितुम् शक्यते, तथापि सः स्वेन आधुनिकेन अर्थेन सह कदा अपि प्राचीनकाले संस्कृतवाङ्मये न प्रयुक्तः जातः। आधुनिककाले अस्य शब्दस्य अनुकरणेन एव प्रचलितः अस्ति। आधुनिककाले यस्मिन् अर्थे अयम् शब्दः प्रयुज्यते, तस्मिन् तत्समाने वा अर्थे पूर्वम् संस्कृतवाङ्मये 'संस्कार' शब्दस्य 'कृष्टि' शब्दस्य वा प्रयोगः दृष्टिगोचरः भवति, यद्यपि 'संस्कार' शब्दस्य अर्थे प्रायः व्यष्टेः वैयक्तिकतायाः वा भावः प्रमुखः आसीत्, यदा च 'संस्कृति' शब्दस्य सामान्यतया प्रचलिते वर्तमाने अर्थे प्रायः समष्टेः सामाजिकतायाः जातीयतायाः वा भावः प्रमुखः वर्तते, तथापि आधारभूतः भावः प्रायः समानः एव वर्तते। फलतः प्राचीनपरम्परानुसारेण तु मानवजातेः कस्यचित् मानवसमुदायस्य वा व्यापकरूपेण सामान्यतया प्राप्तानाम् अनुभूतीनाम् अनुभवानाम् वा आधारेण जातानाम् संस्काराणाम् समष्टिः एव मानवजातेः तस्य विशिष्टस्य मानवसमुदायस्य वा 'संस्कृतिः' कथयितुम् शक्यते।

२—**संस्कृतिस्वरूपविश्लेषणम्**—संस्कृतेः किमपि लक्षणम् परिभाषा वा स्यात्, तत्र विषये ऐकमत्यम् भवेत् न वा, किन्तु पुनरपि तस्याः स्वरूपम् तु विश्लेषयितुम् शक्यते एव। प्रत्येकम् संस्कृतेः पूर्णम् स्वरूपम् तस्याः द्वाभ्याम् स्वरूपाभ्याम् संघटितम् भवति—बाह्यस्वरूपेण आन्तरिकस्वरूपेण च।

प्रत्येकम् संस्कृतेः सांस्कृतिकपरम्परायाः वा वाह्यम् स्वरूपम् तस्याः सः आचारः भवति यम् 'धर्मः' इति कथयन्ति। एवञ्च तस्याः आन्तरिकम् स्वरूपम् तस्याः सा विचारधारा भवति यस्याः आधारेण तस्याः धर्मः चलति। इयम् आधारभूता विचारधारा एव तस्याः परम्परायाः 'दर्शनम्' इति कथयितुम् शक्यते। प्रत्येकम् दर्शनस्य दार्शनिकविचारधारायाः वा स्वरूपस्य संघटनम् स्वसमयसिद्धे विज्ञाने आधारितैः तर्कैः प्राप्तस्य निष्कर्षस्य रूपे भवति, अथ च यतः विज्ञानम् मानवेन कृतानाम् अनुभवानाम् आधारे स्वम् स्वरूपम् प्राप्नोति, अतः स्पष्टम् यत् प्रत्येकम् संस्कृतेः सांस्कृतिकपरम्परायाः वा प्रवर्तनम् मानवस्य अनुभवानाम् आधारे एव भवति। इत्थञ्च मानवः एव प्रत्येकम् संस्कृतेः सांस्कृतिकपरम्परायाः वा प्रवर्तनस्य मूलम् अस्ति। तेन एव प्रत्येकम् संस्कृतेः सांस्कृतिकपरम्परायाः वा मूलस्तम्भाः—विज्ञानम्, दर्शनम्, धर्मश्च—जनिताः। विश्वस्य प्राचीनतमस्य वेदवाङ्मयस्य आधारभूता सांस्कृतिकपरम्परा अपि अस्य अपवादः नास्ति, सा अपि वैदिकानाम् ऋषीणाम् पूर्वजैः स्वानुभवानाम् आधारे प्रवर्तिता।

**३—संस्कृतिस्थापनाकारणम्, संस्कृतेः स्तम्भाश्च**—संस्कृतेः सांस्कृतिकपरम्परायाः वा उक्तानाम् मूलस्तम्भानाम्—विज्ञानदर्शनधर्माणाम्—जन्मनः मूलहेतुः मानवस्य सा स्वाभाविकी प्रवृत्तिः अस्ति या तम् स्वजीवनरक्षायै प्रेरयति। जीवनरक्षायाः अनया मूलप्रवृत्त्या प्रेरितेन सता मानवेन यदा विभिन्नानाम् जागतिकपदार्थानाम् सर्वप्रथमम् अनया दृष्ट्या अनुभवः कृतः यत् ते कियदवधि किंपर्यन्तम् वा जीवनरक्षायाम् सहायकाः भवितुम् शक्नुवन्ति, यदा च तेन तेषाम् पदार्थानाम् प्राथमिकानाम् सामान्यानाम् अनुभवानाम् उक्तदृष्ट्या कृतैः तेषाम् एव पौनःपुनिकैः विशिष्टानुभवरूपप्रयोगैः परीक्षणम् कृत्वा तेषाम् सम्बन्धे इदम् निश्चयात्मकम् प्रत्यक्षम् ज्ञानम् प्राप्तम् यत् अमुकः पदार्थः उक्तोद्देश्यपूर्तौ अमुकरूपे सहायकः भवितुम् शक्नोति, तदा विशिष्टानुभवरूपप्रयोगैः परीक्षितस्य अस्य निश्चयात्मकज्ञानस्य एव रूपे 'विज्ञानस्य' उद्भवः जातः। एवं 'विज्ञानम्' मानवस्य तदाप्रभृत्येव सहचरम् भवत् अस्ति यदाप्रभृति तेन विवेकः प्राप्तः, अस्य विज्ञानस्य आश्रयेण एव च सः आदिकालात् एव स्वकीयाम् जीवनयात्राम् प्रशस्ताम् कुर्वन् वर्तते।

यतः मानवाय बुद्धिरूपे एतादृशी असाधारणी शक्तिः प्राप्ता अस्ति यत् सः केन अपि विषयेण सम्बद्धानाम् स्वकीयानाम् विभिन्नानाम् अनुभवानाम् संयोजनम् विश्लेषणम् च कृत्वा तेषाम् आधारे तस्य विषयस्य सम्बन्धे एकम् निश्चयात्मकम् ज्ञानम् 'विज्ञानम्' वा प्राप्तुम् शक्नोति, अतः स्वभावतः सः विज्ञानप्रियः अस्ति। अत एव च सः स्वजीवनरक्षायाः स्वाभाविक्या प्रवृत्त्या प्रेरितः सन् 'विज्ञानम्' जनयित्वा इदम् स्वकीयम् जीवनसहचरम्

कृतवान् अस्ति। स्वभावतः विज्ञानप्रियत्वात् च सः प्रारम्भात् एव सम्पूर्णम् जगत् स्वयम् स्वम् आत्मानम् च स्वकीयायाः जिज्ञासायाः विषयम् कृतवान् अस्ति।

मानवस्य समक्षे एकतस्तु असंख्यैः रहस्यैः पूर्णम् इदम् निखिलम् जगत् सततम् वर्तमानम् अस्ति, अपरतश्च सः स्वयम् एव स्वस्मै रहस्यम् भवन् अस्ति। फलतःएकतस्तु सः जगतः वास्तविकस्वरूपस्य, उद्भवस्य, संचालनादिकस्य च सम्बन्धे यथातथम् ज्ञानम् प्राप्तुम् प्रयत्नशीलः भवन् अस्ति, अपरतश्च सः स्वस्य वास्तविकस्वरूपस्य, जन्मनः, मृत्योः, जीवनलक्ष्यस्य, स्वकर्तव्यस्य, जगता जगन्मूलेन च सह स्वसम्बन्धस्य ईदृशाम् अन्येषाम् च तथ्यानाम् विषये जिज्ञासुः भवन् आस्ते। सः स्वस्य जगतश्च सम्बन्धे प्राप्तानाम् अनुभवानाम् आधारे उक्तविषयाणाम् सम्बन्धे कंचन निष्कर्षम् प्राप्तुम् प्रयत्नम् कुर्वन् अस्ति। अस्मिन् प्रयत्ने यदवधि सः प्रयोगसाधितस्य परीक्षणस्य आधारे किञ्चन निश्चयात्मकम् ज्ञानम् प्राप्नोति, तदवधि सः विज्ञानस्य क्षेत्रे तिष्ठति, किन्तु यदा सः उक्तरूपे परीक्षणे स्वम् असमर्थम् अनुभूय पूर्वप्राप्ते विज्ञाने आधारितानाम् तर्काणाम् आश्रयम् गृह्णन् अग्रतः सरति तत्फलस्वरूपम् च कंचन निष्कर्षम् प्राप्य एकाम् विचारधाराम् संघटयति, तदैव सः स्वम् 'दर्शनस्य' क्षेत्रे प्रविष्टम् प्राप्नोति। यदा च सः अस्याः दर्शनरूपायाः विचारधारायाः आधारे एकम् विशिष्टम् आचारम् पालनीयत्वेन स्वीकरोति, तदैव सः स्वम् 'धर्मस्य' क्षेत्रे पश्यति।

यदा उक्तरूपा का अपि दर्शनस्वरूपा विचारधारा कस्य अपि व्यक्तिविशेषस्य विचारधारा न सती मानवजातेः कस्य अपि वर्गविशेषस्य वस्तु भवति, फलतश्च तस्याः आधारे तस्मिन् वर्गे समाजे वा व्यापकरूपेण कश्चन धर्मरूपः आचारः प्रचलितः भवति, तथा च एवम् आधारभूतायाः विचारधारायाः तदाधारितस्य आचारस्य च संस्काराः समाजे किंचित् रूढमूलाः भवन्ति, तदैव तेषाम् संस्काराणाम् समष्टिरूपे एका 'संस्कृतिः' सांस्कृतिकपरम्परा वा प्रवृत्ता स्थापिता वा भवति। एवम्, यथा च पूर्वम् एव उक्तम्, मानवजातेः कस्यचित् मानवसमुदायस्य वा व्यापकरूपेण सामान्यतया प्राप्तानाम् अनुभूतीनाम् अनुभवानाम् वा आधारेण जातानाम् विभिन्नानाम् संस्काराणाम् समष्टिः एव मानवजातेः तस्य विशिष्टस्य मानवसमुदायस्य वा 'संस्कृतिः' अस्ति।

# ५

## संस्कृतेः मूलस्तम्भाः[1]

**१—मूलस्तम्भाः तेषु च परस्परम् सम्बन्धः**—यद्यपि वर्तमानकाले केचन जनाः संस्कृतिमूलस्तम्भेषु—विज्ञाने दर्शने धर्मे च—परस्परम् विरोधम् मन्यन्ते, किन्तु वस्तुतः एषु कश्चन विरोधः नास्ति, अपि तु तद्विपरीतम् एतेषु परस्परम् सुसंश्लिष्टः साहचर्यसम्बन्धः आधाराधेयसम्बन्धश्च एव वर्तते । विज्ञानम्, दर्शनम्, धर्मश्च, इत्येतत्त्रयम् प्रत्येकम् संस्कृतेः सांस्कृतिकपरम्परायाः वा मूलस्तम्भत्रयम् वर्तते, फलतः एषु साहचर्य-सम्बन्धः एव विद्यते । सहैव च यतः प्रत्येकम् संस्कृतेः बाह्यम् स्वरूपम् तस्याः सः आचारः भवति यः 'धर्मः' इति कथ्यते, तस्याः आन्त-रिकम् स्वरूपम् च तस्याः सा विचारधारा भवति यस्याः आधारे धर्मः प्रचलति, एषा अधारभूता विचारधारा एव च तस्याः संस्कृतेः सांस्कृतिक-परम्परायाः वा 'दर्शनम्' कथ्यते, अतः दर्शनधर्मयोः आधाराधेयसम्बन्धः स्पष्टः एव वर्तते । एवमेव यतः प्रत्येकम् दर्शनस्य दार्शनिकविचारधारायाः वा स्वरूपस्य संघटनम् स्वसमकालसिद्धे विज्ञाने आधारितैः तर्कैः प्राप्तस्य निष्कर्षस्य रूपे भवति, अतः दर्शनस्य विज्ञानधारितत्वात् अनयोः अपि आधाराधेयसम्बन्धः स्पष्टः अस्ति । एवम् विज्ञानादर्शनधर्माणाम् परस्परम् आधाराधेयसम्बन्धेन हेतुना सुसंश्लिष्टता स्पष्टा वर्तते । यतश्च 'विज्ञानम् मानवेन प्राप्तानाम् अनुभवानाम् आधारे स्वम् स्वरूपम् प्राप्नोति, अतः तत् मानवानुभवाधारकम् वर्तते। एवञ्च स्पष्टम् यत् मानवः एव स्वसंस्कृति-प्रवर्तकः, स एव च स्वसंस्कृतेः मूलस्तम्भान् विज्ञानदर्शनधर्मान् स्वप्रयोजन-साधनाय जनितवान्, अतः एषु परस्परम् कश्चन विरोधः नास्ति, अपि तु आधाराधेयसम्बन्धेन सह सहभावः एव वर्तते ।

**२—विज्ञानदर्शनधर्माणाम् स्वरूपम्**—संस्कृतेःमूलस्तम्भानाम् विज्ञान-दर्शनधर्माणाम् जन्मनः मूलहेतुः मानवस्य सा स्वाभाविकी प्रवृत्तिः अस्ति

---

१—अथवा—विज्ञानम्, दर्शनम्, धर्मश्च ।

या तम् स्वजीवनरक्षायै प्रेरयति । जीवनरक्षायाः अनया मूलप्रवृत्त्या प्रेरितः सन् मानवः यदा विभिन्नान् जागतिकपदार्थान् सर्वप्रथमम् अनया दृष्टया अनुभूतवान् यत् ते किमवधि जीवनरक्षायाम् साहाय्यम् कर्त्तुम् शक्नुवन्ति, एवञ्चयदा सः तेषाम् प्राथमिकानाम् सामान्यानुभवानाम् उक्तदृष्टया कृतैः तेषाम् एव पौनःपुनिकैः विशिष्टानुभवरूपप्रयोगैः परीक्षणम् कृत्वा तेषाम् सम्बन्धे इदम् निश्चयात्मकम् प्रत्यक्षम् ज्ञानम् प्राप्तवान् यत् असौ पदार्थः उक्तस्य उद्देश्यस्य पूर्तौ अमुकरूपेण साहाय्यम् कर्त्तुम् शक्नोति, तदा विशिष्टानुभवरूपप्रयोगैः प्राप्तस्य अस्य निश्चयात्मकज्ञानस्य रूपे एव 'विज्ञानम्,उदभवत् । एवम् 'विज्ञानम्' मानवस्य तदाप्रभृति एव सहचरम् वर्तते, यदाप्रभृति सः विवेकवान् अस्ति, अस्य विज्ञानस्य एव आश्रयम् गृहीत्वा सः आदिकालात् एव स्वकीयाम् जीवनयात्राम् प्रशस्ताम् कुर्वन् सन् आगच्छन् अस्ति ।

यतः मानवस्य बुद्धिरूपे एतादृशी असाधारणी शक्तिः प्राप्ता अस्ति यत् सः केन अपि विषयेण सम्बद्धानाम् विभिन्नानाम् स्वानुभवानाम् संयोजन-विश्लेषणे कृत्वा तेषाम् आधारे तस्य विषयस्य सम्बन्धे एकम् निश्चयात्मकम् ज्ञानम् 'विज्ञानम्' वा प्राप्तुम् शक्नोति, अतः सः स्वभावत एव विज्ञानप्रियः अस्ति । अत एव च सः स्वजीवनरक्षायाः स्वाभाविक्या प्रवृत्त्या प्रेरितः सन् विज्ञानम् जनयित्वा एतत् स्वजीवनसहचरम् कृतवान अस्ति, स्वभावतः विज्ञान-प्रियत्वाच्च सः प्रारम्भात् एव निखिलम् जगत् स्वात्मानम् च स्वजिज्ञासा-विषयम् कृतवान् अस्ति । तस्य समक्षे एकतः असंख्यरहस्यपूरितम् निखिलम् जगत् सततम् वर्तमानम् अभवत्, अपरतश्च सः स्वयम् एव स्वस्मै रहस्यम् अस्ति । फलतः एकतस्तु सः जगतः वास्तविकस्वरूपोद्भवसंचालनादिकानाम् सम्बन्धे यथातथम् ज्ञानम् प्राप्तुम् प्रयत्नशीलः अभवत्, अपरतश्च सः स्वस्य वास्तविकस्वरूपजन्ममरणजीवनलक्ष्यस्वकर्तव्यादीनाम् जगता जगन्मूलेन च सह स्वसम्बन्धादीनाम् च विषये जिज्ञासुः भवन् आस्ते । सः स्वस्य जगतश्च सम्बन्धे प्राप्तानाम् अनुभवानाम् आधारे उक्तविषयसम्बन्धे कंचन निष्कर्षम् प्राप्तुम् प्रयत्नम् कुर्वन् आस्ते । अस्मिन् प्रयत्ने यदवधि सः प्रयोगैः कृतस्य परीक्षणस्य आधारे किमपि निश्चयात्मकम् ज्ञानम् प्राप्नोति, तदवधि सः विज्ञानस्य क्षेत्रे तिष्ठति, किन्तु यदा सः उक्तरूपे परीक्षणे स्वम् असमर्थम् अनुभूय पूर्व-प्राप्तविज्ञानाधारिततर्काणाम् आश्रयम् गृहीत्वा अग्रसरः भवति, तत्फलस्वरूपम् च कंचन निष्कर्षम् प्राप्य एकाम् विचारधाराम् स्थापयति, तदैव सः दर्शनस्य क्षेत्रे प्रविशति । अत्र आगत्य दर्शनम् विज्ञानस्य पूरकम् भवति, यतो हि यान् विषयान् विज्ञानम् प्रत्यक्षीकर्तुम् असमर्थम्, तान् दर्शनम् विज्ञानाधारिततर्कैः अनुमिमीते । जीवनस्य अन्तिमलक्ष्यम्, स्वकर्तव्यम्, जगता

जगन्मूलेन च सह स्वसम्बन्धः, इत्यादिकाः विषयाः विज्ञानसाध्याः न सन्ति, किन्तु एतेषाम् परिज्ञानेन विना जीवनम् लक्ष्यविहीनम् सत् समीचीनतया यापयितुम् न शक्यते, अतः केवलम् विज्ञानम् जीवनसाधनम् नास्ति। अत एव मानवः दर्शनस्य आश्रयम् गृहीतवान्। सः दर्शनेन उक्तविषयाणाम् समाधानम् प्राप्नोति। तदनुसारेण च सः विशिष्टम् आचारम् पालयति। यदा च सः दर्शनरूपायाः विचाधारायाः आधारे एकम् विशिष्टम् आचारम् पालनीयत्वेन अङ्गीकरोति, तदैव सः स्वम् 'धर्मस्य' क्षेत्रे प्राप्तम् पश्यति।

३—विज्ञानदर्शनधर्माणाम् अविरोधः—उक्तप्रकारेण विज्ञानम्, दर्शनम् धर्मश्च इत्येतेषाम् क्रमशः आधाराधेयरूपे परस्परम् घनिष्ठतया सम्बद्धत्वात् फलतश्च परस्परम् अविरुद्धत्वात् एकस्याम् सुदृढायाम् सांस्कृतिकपरम्परायाम् एतत्त्रयम् परस्पर विरुद्धम् न मन्यते। वस्तुतः एषु त्रिषु कश्चन विरोधः अस्ति एव नहि। दर्शनम्, तदाधारितः धर्मश्च परस्परव्यतिरिक्ते द्वे वस्तुनी न सन्तौ एकस्य एव वस्तुनः—विचारधारायाः—द्वे रूपे स्तः। यत्र दर्शनम् विचारधारायाः आधारभूतम् सैद्धान्तिकम् रूपम् अस्ति, तत्र धर्म तस्याः तदाधारितम् व्याहारिकम् रूपम् अस्ति। प्रत्येकम् धर्मः यस्य-कस्यचित् अपि दर्शनस्य उपरि आधारितः सन् एव स्वम् अस्तित्वम् रक्षितुम् शक्नोति। अनेन एव प्रकारेण विज्ञानम् दर्शनम् च परस्परव्यतिरिक्ते द्वे वस्तुनी न सती एकस्य एव वस्तुनः—निश्चयात्मकज्ञानस्य—द्वे भिन्ने रूपे स्तः। यत्र विज्ञानम् वस्तुनः विशिष्टानुभवरूपप्रयोगैः परीक्षितम् एकम् प्रत्यक्षम् निश्चयात्मकम् ज्ञानम् अस्ति, तत्र दर्शनम् उक्तरूपविज्ञानाधारिततर्कैः परीक्षितम् एकम् अनुमितिस्वरूम् निश्चयात्मकम् ज्ञानम् अस्ति। अत एव च यथा धर्मः स्वाधारभूते दर्शने एव स्थातुम् शक्नोति, तथैव दर्शनम् अपि स्वाधारभूते विज्ञाने एवस्थातुम् शक्नोति। विज्ञानम् दर्शनम् च, इत्युभयोः उक्तप्रकारेण निश्चयात्मकज्ञानत्वे अपि एतावत् तथ्यम् अवश्यम् अस्ति यत् यत्र विज्ञानस्य साक्षादनुभवरूपज्ञानत्वेन तस्मिन् रहस्यात्मकता न तिष्ठति, तत्र दर्शनस्य साक्षादनुभवरूपज्ञानत्वाभावात् तस्मिन् रहस्यात्मकता तिष्ठति एव, किन्तु यदा किमपि दर्शनम् साक्षादनुभवरूपम् ज्ञानम् जायते, तदा तत् 'विज्ञानस्य' स्वरूपम् धारयति। पुनश्च अस्याम् स्थितौ एतादृशम् अनुभवम् प्राप्ताय जनाय तस्य रहस्यात्मकता समाप्ता भवति, एवञ्च 'दर्शनम्' स्वस्य वास्तविके अर्थे 'दर्शनम्' भवति। कामम् एवम् कस्य एव विशिष्टस्य तत्त्वदर्शिनः सम्बन्धे स्यात्।

अस्तु! एवम् विज्ञानस्य दर्शनस्य धर्मस्य च क्रमशः आधाराधेयरूपे परस्परसम्बद्धत्वात् विज्ञानशून्यम् दर्शनम् अपि उपेक्षणीयम् भवति। दर्शनशून्यश्च धर्मः अपि उपेक्षणीयः भवति। अत एव एकस्याम् सुदृढायाम्

संस्कृतौ आधारभूतस्य विज्ञानस्य सिद्धान्तेषु परिष्कारे जाते तदाधारितस्य दर्शनस्य अपि सिद्धान्तेषु परिष्कारः भवन् आस्ते, एवञ्च आधारभूतस्य दर्शनस्य सिद्धान्तेषु परिष्कारे जाते तदाधारितस्य धर्मस्य स्वरूपे अपि परिष्कारः भवन् आस्ते। उदाहरणार्थम्, वेदगेया वैदिकी संस्कृतिः स्वजन्मकालात् एव विज्ञानम्, दर्शनम्, धर्मम् च परस्पराधाराधेयसम्बन्धेन सह स्वीकृत्य उक्तया प्रक्रियया तेषु क्रमशः परिष्करणहेतोः एकस्याः सुदृढायाः सजीवायाश्च संस्कृतेः रूपे अद्य अपि स्वकीयम् अस्तित्वम् सुरक्षितम् कुर्वती वर्तते, यदा च विश्वस्य अनेकाः संस्कृतयः नाममात्रावशेषाः एव जाताः, बह्वीनाम् च तु नाम अपि न अवशिष्टम् वर्तते। अस्तु ! इदानीम् उक्तकथनस्य प्रकाशे इदम् पुनरावर्तनीयम् नास्ति यत् विज्ञाने दर्शने धर्मे च परस्परम् कोऽपि विरोधः नास्ति, अपि तु तेषु सुसंश्लिष्टः आधाराधेयसम्बन्धः साहचर्यसम्बधश्च वर्तते।

## ६

# वैदिकसंस्कृतिः[1]

१-प्राचीनता—वैदिकसंस्कृतिः, यस्याः गौरवम् वेदेषु गीयते, विश्वस्य प्राचीनतमा संस्कृतिः वर्तते। यद्यपि अस्याः संस्कृतेः सांस्कृतिकपरम्परायाः वा सम्बन्धे इयम् भारतीया परम्परागता मान्यता अस्ति यत् इयम् वेदानाम् आधारे प्रवृत्ता अस्ति, अथ च यतः वेदाः अनादिकालीनाः अपौरुषेयाश्च सन्ति, अतः तेषाम् आधारे प्रवर्तमाना इयम् संस्कृतिः अपि अनादिकालीना अपौरुषेया चास्ति, किन्तु, यथा च अग्रे द्रक्ष्यते[2], वेदानाम् अनादिकालीनत्वम् अपौरुषेयत्वम् च तथ्यानूकूलम् सिद्धम् न भवति, अन्यथा चापि सामान्यतः कस्यापि वाङ्मयस्य अनादिकालीनत्वम् अपौरुषेयत्वम् च बुद्धिग्राह्यम् नास्ति, अतः अस्याः संस्कृतेः सांस्कृतिकपरम्परायाः वा सम्बन्धे प्रचलिता उक्ता मान्यता अपि वितथा सिध्यति। यथा च पूर्वम् उक्तम् अस्ति[3], प्रत्येकम् संस्कृतेः सांस्कृतिकपरम्परायाः वा प्रवर्तनम् मानवस्य अनुभवानाम् आधारे एव भवति, इत्थम् च मानवः एव प्रत्येकम् संस्कृतेः मूलम् अस्ति। तेन एव प्रत्येकम् संस्कृतेः मूलस्तम्भाः—विज्ञानम्, दर्शनम् धर्मश्च-जनिताः। वैदिकी संस्कृतिः अपि अस्य अपवादः भवितुम् न शक्नोति। सापि एतन्नियमानुसारेण वैदिकानाम् ऋषीणाम् पूर्वजैः स्वानुभावानाम् आधारे प्रवर्तिता सती अस्तित्वम् प्राप्तवती सिध्यति।

अपि च, यथा प्रत्येकम् वाङ्मयम् स्वकाले पूर्वतः प्रचलिताः विभिन्नाः मान्यताः पश्चात् अभिव्यनक्ति, तथैव श्रुतिवाङ्मयस्य विभिन्नाः अंशाः—मन्त्राः, ब्राह्मणानि, आरण्यकानि, उपनिषदः—अपि स्वस्वकालेषु पूर्वतः प्रचलिताः मान्यताः पश्चाद् अभिव्यञ्जन्ति। अत एव च यथा प्रत्येकम् वाङ्मयम् स्वेन अभिव्यक्तासु पूर्वप्रचलितासु मान्यतासु आधारितत्वहेतोः ताभ्यः उत्तरवर्ति भवति, तथैव श्रुतिवाङ्मयस्य विभिन्नाः अंशाः अपि स्वैः

---

१—अथवा—वैदिकः धर्मः। २—वेदानाम् उद्भवः (आ) तथ्यानुकूलम् मतम् इतिशीर्षकः निबन्धः। ३—पृष्ठ १७।

अभिव्यक्तासु पूर्वप्रचलितासु मान्यतासु आधारितत्वहेतोः ताभ्यः उत्तरवर्तिनः सन्ति। एवम् स्पष्टम् अस्ति यत् श्रुतिवाङ्मये अभिव्यक्तानाम् मान्यतानाम् समष्टिभूता सा संस्कृतिः सांस्कृतिकपरम्परा वा, या स्वकीयस्य सर्वप्रथमस्य वाङ्मयस्य 'वेदस्य' नाम्नः आधारे 'वैदिकसंस्कृतिः', 'वैदिकपरम्परा' वा इतिनाम्ना प्रसिद्धा अस्ति, वेदेभ्यः अपि पूर्ववर्तिनी अथ च एषाम् रचनायाः आधारभूता अस्ति। शब्दान्तरेषु, 'वैदिकी संस्कृतिः' वेदानाम् दानम् नास्ति, अपि तु स्वयम् वेदाः एव अस्याः दानम् सन्ति।

एतदतिरिक्तम्, स्वयम् वेदानाम् साक्ष्येण अपि इदमेव ज्ञातम् भवति यत् इयम् परम्परा वेदानाम् आधारे न प्रवृत्ता, अपि तु तेषाम् उद्भवात् अपि पूर्वम् सुदूरे अतीतकाले प्रवृत्ता आसीत्। यथा च 'ये नः पूर्वे पितरः सोम्या-सोऽनूहिरे सोमपीथं वसिष्ठाः' (ऋ० वे० १०।१५।८, य० वे० १९।५१) इत्यनेन स्पष्टः संकेतः प्राप्यते यत् अस्य मन्त्रस्य प्रणेतुः ऋषेः वसिष्ठगोत्रोत्पन्नाः एतादृशः 'पूर्वे' पितरः अपि भूतवन्तः सन्ति ये सोमपीथस्य अर्थात् सोम-पानस्य आयोजनम् कुर्वन्तः आसन्, अपि च 'त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः' (ऋ० वे० ९।९६।११, य० वे० १९।५३) इत्य-नेन ज्ञातम् भवति यत् अस्य मन्त्रस्य प्रणेतुः ऋषेः 'पूर्वे' पितरः सोमसाध्यानि कर्माणि सम्पादितवन्तः, वैदिकमन्त्राणाम् रचनायाः पूर्वमेव सोमपानस्य अन्येषाम् च सोमसाध्यानाम् यज्ञादिकर्मणाम् सम्पादनस्य परम्परा प्रवृत्ता अभवत्। एतेषाम् एव 'पूर्वषाम्' पितृजनानाम् परम्पराप्रवर्तकरूपे 'इदं नमः ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः' (ऋ० वे० १०।१४।१४) इत्यादि-मन्त्रैः महत्या श्रद्धया विनम्रतया च सह स्मरणम् कृतम् अस्ति, अथ च एषाम् मन्त्राणाम् प्रणेतृभिः ऋषिभिः इदम् स्पष्टतः कथितम् अस्ति यत् यस्मिन् 'पथिनि' अर्थात् पद्धतौ मार्गे वा ते प्रवर्तमानाः सन्ति, तस्य प्रस्तो-तारः ते स्वयम् न सन्ति, अपि तु तेषाम् 'पूर्वे' पितरः पूर्वजाः वा ऋषयः सन्तिः। उक्तेषु मन्त्रेषु इदम् तथ्यम् अपि ध्येयम् अस्ति यत् यदा सर्वेषाम् अपि पितरः पूर्वजाः वा पूर्ववर्तिनः एव भवन्ति, पुनरत्र तेभ्यः 'पूव' इति विशेषणम् कथम् दत्तम् अस्ति ? फलतः अनेन विशेषणेन स्पष्टम् भवति यत् अत्र उक्तानाम् कर्मणाम् कर्त्तारः ये पितरः पूर्वजाः वा निर्दिष्टाः सन्ति, ते सुदूरे अतीतकाले अभवन्। इत्थम् च वेदगेया सांस्कृतिकपरम्परा वेदेभ्यः सामान्यतः पूर्ववर्तिनी एव नास्ति, अपितु तेषाम् उद्भवात् पूर्वम् सुदूरे अतीत-काले प्रवृत्ता भवन्ती सिध्यति। एवम्, इयम् वेदसमेतस्य समस्तस्य श्रुतिवाङ्-मयस्य सुदूरपूर्ववर्तिनी आधारभूता च गेया परम्परा अस्ति, इति हेतोः अस्मिन् अर्थे 'वैदिकपरम्परा' न कथयितुम शक्यते यत् इयम् वेदेभ्यः प्रसूता प्रवृत्ता वा तुअभव, अपि तु केवलम् अस्मिन् अर्थे कथयितुम् शक्यते यत् कामम् पश्चात्

अस्याः गौरवगानम् ब्राह्मणारण्यकोपनिषत्सूत्रस्मृतिपुराणादिभिः विभिन्नैः ग्रन्थैः कृतम्, किन्तु पुनरपि केवलम् वेदैः एव अस्यै सर्वप्रथमम् वाङ्मय्याः अभिव्यक्तेः दत्तत्वात् इयम् मूलतः 'वेदगीता परम्परा' अस्ति, फलतः वेदेषु अस्तित्वम् प्राप्तवत्सु सत्सु अस्याः अग्रिमः विकासः एषाम् एव आधारे जातः अस्ति । अस्तु ! एवम् वैदिकी संस्कृतिः वेदवाङ्मयस्य आधारभूता अस्ति, अथ च यतः वेदवाङ्मयम् विश्वस्य प्राचीनतमम् वाङ्मयम् अस्ति, अतः तस्य अपि आधारभूता इयम् संस्कृतिः सुतरान् विश्वस्य प्राचीनतमा संस्कृतिः सिध्यति । वेदवाङ्मयम् कियत्प्राचीनम् अस्ति, इत्येव यदा आधुनिकः इतिहासः ज्ञातुम् न अशक्नोत्, तदा तदाधारभूता 'वैदिकसंस्कृतिः' कियत्प्राचीना, इति तु नितराम् आधुनिकेन इतिहासेन ज्ञातुम् अशक्यम् ।

**२—स्वरूपम्—(अ) विचारधारा**—यथा च पूर्वम् उक्तम्[1], प्रत्येकम् संस्कृतेः सांस्कृतिकपरम्परायाः वा आधारभूता एका तत्कालीनविज्ञानाधारिता दार्शनिकविचारधारा भवति । फलतः वैदिकसंस्कृतेः अपि आधारभूतया कयाचित् दार्शनिकविचारधारया भाव्यम्, यस्याः स्वरूपम् कामम् विकसितरूपे एव आस्ताम्, वैदिकमन्त्रैः ज्ञातुम् शक्यते । वैदिकमन्त्रेषु अभिव्यक्तायाः दार्शनिकविचारधारायाः विभिन्नेषु स्वरूपेषु ध्यानदानेन इदम् तथ्यम् सर्वप्रथमम् स्पष्टतः ज्ञातम् भवति यत् तेषु कुत्रापि इदम् भौतिकम् जगत् स्वरूपेण स्वभौतिकशक्त्या एव प्रतिष्ठितम् न अमन्यत, अपि तु कस्याञ्चित् देवादिकायाम् अतिभौतिकशक्त्याम् एव प्रतिष्ठितम् अमन्यत । फलतः अस्याम् संस्कृतौ शुष्काय भौतिकवादाय कदापि प्रश्रयः दीयमानः न दृश्यते ।

वैदिकविचारधारायाः यानि विभिन्नानि स्वरूपाणि उपलभ्यन्ते, तानि मुख्यतः त्रिषु वादेषु—देववादः, पुरुषवादः, तत्त्ववादश्च—अन्तः स्थापयितुम् शक्यन्ते । एषु 'देववादस्य' स्वरूपम् 'बहुदेववादः' अस्ति, यश्च रूपद्वये—देवातिदेववादीयः बहुदेववादः, एकाधिदेववादीयः बहुदेववादः—प्राप्यते । अनयोः प्रथमरूपस्य अनुसारेण स्वाम् स्वाम् स्वतन्त्राम् सत्ताम् दधतः विभिन्नाः देवाः निमित्तकारणरूपे जगतः विभिन्नानाम् अंशानाम् उत्पादकाः, धारकाः संचालकाश्च मताः सन्ति, अथ च अनिश्चयात्मकरूपेण कदापि कोऽपि देवः, कदापि च कोऽपि, अन्यदेवातिशायी उत्कृष्टश्च घोषितः अस्ति । अपरस्य रूपस्य अनुसारेण देवानाम् बहुत्वे यथावत् स्वीकृतेऽपि, ते स्वतन्त्रसत्तारूपाः न मताः, अपि तु निश्चयात्मकरूपेण एकेन अधिष्ठात्रा देवेन अधिष्ठिताः मताः सन्ति । अयम् अधिष्ठाता देवश्च केवलः निमित्तकारणरूपे सम्पूर्णस्य जगतः उत्पादकः, धारकः, संचालकश्च मतः ।

---

१—पृष्ठ १७ ।

'पुरुषवादस्य' अनुसारेण केवलम् एकम् अनन्तम् महामहिमव्यक्तित्वम् सर्वेश्वरम् उपादानकारणरूपे जगन्मूलम् च अमन्यत्, यच्च स्वस्मात् सर्वम् उद्भाव्य सर्वरूपम् विश्वरूपम् वा भवति । इदम् व्यक्तित्वम् 'देवः' न कथितम्, अपि तु 'पुरुषः' कथितम् अस्ति ।

'तत्त्ववादस्य' अनुसारेण देवः पुरुषः वा इव किमपि व्यक्तित्वम् नाह, अपि तु एका व्यक्तित्वविहीना परा सत्ता सम्पूर्णस्य जगतः एकमात्रम् मूलम् अमन्यत । इयम् परा सत्ता कस्मिँश्चिद् विशिष्टरूपे निर्देश्या न मता, अतः सा सामान्यतः 'तत्' कथिता । इदमेव 'तत्' अग्रे परमात्मतत्त्वरूपे अनुभूतम् अभवत् । एवम् वैदिकविचारधारा बहुदेववादात् आरभ्य क्रमशः विकसन्ती दार्शनिकतत्त्ववादे परिणता सती आध्यात्मिकी जाता ।

**(आ) धर्मः**—विचारधारायाः उक्तविकासानुरूपम् तदाधारिते तद्-व्यावहारिकरूपे च धर्मे अपि तदनुरूपम् क्रमशः विकासः जातः। विचारधारायाः मूलरूपस्य देववादस्य उक्तानाम् विभिन्नानाम् रूपाणाम् काले धर्मस्य मुख्यम् रूपम् देवस्तवनम् देवयजनम् च आसीत् । एवञ्च वैदिकी संस्कृतिः मूलतः देवस्तवनरूपा देवयजनरूपा च अस्ति । अस्याः इदम् रूपम् आधारभूतायाः मूलविचारधारायाः विकासस्य अनुसारेण विकसत् अपि यस्मिन् कस्मिन् रूपे सदैव अतिष्ठत्, इदानीम् अपि वर्तते । यदा देववादस्य विकासः पुरुषवादे जातः, तदा धर्मेऽपि क्रान्तिः जाता । 'सर्वम् पुरुषः वर्तते, अतः पुरुषेण एव पुरुषः इज्यते, न तु केन अपि कोऽपि तदन्यः देवः इज्यते, फलतश्च कस्मात् किम् याच्येत' इत्यादिस्वरूपा भावना यज्ञादिधर्माचरणे प्रबला जाता, येन शनैःशनैः यज्ञादिकानाम् स्वरूपम् भौतिकात् बाह्यात् वा सामग्रीमयात् प्रायः आध्यात्मिकम् प्रति प्रस्थितम् । तत्त्ववादविचारधारायाम् च प्रवृत्तायाम् सत्याम् यज्ञादिकर्मसम्पादनस्थाने तत्त्वचिन्तनम् प्रति प्रवृत्तिः जाता, या च अग्रे अध्यात्मचिन्तनरूपे विकसिता । फलतः तत्त्वज्ञानाय आध्यात्मिकज्ञानाय वा तपोध्यानसमाध्यादीनि धर्मरूपाणि साधनानि विकसितानि । अत्र आगत्य वैदिकसंस्कृतिः पूर्णतः विकसिता जाता देवस्तवनरूपा देवयजनरूपा च सती तत्त्वज्ञानोद्देश्यकतपोध्यानसमाध्यादिरूपा अपि अभवत् ।

पुनः अग्रे वैदिकसंस्कृतौ अनेकानि अवान्तररूपाणि विकसितानि, किन्तु अद्यावधि तस्याः इदमेव मुख्यम् स्वरूपम् अस्ति यत् एकतस्तु विभिन्नानाम् देवानाम् सत्ताम् स्वीकृत्य अपि एकस्य देवाधिदेवस्य जगदीश्वरस्य सत्ता स्वीक्रियते, फलतश्च स्वतन्त्ररूपेण अथ च सर्वेषु धार्मिककृत्येषु गृह्यकृत्येषु च विभिन्नानाम् देवानाम् देवाधिदेवस्य जगदीश्वरस्य च एकस्य देवस्य रूपे एव यजनस्तवनादिकम् क्रियते । अपरतश्च जगदीश्वरम् परमात्मानम् मत्वा तेन सह स्वात्मनः पूर्वतः स्थितस्य आधात्मिकसम्बन्धस्य सा-

क्षात्काराय विभिन्नानि श्रवणमननिदिध्यासनादीनि, शमदमादीनि, तपोऽनुष्ठानादीनि च साधनानि सम्पाद्यन्ते। मुख्यस्वरूपस्य इदम् रूपद्वयम् अपि इदानीम् अविद्धरूपेण परस्परसमन्वितम् वर्तते, किन्तु पूर्वस्मात् रूपात् द्वितीयम् रूपम् सर्वसम्मतरूपेण श्रेयः ज्यायः वा स्वीक्रियते।

अस्तु! उक्तप्रकारेण वैदिकसंस्कृतिविषये संक्षेपतः इदम् कथयितुम् शक्यते यत् वैदिकी संस्कृतिः विश्वस्य प्राचीनतमा एका एतादृशी संस्कृतिः अस्ति यत् या स्वजन्मनः आरभ्य कदापि भौतिकी न सती, अपि तु सदैव अतिभौतिकशक्तौ विश्वासम् दधती, क्रमशः स्वस्वरूपविकासान् अनुभूय पूर्णतः आध्यात्मिकी जाता सती विराजते। आध्यात्मिकत्वात् च अस्याम् संस्कृतौ यत् अन्यत् वैशिष्ट्यम् वर्तते, तत् अग्रे अपि द्रष्टुम् शक्यते।[1]

---

१—'भारतीयसंस्कृतिः' इतिशीर्षके निबन्धे।

७

# भारतीयसंस्कृतिः

**१—प्रास्ताविकम्**—यद्यपि विगते निबन्धे [1]चर्चिता वैदिकी संस्कृतिः भारतीयसंस्कृतेः एकम् आधारभूतम् मूलम् प्राचीनतमम् च स्वरूपम् अस्ति, तथापि केवलम् सा एव समग्रा भारतीया संस्कृतिः नास्ति। भारतीयसंस्कृतिः व्यापिका सती वैदिकीम् संस्कृतिम् स्वमुख्याङ्गरूपे दधती सती अन्यासाम् अपि संस्कृतीनाम् विभिन्नानि तत्त्वानि स्वस्याम् समावेशयन्ती विकासम् प्राप्नुवती वर्तते, अतः एतस्याः वैदिकसंस्कृतेः पृथक् चर्चा आवश्यकी भवति।

यद्यपि सर्वा अपि मानवजातिः समष्टिरूपेण एका एव वर्तते, फलतश्च सर्वेषाम् मानवानाम् संस्कृतिः या 'मानवसंस्कृतिः' इति उच्यते, स्वकीये मूलस्वरूपे अभिन्नतया एका एव अस्ति, तथापि यतो हि सा मानवसंस्कृतिः विभिन्नेषु भूखण्डेषु विविधरूपैः सह विकसिता वर्तते, अतो हि सा विविध-रूपयुक्ता विविधैः नामभिः अभिधीयते, विविधम् च रूपगतम् वैशिष्टचम् भजते। अस्मिन् विश्वे व्यापिकायाः मानवसंस्कृतेः यानि प्रमुखानि रूपाणि वर्तन्ते, तेषु तत् रूपम् येन युक्ता सती सा 'भारतीयसंस्कृतिः' इति अभिधी-यते, स्वकीयम् असाधारणम् वैशिष्टचम् धत्ते। इदम् वैशिष्टचम् एव भारतीयसंस्कृतये अन्याभ्यः मानवसंस्कृतिरूपभूताभ्यः विभिन्नाभ्यः संस्कृ-तिभ्यः पृथक् महत्त्वपूर्णम् स्थानम् ददाति।

**२—प्राचीनता**—भारतीयसंस्कृतेः स्वरूपम् स्वरूपाधारभूतम् तत्त्वम् वा किमस्ति, किम् वा तस्याः वैशिष्टचम् अस्ति, इत्यादिकथनात् पूर्वम् तस्याः विषये सर्वप्रथमम् इदम् वक्तव्यम् अस्ति यत् सा विश्वस्य प्राचीनतमा प्राचीनतमासु वा अन्यतमा संस्कृतिः अस्ति। यथा च पूर्वम् दृष्टम् अस्ति[1], वैदिकसंस्कृतिः वेदरचनायाः आधारभूता सती वेदेभ्यः अपि पूर्वकालीना वर्तते, एवञ्च यदा विश्वस्य प्राचीनतमम् वाङ्मयम् वेदवाङ्मयम् एव कदा उद्भूतम्, इति आधुनिकेन इतिहासेन इदानीम् अपि ज्ञातुम् न शक्यम् तदा

---

१—पृष्ठ २३-२५।

तस्य अपि आधारभूता संस्कृतिः कदा प्रवृत्ता अभवत्, इति तु नितराम् तेन ज्ञातुम् अशक्यम्। यतो हि इयम् वैदिकसंस्कृतिः भारतीयसंस्कृतेः मूलम् प्राथमिकम् वा स्वरूपम् वर्तते, अर्थात् भारतीयसंस्कृतिः वैदिकसंस्कृतिरूपे एव सर्वप्रथमम् प्रवृत्ता अभवत्, अतः वैदिकसंस्कृतिप्राचीनता एव अस्याः प्राचीनता अस्ति। फलतश्च अस्याः प्रवर्तनकालः आधुनिकेतिहासस्य ज्ञानस्य अविषयः एव अस्ति। केवलम् तस्याः विकासः ऐतिहासिकी गतिः वा इतिहासेन ज्ञातुम् पार्यते।

३—**इतिहासः**—भारतीयसंस्कृतिः मूलरूपे आधारभूतरूपे वा वैदिकसंस्कृतिः आर्यसंस्कृतिः वा अस्ति, वैदिकसंस्कृतिरूपेण एव सह इयम् प्रवृत्ता। वैदिकसंस्कृतिश्च अनेकानि विकासरूपाणि अनुभूतवती। अस्याः एव एकम् विकासरूपम् तत् संभाव्यते यच्च सिन्धुतटसभ्यतानाम्ना प्रसिद्धम् वर्तते। यदि सिन्धुतटसभ्यता वैदिकसंस्कृतिविकासरूपम् न मन्यते चेदपि सा भारतीयसंस्कृतिविकासरूपम् तु अस्त्येव। मूलतः वैदिकसंस्कृतिरूपायाम् भारतीयसंस्कृतौ कदाचित् भिक्षुसंस्कृतितत्त्वानि सन्निविष्टानि सन्ति संभाव्यन्ते येन तत्र भिक्षाचर्यायाः संन्यासाश्रमादिकस्य च प्रचलनम् जातम्। भिक्षुसंस्कृतिश्च प्रायः विलीना जाता। पुनः तत्र आगमिकसंस्कृतेः विभिन्नानि तत्त्वानि समागतानि, संस्कृतिश्च एषा भारतीयसंस्कृतौ पूर्णतः विलयम् प्राप्ता, येन भारतीयसंस्कृतिः निगमागममूलकरूपेण प्रसिद्धा। अस्य एव रूपस्य दर्शनम् प्रायः पुराणेषु जायते। पुनः तत्र जैनसंस्कृतिबौद्धसंस्कृतिरूपद्वये श्रमणसंस्कृतितत्त्वानि समागतानि। श्रमणसंस्कृतिश्च पूर्वचर्चितायाः भिक्षुसंस्कृतेः एव रूपान्तरम् संभाव्यते। अत्रावधि चर्चिताः विभिन्नाः संस्कृतयः, यासाम् विभिन्नानि तत्त्वानि भारतीयसंस्कृतौ समाविष्टानि, भारतीयाः एव आसन्। किन्तु, एतदनन्तरम् तत्र कासांचित् विदेशीयसंस्कृतीनाम् अपि कानिचित् तत्त्वानि विभिन्नेषु कालेषु समागतानि, यासु यवनानीसंस्कृतिः प्रामुख्यम् भजते। अन्याश्च शकहूणादिसंस्कृतयः सन्ति। तदनन्तरम्, मुस्लिमसंस्कृतेः अपि कश्चन प्रभावः भारतीयसंस्कृतौ पतितः। आधुनिककाले च तत्र पाश्चात्यसंस्कृतेः भूयान् प्रभावः पतितः दृश्यते, यश्च उत्तरोत्तरम् वर्धमानः एव वर्तते। इदानीम् दशा इयम् जाता यत् भारतीयसंस्कृतितत्त्वानि प्रायः उपेक्षादृष्ट्या दृश्यन्ते, यदा च पाश्चात्यसंस्कृतेः तत्त्वानि बहुमूल्यानि मन्यन्ते। किन्तु इयम् दशा चिरम् न स्थास्यति। भारतीयसंस्कृतिः स्वस्वभावानुरूपम् कानिचित् उत्तमानि पाश्चात्यसंस्कृतितत्त्वानि स्वस्याम् संनिवेश्य स्वकीयैः चिरन्तनैः मूलतत्त्वैः सह पूर्ववत् विराजमाना स्थास्यति। सा कुत्रापि विलयम् प्राप्तुम् न शक्नोति, अपि तु अस्याः एतादृशी चिरन्तनी शक्तिः अस्ति यत् सा अन्याः एव संस्कृतीः तासाम् तत्त्वानि वा स्वस्याम् निधाय यथावत्

जीवन्ती तिष्ठति। अस्याः शक्तेः प्रभाववशात् एव इयम् स्मरणातीतात् सुदूरात् कालात् आरभ्य अद्यावधि बहून् प्रहारान् सोढ्वा अपि जीवन्ती राजते।

**४—स्वरूपाधारभूतम् तत्त्वम्**—भारतीयसंस्कृतेः स्वरूपाधारभूतम् तत्त्वम् इदम् वर्तते यत् इयम् अध्यात्ममूलिका अस्ति। यथा च पूर्वम् उक्तम्,[1] कापि संस्कृतिः कस्यचित् मानवसमुदायस्य व्यापकरूपे सामान्यतया प्राप्तानाम् अनुभूतीनाम् अनुभवानाम् वा आधारेण जातानाम् संस्काराणाम् समष्टिः एव भवति। विश्वस्य अनेकेषु भूखण्डेषु निवसद्भिः मानवैः यदा अस्य प्रत्यक्षगोचरस्य भौतिकस्य जगतः जागतिकानाम् च भौतिकानाम् पदार्थानाम् एव अनुभूतिः प्राप्ता, तदा भारतवर्षे निवसद्भिः आर्यैः अस्मात् प्रत्यक्षगोचरात् अपि जगतः परम् कस्यचित् एतादृशस्य अतिभौतिकस्य तत्त्वस्य अनुभूतिः अपि प्राप्ता, यच्च तैः पश्चात् आत्मतत्त्वरूपेण अनुभूतम्। फलतश्च यदा अन्येषु भूखण्डेषु निवसताम् जनानाम् संस्काराः आधिभौतिकाः एव जाताः, तदा भारतीयानाम् जनानाम् संस्काराः आध्यात्मिकाः अभूवन्। यदा अन्येषु भूखण्डेषु निवसताम् जनानाम् स्वकीयानाम् आधिभौतिकानाम् संस्काराणाम् वशेन तत्समष्टिरूपा संस्कृतिः आधिभौतिकी जाता, तदा भारतीयानाम् संस्कृतिः स्वकीयानाम् आध्यात्मिकानाम् संस्काराणाम् वशेन आध्यात्मिकी जाता। फलतश्च यदा अन्यैः जनैः देहम् एव सर्वस्वम् मत्वा सर्वाणि कार्याणि देहकल्याणोद्देश्येन क्रियन्ते, तदा भारतीयैः देहात् व्यतिरिक्तम् आत्मतत्त्वम् सर्वस्वम् मत्वा सर्वाणि कार्याणि आत्मकल्याणोद्देश्येन क्रियन्ते। भारतीयसंस्कृतेः अध्यात्ममूलकत्वात् एव भारतीयानाम् जीवनपद्धतौ, प्रत्येकम् आचारे, विचारे, व्यवहारे, धर्मे, कर्मणि, दर्शने, सम्प्रदाये च आत्मकल्याणस्य प्रश्नः एव प्रमुखताम् भजते।

**५—वैशिष्ट्यम्**—अध्यात्ममूलिकायाम् संस्कृतौ यत् वैशिष्ट्यम् भवति, तत् अत्रापि भारतीयसंस्कृतौ स्वाभाविकतया निम्नरूपेण वर्तते :—

**(अ) मोक्षोन्मुखता**—भारतीयसंस्कृतौ प्रथमम् वैशिष्ट्यम् मोक्षोन्मुखता अस्ति। यदा इदम् सिद्धान्तितम् यत् देहात् अस्मात् व्यतिरिच्य आत्मतत्त्वम् अस्ति, यच्च अस्मिन् देहे विविधेषु प्रपञ्चेषु निगडितम् सत् स्वस्वरूपानुभूतिविरहेण दुःखजाले पतितम् वर्तते, तदा इदम् अपि स्वाभाविकरूपेण आपतति यत् अस्याम् संस्कृतौ अयम् विचारः प्रामुख्यम् भजेत् यत् अस्य आत्मतत्त्वस्य जागतिकप्रपञ्चेभ्यः मोक्षः स्यात्, येन अयम् आत्मा स्वरूपस्थः सन् स्वस्वरूपानन्देन युक्तः स्यात्। फलतश्च भारतीयसंस्कृतौ

---

१—पृष्ठ १६, १८।

मोक्षोन्मुखतायाः प्राबल्यम् वर्तते । अस्याम् संस्कृतौ जीवनस्य परमम् लक्ष्यम परमनिःश्रेयसम् वा मोक्षः एव मन्यते । अतश्च अत्र सर्वेषु कार्येषु क्रियमाणेषु सत्सु विचारणीयम् इदम् अपि भवति यत् किम् इदम् कार्यम् मोक्षबाधकम् तत्साधकम् वा वर्तते । भारतीयसंस्कृतेः भारतीयधर्मस्य वा आशावादस्य रूपे विद्यमानः अयम् विश्वासः अपि यत् प्रत्यक्षजीवनात् परम् अपि परोक्षम् जीवनम् परलोकश्च वर्तते, अस्याः एव मोक्षोन्मुखतायाः एकम् रूपम् अस्ति ।

(आ) **त्यागप्रमुखता**—भारतीयसंस्कृतौ द्वितीयम् वैशिष्टचम् त्यागप्रमुखता अस्ति । यदा आधिभौतिकी संस्कृतिः भोगप्रमुखा भवति, तदा आध्यात्मिकी मोक्षोन्मुखा संस्कृतिः स्वत एव त्यागप्रमुखा भवति । भारतीयसंस्कृतेः अध्यात्ममूलकत्वात् फलतश्च मोक्षोन्मुखत्वात् अत्र त्यागप्रमुखता वर्तते । भोगे अतिशयितेन अभिनिवेशेन प्रपञ्चः वर्धते, प्रपञ्चाच्च आत्मनः मोक्षः अभिप्रेतः अस्ति, अतः भोगात् वैमुख्यम् त्यागः वा स्वत एव कर्तव्यत्वेन आपतति । अत एव अत्रत्यायाम् जीवनपद्धतौ त्यागप्रमुखः 'संन्यासाश्रमः' एकः सम्माननीयः आश्रमः अस्ति । यस्मिन् च सर्वम् अपि भोगजातम् संन्यस्यते त्यज्यते वा । त्यागप्रमुखत्वात् एव अस्याम् संस्कृतौ दानस्य परोपकारस्य च महान् महिमा अस्ति । अस्याम् संस्कृतौ यत् गौरवम् त्यागिभिः पूर्वम् प्राप्तम्, इदानीम् अपि च प्राप्तुम् शक्यते, तत् भोगलिप्सुभिः जनैः कदापि न प्राप्तम्, न च इदानीम् अपि प्राप्तुम् संभाव्यते, कामम् इदानीम् धनसंचयस्य भोगस्य च महत्त्वम् वर्धमानम् वर्तते ।

(इ) **तपश्चरणम्**—अस्याम् संस्कृतौ तृतीयम् वैशिष्ट्यम् तपश्चरणम् अस्ति । आत्मकल्याणस्य मोक्षस्य वा सम्पादनाय आध्यात्मिकसाधनानाम् स्वत एव आवश्यकता भवति । तानि एव साधनानि समष्टिरूपेण सामान्यतया 'तपः' इत्यभिधीयन्ते । तपश्चरणपरायणतायाः ईदृशम् प्रामुख्यम् अस्याम् संस्कृतौ वर्तते यत् प्रत्येकम् धर्मे दर्शने च विभिन्नानि तपोरूपाणि साधनानि अवश्यकर्तव्यत्वेन निर्धारितानि वर्तन्ते । तपश्चरणप्रामुख्यात् एव हेतोः अस्याम् संस्कृतौ वनवासस्य वानप्रस्थाश्रमस्य वा महिमा वर्तते, यतो हि वनेषु तपश्चरणम् सौकर्येण सम्पादयितुम् शक्यते ।

(ई) **समन्वयभावना**—चतुर्थम् च वैशिष्ट्यम् अस्याम् संस्कृतौ वर्तते यत् अत्र समन्वयभावना सर्वत्र एव विराजते । यद्यपि संस्कृतिः इयम् अध्यात्ममूलिका अस्ति, पुनरपि जीवने समन्वयानयनस्य उद्देश्येन एव अत्र भौतिकम् जगत् अनुपेक्षितम् वर्तते । अत एव भौतिकस्य देहस्य रक्षार्थम् अत्र 'शरीरमाद्यं खलु धर्मसाधनम्', 'धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्' इत्यादिरूपाणि उपदेशवचनानि वर्तन्ते । समन्वयभावनया एव अत्र पुरुषार्थचतुष्टयस्य स्वीकृतिः वर्तते, येन अर्थकामौ अपि अनुपेक्षितौ स्याताम् ।

आश्रमचतुष्टयस्य सिद्धान्तम् स्वीकृत्य गृहस्थाश्रमे भोगाय यत् समुचितम् स्थानम् दत्तम् वर्तते, तत् अपि समन्वयभावनायाः एव हेतोः वर्तते। एतद्-भावनाफलस्वरूपम् च शासनपद्धतिः अपि विकसिता जाता, राष्ट्ररक्षार्थम् चापि सर्वदा एव प्रयत्नाः जाताः। तात्पर्यम् इदम् यत् भौतिकी समुन्नतिः अपि अस्याम् संस्कृतौ समुचितम् स्थानम् अलभत। किन्तु सा आध्यात्मिक्याः समुन्नतेः एव अङ्गभूता स्वीकृता। समन्वयभावनायाः अन्यत् रूपम् इदम् वर्तते यत्, यथा च अत्र एव पूर्वम् उक्तम्, यदि कदाचित् विजातीयायाः संस्कृतेः अपि कस्याश्चित् कानिचित् तत्त्वानि समागच्छन्ति, तानि परिष्कृत्य स्वानुरूपाणि क्रियन्ते, यथा च अनया पूर्वम् सर्वदा एव कृतम्, अधुना च क्रियते। फलस्वरूपम् च संस्कृतिः इयम् उदारा सती निरन्तरम् विकसन्ती वर्तते।

अन्यानि अपि गौणानि तत्त्वानि भारतीयसंस्कृतौ वर्तन्ते, किन्तु उक्तानि तत्त्वानि तत्र प्रमुखताम् भजन्ति वर्तन्ते। एतैः विशिष्टैः तत्त्वैः विराजमाना इयम् भारतीयसंस्कृतिः मानवसंस्कृतेः एकम् असाधारणम् प्रमुखम् रूपम् दधती सती जगति प्रकाशमाना वर्तते। विश्वसंस्कृतौ च तस्याः अपूर्वम् योगदानम् अस्ति, येन इदम् एव कथनीयत्वेन आपतति यत्—

'धन्या भारतभूः प्रकामवसुधा प्रत्ना च तत्संस्कृतिः।'[1]

---

१ अथवा—'धन्योऽयं भारतो देशः प्रत्ना तस्य च संस्कृतिः।'

८

# वेदस्वरूपविषयकम् मतद्वयम्

**१—परम्परागतमान्यता**—संस्कृतवाङ्मये प्राचीनतमस्य तद्मूर्धन्यभूतस्य च वेदस्य किम् स्वरूपम्, अथवा वेदवाङ्मयस्य का परिधिः, इत्यत्र विषये विदुषाम् किंचिद् वैमत्यम् वर्तते। यथा च 'मन्त्रब्राह्मणयोर्वेदनामधेयम्'[1], 'मन्त्रब्राह्मणात्मको वेदः'[2], 'मन्त्रब्राह्मणं वेद इत्याचक्षते'[3] इत्यादीनाम् वचनानाम् रूपे अभिव्यक्तया परम्परागतया मान्यतया ज्ञातम् भवति, मन्त्रब्राह्मणात्मकम् समस्तम् वाङ्मयम्, यस्मिन् समस्ताः मन्त्रसंहिताः, ब्राह्मणग्रन्थाश्च, एवञ्च तदन्तर्गतानि आरण्यकानि उपनिषदश्च अन्तर्भवन्ति, परम्परागतरूपेण 'वेदवाङ्मयम्' मन्यमानम् सत् वर्तते स्म। यथा च मनुस्मृतेः 'श्रुतिस्तु वेदो विज्ञेयः' (२।१०) इतिवचनेन ज्ञायते, वेदस्यैव एकम् अपरम् परम्परागतम् नाम 'श्रुतिः' अस्ति। इयम् स्मृतिः मन्त्रब्राह्मणांशभूताः उपनिषदः 'विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः' (६·२९) इतिरूपेण 'श्रुतिः' इत्येव कथयति। विष्णुपुराणम् अपि अथर्ववेदीयायाः मुण्डकोपनिषदः 'द्वे विद्ये वेदितव्ये' (१।१।४) इतिवाक्यम् 'द्वे वै विद्ये वेदितव्ये इति चाथर्वणी श्रुतिः' (वि० पु० ६।५।६५) इतिरूपे 'आथर्वणी श्रुतिः' इति कथयति। पूर्वमीमांसासूत्राणि 'वेदाँश्चैके संनिकर्षं पुरुषाख्याः' (१।१।२७) इतिरूपे एकम् वाङ्मयम् 'वेदम्' कथयित्वा, अनन्तरम् तस्य एकम् विशिष्टम् अंशम् 'तच्चोदकेषु मन्त्राख्या' (२।१।३२) इतिरूपे 'मन्त्र' शब्दाभिधेयम् मत्वा, तस्यैव अवशिष्टम् अंशम् 'शेषे ब्राह्मणशब्दः' (२।१।३३) इतिरूपे 'ब्राह्मण' शब्दाभिधेयम् मन्यन्ते, येन स्पष्टम् यत् पूर्वमीमांसासूत्रकारः जैमिनिः वेदवाङ्मयस्य अन्तः मन्त्रब्राह्मणात्मकम् समस्तम् वाङ्मयम्

---

१—आप० श्रौ० सू० २४।१।३१; का० प० प्र० सू० १; सत्या० श्रौ० सू० १।१।७।

२—आप० य० प० ३१।

३—बौ० गृ सू० २।६।२।

मन्यते। तस्य भाष्यकारेण शबरस्वामिना च 'मन्त्राश्च ब्राह्मणं च वेदः' (२।१।३३) इति रूपे इदम् तथ्यम् स्पष्टतः प्रकटितम् अपि कृतम् अस्ति। ब्रह्मसूत्रैः उपनिषद्-वाङ्मयस्य मीमांसा कृता, अथ च यतः तैः इदम् वाङ्-मयम् 'श्रुति' शब्देन निर्देशितम्, तस्य प्रतिपादनम् च 'श्रुतम्' कथितम्[1], अतः स्पष्टम् यत् तानि अपि उपनिषदः श्रुतिवाङ्मयस्य अन्तः मन्यन्ते।

उक्तप्रमाणैः इदम् स्पष्टतः ज्ञातम् भवति यत् स्मृतीनाम् पुराणानाम्, श्रौतसूत्राणाम्, पूर्वमीमांसासूत्राणाम्, ब्रह्मसूत्राणाम् च रचनाकाले समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् अतीतस्य एकम् वस्तु आसीत्, एवञ्च परम्परया 'श्रुति' रूपे सम्मानितम् भवत् आगच्छत् आसीत्। तदनन्तरम् भाष्यकारैः तु इदम् समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् 'श्रुतिः' इति कथितमेव। एवम् प्राचीनकालात् प्रवर्तमानाम् परम्पराम् अनुसृत्य समस्तम् मन्त्रब्राह्मणा-त्मकम् वाङ्मयम् वेदवाङ्मयस्य श्रुतिवाङ्मस्य वा परिधेः अन्तः मन्यमानम् सत् आसीत्, फलतश्च अस्य वाङ्मयस्य सर्वेऽपि अंशाः—मन्त्राः, ब्राह्मणानि, आरण्यकानि, उपनिषदः—श्रुतिप्रमाणरूपे समानम् महत्त्वम् च प्राप्नुवन्तः वर्तन्ते स्म।

**२—उक्तपरम्परागतमान्यतायाः विरोधः**—उक्तपरम्परागतमान्यतायाः विरोधरूपे आर्यसमाजस्य संस्थापकेन दयानन्दस्वामिना इदम् मतम् प्रस्तावितम् यत् ब्राह्मणग्रन्थाः वेदवाङ्मयस्य अन्तर्गताः न सन्तिः। अस्य मतस्य फलस्वरूपम् वैदिकपरम्परायाः एव अनुयायिषु अयम् एकः विवादस्य वषयः जातः यत् ब्राह्मणग्रन्थाः अपि वेदः श्रुतिः वा सन्ति न वा। यत्र आर्य-समाजिनः ब्राह्मणग्रन्थानाम् वेदत्वम् न मन्यन्ते, तत्र सनातनिनः पूर्वोक्तायाः परम्परागतायाः मान्यतायाः अनुसारेण तेषाम् अपि वेदत्वम् समर्थयन्ति यद्यपि आर्यसमाजिपक्षः मन्त्रभागे अपि केवलम् चतुःसंहितात्मकम् अंशम् वेदम् मन्यते, अवशिष्टम् च अंशम् वेदम् न मत्वा ब्राह्मणानि इव वेदव्या-ख्यानमात्रम् मन्यते, पुनरपि मुख्यः विवादः ब्राह्मणभागस्य एव विषयेऽस्ति यत् सोऽपि वेदोऽस्ति न वा।

**३—विवादस्य मूलम्** उक्तस्य विवादस्य मूले प्रमुखतः इयम् पर-म्परागता रूढा मान्यता अस्ति यत् वेदवाङ्मयम् सनातनम् अथ च अपौरु-षेयम् ईश्वरप्रणीतम् वा अस्ति। इमाम् मान्यताम्, उभौ अपि पक्षौ—आर्यसमा-जिनः सनातनिनश्च—मन्येते, तस्याः एव च आधारे तौ वेदवाङ्मयस्य परि-धिम् निर्धारयतः। आर्यसमाजिपक्षाय यत्र मन्त्रभागः अपौरुषेयः ईश्वरप्रणीतः वा प्रतीयते, तत्र तस्मै ब्राह्मणभागः एतादृशः न प्रतीयते, यतो हि यत्र तस्मै

---

१—ब्र० सू० १।१।११; २।१।२७ आदि।

मन्त्रभागे कालविशेषस्य इतिहासस्य वर्णनम् न प्रतीयते, तत्र तस्मै ब्राह्मणभागे तादृशः इतिहासः प्रतीयते, यतश्च कालविशेषस्य इतिहासः अनादौ अथ च अपौरुषेये ईश्वरप्रणीते वा वाङ्मये न सम्भवी, अतः स मन्त्रभागम् वेदम् मत्वा ब्राह्मणभागम् वेदम् श्रुतिम् वा न मन्यते। एतद्विपरीतम्, सनातनिपक्षः मन्त्रभागे ब्राह्मणभागे च, द्वयोः अपि इतिहासस्य वर्णनम् स्वीकुर्वन् अपि तम् कालविशेषस्य इतिहासम् नहि, अपि तु नित्यम् इतिहासम् मत्वा भागद्वयम् अपि अनादिम् अपौरुषेयम् च साधयन् तत् समानरूपेण वेदम् श्रुतिम् वा मन्यते।

एवं पक्षद्वयम् अपि विवदमानम् वर्तते। एतयोः पक्षयोः कतरः अपि काम् अपि युक्तिम् तथ्यपूर्णाम् वा उक्तिम् श्रोतुम् मन्तुम् वा उद्यतः नास्ति, अपि तु द्वौ अपि स्वकीये पूर्वाग्रहे दुरारूढतया अभिनिविष्टौ स्तः, येन स्वयम् वेदानुयायिषु एव वेदस्वरूपविषयकम् सर्वसम्मतम् मतम् प्रवृत्तम् न वर्तते।

६

## वेदस्वरूपविषयकमतसमीक्षणम्

**१—मतद्वयस्य अपि रूढिवादिता**—इदम् कथयितुम् आवश्यकता नास्ति यत् पूर्वोक्तप्रकारेण आर्यसमाजिनः सनातनिनश्च, इमौ द्वौ अपि पक्षौ यत् समानरूपेण इमाम् परम्परागताम् रूढाम् मान्यताम् यत् वेदवाङ्मयम् सनातनम् अथ च अपौरुषेयम् ईश्वरप्रणीतम् वा अस्ति, वेदवाङ्मयस्य परिधेः निर्धारणस्य आधारम् मन्येते, तेन तु केवलम् तयोः द्वयोः अपि रूढिवादितायाः एव परिचयः प्राप्यते, तेन वेदवाङ्मयपरिधिविषयकस्य प्रस्तुतस्य विवादस्य समाधानम् कथमपि भवितुम् न शक्नोति। रूढिवादितायाः दृष्टचा अनयोः द्वयोः अपि पक्षयोः केवलम् इयत् एव अन्तरम् अस्ति यत् यत्र आर्यसमाजी पक्षः केवलम् मन्त्रभागस्य विषये स्वीयायाः रूढिवादितायाः परिचयम् ददाति, तत्र सनातनी पक्षः मन्त्रभागस्य अग्रे ब्राह्मणभागपर्यन्तम् स्वरूढिवादितायाः क्षेत्रम् प्रसारितवान् अस्ति। किन्तु, यथा च अग्रे स्पष्टम् भविष्यति[1], वस्तुस्थितिः इयम् वर्तते यत् न तु मन्त्रभागः एव सनातनः अथ च अपौरुषेयः ईश्वरप्रणीतः वा सिध्यति, नापि च ब्राह्मणभागः एव। यदवधि च कालविशेषस्य इतिहासस्य वर्णनस्य सम्बन्धः अस्ति, सः, यथा च अग्रे स्पष्टम् द्रक्ष्यते, यथा ब्राह्मणभागे प्राप्यते, तथैव मन्त्रभागे अपि प्राप्यते। इत्थम् यदि उक्तपरम्परागतरूढमान्यतायाः आधारे एव वेदत्वस्य निर्धारणम् क्रियते चेत् तदा मन्त्रभागब्राह्मणभागयोः कतरस्य अपि भागस्य वेदत्वम् स्थिरम् न भवितुम् शक्नोति।

**२—परम्परागतनाम्नः कर्तृत्वस्य च असम्बन्धः**—एतदतिरिक्तम्, कस्य अपि वाङ्मयस्य परम्परागतम् नाम अथ च तस्य कर्तृत्वस्य उद्गमस्रोतसः वा सम्बन्धे प्रचलिता परम्परागता मान्यता, इति द्वौ अपि परस्परभिन्नौ विषयौ स्तः। फलतश्च कस्य अपि वाङ्मयस्य कर्तृत्वेन उद्गमस्रोतसा वा सम्बद्धायाः परम्परागतायाः मान्यतायाः वितथत्वे सिद्धे सति

---

१— 'वेदानाम् उद्भवः (आ) (तथ्यानुकूलम् मतम्)' इतिशीर्षके निबन्धे।

तस्य परम्परागते नाम्नि, कः अपि प्रभावः न पतति, अपि तु तत् यथावत् एव मन्यते। अपरेषु शब्देषु, कस्य अपि वाङ्मयस्य परम्परागतरूपेण यत् नाम अभिधानम् वा प्रचलितम् सत् आगच्छति, तस्य केवलम् अस्मिन् आधारे न तु अपहरणम् क्रियते, नापि च तत् कर्तव्यम् एव यत् तत् वाङ्मयम् तस्य कर्तुः कृतिः न सिध्यति यः परम्परागतरूपेण तस्य कर्ता मन्यमानः अस्ति। फलतः, उक्ता परम्परागता रूढा मान्यता वेदत्वस्य श्रुतित्वस्य वा निकषः, इति मननम् उचितम् न प्रतीयते। एतदर्थम् अन्यस्य एव कस्यचित् स्वतन्त्रस्य आधारस्य अपेक्षा अनिवार्यतः भविष्यति।

**३—व्याख्यानसम्बन्धिनः तर्कस्य असारत्वम्**—प्रस्तुते विवादे आर्यसमाजिपक्षस्य यः अयम् तर्कः अस्ति यत् यतः चतुःसंहितात्मकस्य मन्त्रभागस्य अवशिष्टे मन्त्रभागे समस्ते ब्राह्मणभागे च व्याख्यानम् प्राप्यते, अतः केवलम् चतुःसंहितात्मकः अंशः एव वेदः अस्ति अवशिष्टश्च मन्त्रभागः ब्राह्मणभागश्च वेदः न सन् वेदव्याख्यानमात्रम् अस्ति, सः कः अपि समीचीनः तर्कः न कथयितुम् शक्यते। यदवधि मन्त्रभागस्य सम्बन्धः अस्ति, तस्य विषये इदम् तु कथयितुम् शक्यते यत् मन्त्रेषु परस्परम् एकेन अपरस्य प्रतिपाद्यस्य स्पष्टीकरणम् व्याख्यानम् वा कृतम् अस्ति, सहैव च तत्र शब्दावल्याः आदानप्रदानम् अपि अस्ति, किन्तु पुनरपि इदम् निश्चितरूपेण न कथयितुम् शक्यते यत् आर्यसमाजिपक्षेण वेदरूपे मन्यमानस्य चतुःसंहितात्मकस्य अंशस्य मन्त्राणाम् अवशिष्टमन्त्रभागीयमन्त्रैः व्याख्यानम् कृतम् अस्ति। एतस्याम् दशायाम् इदम् घोषणम् यत् चतुःसंहितात्मकः अंशः एव वेदः अस्ति, अवशिष्टश्च मन्त्रभागः तस्य व्याख्यानम् अस्ति, दुस्साहसमात्रम् एव कथयिष्यते, तत् कथमपि न्याय्यम् न कथयितुम् शक्यते। एतदतिरिक्तम्, चतुःसंहितात्मकः अंशः अवशिष्टश्च अंशः, अनयोः द्वयोः अपि कतरस्मिन् अपि एकस्मिन् कतरस्य अपि अपरस्य सानुपूर्वी व्याख्या नास्ति येन एकः अपरस्य व्याख्यानम् मन्येत। अनयोः मन्त्रेषु परस्परम् यथा प्रासंगिकम् स्पष्टीकरणम् व्याख्यानम् वा अथ च शब्दावल्याः आदान-प्रदानम् प्राप्यते, तथा तत स्वयम् चतुःसंहितात्मकस्य अपि अंशस्य मन्त्रेषु परस्परम् प्राप्यते।

एवमेव, यद्यपि ब्राह्मणग्रन्थाः मन्त्रान् निर्दिशन्ति, प्रसंगतः तेषाम् अर्थान् प्रकाशयन्ति, तेषाम् विभिन्नानाम् शब्दानाम् निर्वचनम् कुर्वन्ति, तैः स्तूयमानानाम् देवानाम् स्वरूपे प्रकाशम् पातयन्ति, तेषाम् प्रतीकानि च धृत्वा विभिन्नेषु यज्ञीयकर्मसु तेषाम् विनियोगान् प्रदर्शयन्ति, पुनरपि अस्मिन् रूपे मन्त्रव्याख्यामात्रम् एव तेषाम् विषयः नास्ति, अपि तु यथा स्वकालीनानाम् मान्यतानाम् विचारधाराणाम् वा अनुसारेण मन्त्रैः स्वकीयम् स्वतन्त्रम् प्रतिपादनम् प्रस्तुतम्, तथैव स्वकालीनानाम् विकसितानाम् विचारधाराणाम् अनुसारेण ब्राह्मणभागेन अपि स्वकीयम् स्वतन्त्रम् प्रतिपादनम

प्रस्तुतम् । यदवधि उक्तरूपे मन्त्रव्याख्यायाः प्रश्नः अस्ति, तेन यद्यपि अयम् निष्कर्षः तु अवश्यमेव प्राप्यते यत् निर्देश्यः मन्त्रभागः स्वनिर्देशकात् ब्राह्मण-भागात् पूर्वकालीनः एव नास्ति, अपि तु एतस्य उपजीव्यः अपि अस्ति, किन्तु पुनरपि तेन इदम् सिद्धम् न भवति यत् केवलम् मन्त्राः एव 'वेदः' 'श्रुतिः' वा सन्ति, ब्राह्मणग्रन्थाश्च नैवम् ।

वस्तुतः प्रस्तुतस्य विवादस्य समाधानम् केवलम् उक्तरूपस्य मन्त्र-व्याख्यानस्य आधारे अत एव न भवितुम् शक्नोति, यतो हि, मन्त्रब्राह्मणा-त्मकस्य समस्तस्य वाङ्मयस्य एका दीर्घकालीना रचना-परम्परा प्रवर्तमाना अभवत् । फलतश्च यथा मन्त्रभागस्य उक्तात् चतुःसंहितात्मकात् अंशात् अवशिष्टस्य अंशस्य एव नहि, अपितु स्वयम् चतुःसंहितात्मकस्य अपि अंशस्य उत्तरकालीनमन्त्रैः अस्यैव अंशस्य पूर्वकालीनमन्त्राणाम् प्रतिपाद्यस्य प्रासंगि-कम् व्याख्यानम् स्पष्टीकरणम् वा कृतम् अस्ति, अथ च तेषाम् शब्दावल्या प्रतिपाद्येन च लाभः प्राप्तः, तथैव उत्तरकालीनैः ब्राह्मणग्रन्थैः अपि, कामम् किंचिदधिकरूपे एव अस्तु, स्वपूर्वकालीनानाम् मन्त्राणाम् यथावसरम् सांकेतिकम् व्याख्यानम् स्पष्टीकरणम् वा कुर्वद्भिः सद्भिः तेषाम् प्रतिपाद्येन लाभम् प्राप्नुवद्भिश्च तेषाम् स्वप्रतिपादने उपयोगः कृतः अस्ति; अन्यथा कस्य अपि अंशस्य सानुपूर्वी व्याख्या न मन्त्रभागे अस्ति न च ब्राह्मणभागे । एतादृश्याम् दशायाम्, यदि मन्त्रब्राह्मणात्मकस्य वाङ्मयस्य कोऽपि अंशः केवलम् अस्मिन् आधारे वेदवाङ्मयस्य परिधेः बहिर्गतः करिष्यते यत् तस्मिन् कस्य अपि अपरस्य अंशस्य व्याख्यानम् स्पष्टीकरणम् वा अस्ति चेत्, तस्य चतुःसंहितात्मकस्य अंशस्य अपि, यम् आर्यसमाजी पक्षः 'वेदम्' मन्यते, भूयान् भागः वेदवाङ्मयस्य परिधेः बहिर्गतः भविष्यति, पुनः केचन एव च मन्त्राः 'वेदः' इति निर्देशस्य अधिकारिणः अवशिष्टाः भविष्यन्ति ।

४—**उपसंहरणम्**—अस्तु ! उक्तप्रकारेण न तु अस्मिन् एव आधारे कः अपि अंशः वेदवाङ्मयस्य परिधेः बहिर्गतः कर्तुम् शक्यते यत् तस्मिन् काल-विशेषस्य इतिवृत्तम् प्राप्यते फलतश्च सः सनातनः अथ च अपौरुषेयः ईश्वर-प्रणीतः वा न सिध्यति, नापि च अस्मिन् एव आधारे यत् तस्मिन् कस्य अपि अपरस्य अंशस्य व्याख्यानम् स्पष्टीकरणम् वा प्राप्यते । यतः 'वेदः' अथ च 'श्रुतिः' परम्परागते अभिधाने स्तः, अतः तयोः अभिधेयस्य परिधेः विषये केवलम् परम्परायाः एव आधारे किंचित् कथयितुम् शक्यते । यद्यपि च सूत्र-स्मृतिपुराणानाम् समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् उक्ताभ्याम् अभिधानाभ्याम् अभिधातुम् पूर्वप्रदर्शितपरम्परायाः स्वयमेव प्रस्तुतविवाद-विषयत्वात् तस्याः आधारे किंचित् अपि कथयितुम् न शक्यते, किन्तु पुन-रपि एतदर्थम् ततोऽपि पूर्वकालीना —मन्त्रब्राह्मणकालीना—प्राचीनतमा परम्परा द्रष्टुम् शक्यते ।

# १०

## मन्त्रसंहितानुसारेण वेदस्वरूपम्

**१—'वेद' अभिधानस्य ऋग्वेदमन्त्रकालीना परम्परा**—वेदस्वरूप-विषयकस्य विवादस्य समाधानार्थम् 'वेद' अभिधानस्य प्राचीनतमाम् परम्पराम् ज्ञातुम् स्वयम् मन्त्रब्राह्मणत्मकस्य एव वाङ्मयस्य शरणवरणम् कर्त्तव्यत्वेन उचितम् वर्तते। यतो हि इदम् एव भारतस्य प्राचीनतमम् वाङ्मयम् अस्ति। यतश्च, यथा च पूर्वम् एव उक्तम् अस्ति, अस्मिन् वाङ्मये अपि मन्त्राः ब्राह्मणेभ्यः प्राक्कालीनतराः सन्ति, अतः सर्वप्रथमम् मन्त्रेभ्यः एव इदम् ज्ञातुम् प्रयत्नः करणीयत्वेन वर्तते यत् तैः प्रस्तुते विषये कः प्रकाशः पात्यते। मन्त्रेषु दृष्टिपातेन ज्ञायते यत् तैः स्वेभ्यः सामान्यतः 'वचस्'[१], 'गिर्'[२] इत्यादिशब्दानाम् प्रयोगः तु कृतः एव, सहैव च कतिपयेषु स्थलेषु 'मन्त्रः' इत्यपि कथितम् अस्ति[३], किन्तु, तैः स्वेभ्यः एकस्य सामान्यस्य अभिधानस्य रूपे मुख्यतः 'ब्रह्मशब्दस्य' प्रयोगः कृतः अस्ति[४], स्वीयविभिन्नरूपेभ्यश्च विशिष्टस्य अभिधानस्य रूपे 'ऋक्', 'सामन्', 'यजुष्' इत्यादिविभिन्नशब्दानाम् प्रयोगः कृतः अस्ति।[५] किन्तु यदवधि 'वेद' अभिधानस्य सम्बन्धः अस्ति, यद्यपि मन्त्रेषु कतिपयेषु स्थलेषु अस्य शब्दस्य प्रयोगः जातः अस्ति, किन्तु पुनरपि सः कस्य अपि वाङ्मयस्य विशिष्टस्य अभिधानस्य रूपे प्रयुक्तः सन् न प्रतीयते। मन्त्रात्मके वाङ्मये ऋग्वेदसंहितायाः अधिकांशतः प्राचीनतमानाम् मन्त्राणाम् संकलनरूपत्वात् सा प्राचीनतमा अस्ति। अस्याः संहितायाः मन्त्रैः केवलम् एकस्मिन् एव स्थले 'यः समिधा य आहूती यो वेदेन ददाश मर्तो अग्नये' (ऋ० वे० ८।१९।५) इतिरूपे 'वेद' शब्दस्य प्रयोगः कृतः अस्ति। अत्र च, यथा च अस्मिन् मन्त्रे ध्यानदानेन ज्ञायते, अस्य शब्दस्य प्रयोगः कस्य

---

१—ऋ० वे० १।९१।१०; ७।८।६ आदि। २—ऋ० वे० १।१०।९, १२ ७।७०।६ आदि। ३—ऋ० वे १।४०।५; १।७४।१; १०।१४।४ आदि। ४—ऋ० वे० १।२४।११; ७।२२।९; १०।६५।१४ आदि। ५ | ऋ० वे१ ८।२७।५; ८।९८।१; १०।९०।९ आदि।

अपि वाङ्मयस्य अभिधानस्य रूपे न सन् सामान्यतः यत्किञ्चित्प्रकारकाय विशिष्टज्ञानमात्राय तथैव जातः अस्ति, यथा च अग्रे 'यदेव विद्यया करोति श्रद्धयोपनिषदा' (छान्दोग्योप० १।१।१०) इत्यादिरूपे यत्किञ्चित्प्रकारकाय विशिष्टज्ञानाय 'विद्या' शब्दस्य प्रयोगः जातः अस्ति ।

अस्तु ! इत्थम् स्पष्टम् अस्ति यत् मन्त्रैः 'वेद' शब्दस्य सर्वप्रथमः प्रयोगः स्वकीये मौलिके अर्थे—ज्ञाने विद्यायाम् वा—कृतः अस्ति, कस्य अपि वाङ्मयस्य विशिष्टाभिधानरूपे नहि कृतः अस्ति । इयम् अन्या वार्ता अस्ति यत् अत्र 'वेद' शब्देन कामम् एकम् विशिष्टप्रकारकम् धार्मिकम् यज्ञसम्बन्धि वा, अथवा किमपि उच्चम् ज्ञानम् अभिप्रेतम् स्यात् ।

२—**अन्यवेदमन्त्रकालीना परम्परा**—पश्चात् शुक्लयजुर्वेदीयायाः माध्यन्दिनसंहितायाः मन्त्रैः अपि यद्यपि ऋग्वेदस्य उक्तप्रयोगवत् 'वेदेन रूपे व्यपिवत् सुतासुतौ प्रजापतिः' (१९।७८) इतिरूपे 'वेद' शब्दस्य प्रयोगः उक्ते सामान्ये अर्थे कृतः अस्ति, किन्तु सहैव तैः 'वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः' (२।२१) इतिरूपे स्तूयमानः देवः यत् 'वेदः' इति निर्दिष्टः अस्ति, तेन प्रकटम् भवति यत् एषाम् मन्त्राणाम् रचनाकाले 'ज्ञानाधारस्य' 'ज्ञानस्रोतसः' वा अर्थे अपि 'वेद' शब्दस्य प्रयोगस्य परम्परा प्रवृत्ता अभवत्, अथ च अयम् एतावद्गौरवाभिव्यञ्जकः शब्दः मतः यत् ज्ञानाधारः ज्ञानस्रोतः वा मन्यमानः देवः अपि ससम्मानम् 'वेदः' इति निर्दिष्टः भवितुम् आरब्धवान् । यतः, यथा च सामवेदीयकौथुमसंहितायाः 'ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते' (पू० ४।८।१०) इत्यादिमन्त्रैः ज्ञायते, 'ऋच्', 'सामन्' इत्यादिशब्दैः अभिधेयमन्त्रेभ्यः अपि कर्मसाधनत्वात् यजनीयरूपे गौरवम् दातुम् आरब्धम् आसीत्, अतः पश्चात् अथर्ववेदीयया शौनकसंहितया किंचित्स्पष्टीकृतेन पाठान्तरेण सह 'ऋचं साम यजामहे याभ्यां कर्माणि कुर्वते' (७।५४।१) इतिरूपे उक्तसामवेदीयमन्त्रवत् ऋगादिसंज्ञकानाम् मन्त्राणाम् यजनीयरूपे गौरवम् पुनः गीत्वा 'ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम् । एष मा तस्मान्मा हिंसीद् वेदः पृष्टः शचीपते' (७।५४।२) इतिरूपे ते 'वेदः' इति कथिताः । इदम् कथयितुम् आवश्यकता नास्ति यत् अत्र अपि 'वेद' शब्दस्य प्रयोगः मन्त्राणाम् कस्य अपि विशिष्टस्य अभिधानस्य रूपे न प्रतीयते, अपि तु यथा माध्यन्दिनसंहितायाः उक्ते मन्त्रे ज्ञानस्रोतः मान्यमानः स्तूयमानः देवः ज्ञानस्रोतोरूपे 'वेदः' कथितः अस्ति, तथैव अत्र अपि पूर्वपरम्परया यज्ञादिकर्मसाधनरूपे स्वीकृतानाम् ऋक्सामयजुषाम् मन्त्राणाम् अत्यन्तम् उपादेयस्य यज्ञसम्बन्धिनः ज्ञानस्य आधारस्य स्रोतसः वा रूपे गौरवम् अभिव्यञ्जयितुम् ते 'वेदः' इति कथिताः, यस्य च अर्थः केवलम् 'ज्ञानस्रोतः' 'विद्या' वा एव मन्तुम् शक्यते, फलतश्च अत्र प्रयुक्तः 'वेद' शब्दः

विशिष्टम् अभिधानम् न सन् गौरवाभिव्यञ्जकम् विधेयपदमात्रम् अस्ति ।

अस्तु ! उक्तप्रकारेण अथर्ववेदीयमन्त्रैः ऋक्सामयजुःसंज्ञकानाम् पूर्वपरम्परागतानाम् मन्त्राणाम् विषये विद्यायाः ज्ञानस्रोतोवाङ्मयस्य वा रूपे सामान्यतः 'वेदः' इति कथनस्य निर्देशस्य वा परम्परायाः प्रवर्तनम् तु अवश्यम् भवति, किन्तु पुनरपि कस्य अपि वाङ्मयस्य विशिष्टाभिधानरूपे अस्य शब्दस्य प्रयोगस्य परम्परायाः प्रवर्तनम् भवितुम् न पारयति । एवमेव 'यस्मिन् वेदा निहिता विश्वरूपाः' (अ० वे० ४।३५।६), 'ब्रह्म प्रजापतिर्धाता वेदाः सप्त ऋषयोऽग्नयः' (अ० वे० १९।९।१२), 'वेदेभ्यः स्वाहा' (तैः सं० ७।५।११।२) इत्यादिरूपे प्रयुक्तेन बहुवचनान्तेन 'वेद' शब्देन अनेकेषाम् वेदानाम् निर्दिष्टत्वात् यद्यपि अयम् संकेतः तु निश्चितरूपेण प्राप्यते यत् विभिन्नाः विद्याः तत्प्रतिपादकानि वाङ्मयानि वा, येषु ऋक्सामयजूंषि अपि अवश्यम् सम्मिलितानि सन्ति, तेषाम् व्यवस्थितविशिष्टज्ञानत्वात् तस्य स्रोतस्त्वात् वा पृथक्-पृथक् वेदशब्देन अभिधातुम् प्रवृत्तिः किंचित् रूढिम् प्राप्नुवती सती वर्तते, किन्तु पुनरपि उक्तानाम् सामान्यानाम् प्रयोगाणाम् आधारे इदम् कथयितुम् न शक्यते यत् 'वेद' शब्दः कस्य अपि विशिष्टस्य वाङ्मयस्य एव एकम् रूढम् अभिधानम् जातम् अस्ति । एवञ्च मन्त्रवाङ्मयस्य चरमविकासपर्यन्तम् 'वेद' शब्दस्य कस्य अपि विशिष्टस्य वाङ्मयस्य अभिधानरूपे अरूढत्वात्, अपितु सामान्यरूपेण विद्यायाः ज्ञानस्रोतसः वाङ्मयस्य वा वाचकरूपे स्थितत्वेन कस्यैचित् विद्यायै वाङ्मयाय वा प्रयोक्तव्यरूपे स्थितत्वात् अस्य प्रयोगस्य मन्त्रकालीनायाः परम्परायाः आधारे अस्य अभिधेयभूतस्य वाङ्मयस्य स्वरूपस्य परिधेः वा निर्धारणम् कर्तुम् न शक्यते ।

# ११

## ब्राह्मणग्रन्थानुसारेण वेदस्वरूपम्

### (वेदस्वरूप-निर्धारणम्)

**१—'वेद' अभिधानस्य ब्राह्मणकालीना परम्परा**—वदस्वरूपविषयकस्य विवादस्य समाधानार्थम् यदि ब्राह्मणग्रन्थानाम् शरणम् गृह्येत चेत्, तेषु दृष्टिपातकरणेन इदम् स्पष्टम् ज्ञातम् भवति यत् प्रारम्भे तैः अपि मन्त्रकालीनायाः परम्परायाः अनुसरणम् कुर्वद्भिः अस्य शब्दस्य प्रयोगः कस्य अपि विशिष्टस्य वाङ्मयस्य रूढाभिधानरूपे न कृत्वा सामान्यतः कस्य अपि ज्ञानस्रोतसः वाङ्मयस्य, ज्ञेयविषयस्य, विद्यायाः वा कृते कृतः अस्ति । अत एव यत्र तेषु 'ऋचो वेदः'[१], 'सामानि वेदः'[२], 'यजूंषि वेदः'[३], इतिरूपे ऋचः, सामानि, यजूंषि च 'वेदः' कथितानि, तत्र तेषु 'सर्पविद्या वेदः'[४], 'देवजनविद्या वेदः'[५], 'माया वेदः'[६], इतिहासो वेदः'[७], 'पुराणो वेदः'[८] इतिरूपे सर्पविद्यादयः अपि 'वेदः' कथिताः ।

अत्र 'ऋचो वेदः' इत्यादिप्रयोगेषु इदम् ध्येयम् वर्तते यत् यतः ऋक्सामयजूंषीतिसंज्ञाः मन्त्राणाम् एव संज्ञाः सन्ति, न तु ब्राह्मणवाक्यानाम्, यतो हि ब्राह्मणवाक्यानि न ऋचः सन्ति, न सामानि, न यजूंषि, अतः अत्र विषये तु केन अपि सन्देहेन एव न भवितव्यम् यत् 'ऋचो वेदः' इत्यादिरूपे अत्र तानि 'वेदः' इति न कथितानि सन्ति; अन्यथा अपि 'ब्राह्मण' शब्दस्य प्रयोगस्तु उक्ते प्रकरणे एव नितान्तम् पृथक् स्वतन्त्ररूपेण 'अमुं संग्राममजयदिति तस्योक्तं ब्राह्मणम्' (श० ब्रा० १३।४।३।५) इतिरूपे 'अमुं संग्राममजयत्' इत्यादिकाय एतादृशाय व्याख्यानात्मकाय वाक्याय कृतम् अस्ति यत् उक्तेभ्यः त्रिविधेभ्यः अपि मन्त्रेभ्यः स्पष्टतः पृथक् अस्ति ।

**२—ऋग्वेदादिनामत्रयस्य रूढिः**—अस्तु ! उक्तप्रकारेण यद्यपि ब्राह्मणग्रन्थैः पूर्वम् मन्त्रकालीनपरम्पराम् अनुसृत्य विभिन्नानि वाङ्मयानि सामान्यतः 'वेदः' इति कथितानि, किन्तु पश्चात्, यथा च 'त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात् सामवेदः' (श० ब्रा० ११।५।८।३)

१—८—श० ब्रा० १३।४।३।३-१४ ।

इत्यादिवाक्यैः ज्ञायते, पूर्वम् 'ऋचो वेदः' इत्यादिरूपे अन्यवाङ्मयवत् एव सामान्यतः 'वेदः' इति मतानाम् ऋक्सामयजुषाम् मन्त्राणाम् पृथक्-पृथक् त्रिभ्यः संकलनेभ्यः क्रमशः 'ऋग्वेदः', 'सामवेदः', 'यजुर्वेदः' इतिरूपे त्रीणि विशिष्टानि अभिधानानि दत्तानि। एवञ्च यद्यपि 'वेद' शब्दस्य तु कस्य अपि विशिष्टस्य वाङ्मयस्य रूढाभिधानरूपे सर्वप्रथमः प्रयोगः भवितुम् न अशक्नोत्, किन्तु तस्य आधारे समस्तपदरूपे विकसितानाम् उक्तानाम् 'ऋगवेद' इत्यादिकानाम् त्रयाणाम् शब्दानाम् क्रमशः उक्तानाम् ऋगादीनाम् त्रिविधानाम् मन्त्राणाम् पृथक्-पृथक् संकलनानाम् विशिष्टस्य रूढस्य वा अभिधानस्य रूपे प्रयोगस्य परम्परा प्रवृत्ता अभवत्, कामम् व्यस्तः 'वेद' शब्दः इदानीम् अपि पूर्ववत् प्रयुज्यमान एव आसीत्। यतो हि ब्राह्मणवाक्यानि ऋक्सामयजुर्नामकाः मन्त्राः न सन्ति, अपि तु तेभ्यः पृथक् सन्ति, अतः स्पष्टम् अस्ति यत् तानि अत्र एषाम् मन्त्राणाम् संकलनेभ्यः तेषाम् विशिष्टाभिधानरूपे प्रयुक्तेषु 'ऋग्वेदः', 'सामवेदः', 'यजुर्वेदः' इति त्रिषु अपि अभिधानेषु कस्य अपि अभिधेयानि न सन्ति, फलतश्च तानि एतेषाम् ऋग्वेदादीनाम् त्रयाणाम् विशिष्टानाम् वाङ्मयानाम् परिधौ न समाविशन्ति।

३—**पूर्वम् वेदत्रयी**—अत्र इदम् अपि ध्येयम् वर्तते यत् यद्यपि पूर्वम् 'ऋचो वेदः' इत्यादिवत् अथर्वाङ्गिरस्संज्ञकाः मन्त्राः अपि 'अथर्वाणो वेदः' (क० ब्रा० १३।४।३।७), 'अङ्गिरसो वेदः' (श० ब्रा० १३।४।३।८) इतिरूपे 'वेद' शब्दप्रयोगस्य मन्त्रकालीनपरम्पराम् अनुसृत्य 'वेदः' इति कथिताः, किन्तु तेषाम् संकलनेभ्यः ऋग्वेदादिवत् किञ्चत् विशिष्टम् अभिधानम् तथैव न दत्तम् अस्ति, यथा तत् सर्पविद्यादिभ्यः न दत्तम्। एतेन यत्र इदम् ज्ञायते यत् कामम् मन्त्रकालीनपरम्परानुसारेण ऋग्वेदादिव्यतिरिक्तानि वाङ्मयानि सामान्यतः 'वेदः' इति मन्यमानानि आसन्, किन्तु विशिष्टरूपेण इदानीम् केवलम् उक्ताः ऋग्वेदादयः त्रयः एव वेदाः मताः, अन्यच्च किमपि वाङ्मयम् तत्समकक्षरूपे 'वेदः' इति न मतम्, तत्र सहैव च ऋग्वेदादिरूपे विशिष्टतः त्रयाणाम् एव वाङ्मयानाम् 'त्रयः वेदाः'. इति मन्यमानत्वात् इदम् अपि स्पष्टम् भवति यत् इदानीम् 'वेद' शब्दः अपि किञ्चत् रूढिदिशायाम् अग्रसरः भवन् वर्तते। इदमेव कारणमस्ति यत् पश्चात् बृहदारण्यकोपनिषदि, या च माध्यन्दिनशतपथब्राह्मणे तस्य अन्तिमभागरूपे संकलितास्ति, 'अरेऽस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणम् विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि' (४।५।११) इतिरूपे ऋग्वेदयजुर्वेदसामवेदान् परित्यज्य अन्यत् किमपि वाङ्मयम् 'वेदः' इति न कथितम् अस्ति। एवम् उक्तोपनिषदः अस्तित्वे समागमनकाले शतपथब्राह्मणस्य वा अन्तिमविकासकाले 'वेद' शब्दस्य केवलम् ऋग्यजुःसंज्ञकानाम् मन्त्राणाम् संकलनेभ्यः एव रूढत्वे सति तस्य

मुख्यार्थः उक्तम् त्रिविधम् 'मन्त्रवाङ्मयम्' एव भवति । ब्राह्मणवाक्यानाम् च ऋग्यजुःसामनामकेभ्यः मन्त्रेभ्यः पृथक्त्वात् तानि मन्त्रसंकलनात्मकेषु ऋग्वेदयजुर्वेदसामवेदेषु कस्य अपि अन्तः न समायान्ति । अतः तेषाम् वेदभिन्नत्वम् स्वत एव स्पष्टम् भवति । इदमेव कारणम् अस्ति यत् तानि स्वयम् ब्राह्मणैः, सहैव च आरण्यकैः उपनिषद्भिः च अपि कदापि 'वेदः' इति न कथितानि निर्दिष्टानि वा । अस्तु ! एवम् ब्राह्मणानि स्वयम् शतपथब्राह्मणस्य बृहदारण्यकोपनिषदश्च अनुसारेणवेदवाङ्मयस्य परिधेः बहिर्गतानि सन्ति ।

**४–पश्चात् वेदचतुष्टयम्**–पश्चात्, यथा च अथर्ववेदीयगोपथब्राह्मणस्य 'चत्वारो वा इमे वेदा ऋग्वेदो यजुर्वेदः सामवेदः ब्रह्मवेदः (२।१६), 'आथर्वणो वेदोऽभवत्' (१।५), अथर्ववेदमधीयते, (१।२९) इत्यादिवाक्यैः ज्ञायते, अथर्वाङ्गिरस्संज्ञकानाम् मन्त्राणाम् संकलनम् अपि 'ब्रह्मवेदः', 'आथर्वणः वेदः', 'अथर्ववेदः' इतिरूपे विशिष्टाभिधानेन सह ऋग्वेदादिवेदत्रयेण समम् चतुर्थवेदरूपे स्वीकृतम् जातम्,एवञ्च यद्यपि तस्य विभिन्नानि नामानि दत्तानि, किन्तु, यथा च 'तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः' (मु० उ० १।१।५) इत्यादिवाक्यैः ज्ञायते, तस्य विशिष्टम् अभिधानम् 'अथर्ववेदः' इति प्रचलितम् अभवत् ।

**५—उपसंहरणम्**–इत्थम् अथर्वाङ्गिरससंज्ञकानाम् मन्त्राणाम् संकलने अपि अथर्ववेदाख्यचतुर्थवेदरूपे स्वीकृते सति ब्राह्मणग्रन्थानाम् चरमे विकासे सम्पन्ने 'वेदवाङ्मयस्य' परिधिः ऋग्वेदादिवेदचतुष्टयस्य रूपे एव जाता । पुनश्च यतः तस्याम् न संकोचः कृतः अस्ति, न च विकासः, अतः इदम् निश्चितरूपेण कथयितुम् शक्यते यत् तेषाम् अनुसारेण ऋग्वेदादिवेदचतुष्टयम् एव 'वेद' अभिधानस्य अभिधेयम्,फलतश्च वेदवाङ्मयस्य परिधेः अन्तर्गतम् अस्ति । यतश्च पूर्वोक्तप्रकारेण ब्राह्मणग्रन्थानुसारेण ऋग्वेदादयः शब्दाः ऋग्यजुःसामाथर्वाङ्गिरस्संज्ञकानाम् मन्त्राणाम् एव संकलनानाम् अभिधानानि सन्ति, ब्राह्मणानाम् आरण्यकानाम् उपनिषदानाम् वा वाक्यानाम् संकलनानाम् अभिधानानि न सन्ति, अतः इदम् निस्सन्देहरूपेण कथयितुम् शक्यते यत् तेषाम् अनुसारेण उक्ताः ऋगादयः मन्त्राः तेषाम् संकलनानि वा अर्थात् मन्त्रात्मकम् वाङ्मयम् एव 'वेदवाङ्मयस्य' परिधेः अन्तर्गतम् अस्ति, तद्व्यतिरिक्तम् च समस्तम् ब्राह्मणादिकम् वाङ्मयम् तद्बहिर्गतम् अस्ति ।

प्रकारान्तरेण तु, अनेन एकेन एव तथ्येन यत् उक्ता ब्राह्मणारण्यकोपनिषदः पूर्वोक्तप्रकारेण ऋग्वेदादिवेदानाम् स्वभिन्नस्य पूर्ववर्तिनः वाङ्मयस्य रूपे 'वेद' नाम्ना निर्देशम् कृत्वा तेभ्यः पृथक् स्वकीयस्य तस्य स्वतन्त्रस्य विषयस्य प्रतिपादनम् कुर्वन्ति, येन तासाम् स्वरूपम् संघटितम् अस्ति, इदम् स्पष्टम् अस्ति यत निर्देश्यम् ऋगवेदादि वाङ्मयम् तन्निर्देशकम् च ब्राह्मणादि वाङ्मयम् परस्परम् पृथक् वाङ्मयेस्तः, फलतश्व ब्राह्मणादिभिन्नम् केवलम् मन्त्रा-

त्मकम् वाङ्मयम् एव 'वेदवाङ्मयम्' अस्ति । एतदतिरिक्तम्, स्वयम् एकेन ब्राह्मणेन—गोपथब्राह्मणेन—'एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः' (२।१०) इतिरूपे स्पष्टतः रहस्यापरपर्यायम् आरण्यकम् ब्राह्मणम् उपनिषत् च तथैव वेदेभ्यः पृथक्, किन्तु सहैव तेषाम् परिकररूपे तैः घनिष्ठतया सम्बद्धाः च निर्दिष्टाः यथा च तेन कल्पादयः निर्दिष्टाः । यतः अत्र वेदेभ्यः 'सरहस्याः' 'सब्राह्मणाः' इतिवत् 'समन्त्राः' इति विशेषणम् न दत्तम् अस्ति, अतः स्पष्टम् वर्तते यत् वेदानाम् स्वरूपम् मन्त्रात्मकम् अस्ति ब्राह्मणादीनि च तेषाम् स्वरूपस्य संघटकांशाः न सन्ति, अपि तु केवलम् तेषाम् परिकराणि सन्ति । इदम् एव तथ्यम् यत् वेदाः केवलम् मन्त्रात्मकाः सन्ति, अनेन एव ब्राह्मणेन 'अग्निमीले····इत्येवमादिं कृत्वा ऋग्वेदमधीयते' (१।२९) इत्यादिरूपे चतुर्णाम् वेदानाम् स्वरूपम् निर्दिशता तेषाम् प्रथममन्त्राणाम् एव निर्देशम् कृत्वा, तद्व्यतिरिक्तस्य च ब्राह्मणादिवाङ्मयस्य कस्य अपि अंशस्य चर्चाम् न कृत्वा पूर्णतः स्पष्टम् अपि कृतम् अस्ति ।

६—**निर्धारितः सिद्धान्तः**—अस्तु ! उक्तेन विवेचनेन स्पष्टम् अस्ति यत् वेदाभिधानप्रयोगस्य सूत्रस्मृतिपुराणकालात् अपि पूर्ववर्तिन्याः ब्राह्मणकालीनायाः परम्परायाः अनुसारेण केवलम् मन्त्रात्मकम् वाङ्मयम् एव 'वेद' अभिधानस्य अभिधेयम् अस्ति, अर्थात् केवलम् मन्त्रात्मकम् एव वेदस्वरूपम् वर्तते । शब्दान्तरेषु, मन्त्राणाम् अनुसारेण यत् 'ब्रह्म' अस्ति, तदेव ब्राह्मणानाम् अनुसारेण 'वेद' अस्ति । इदम् एव कारणम् अस्ति यत् अद्यावधि 'ब्रह्म' शब्दः 'वेद' शब्दस्य पर्यायरूपे प्रचलन् सन् आगच्छति । यथा च पूर्वम् उक्तम् अस्ति, मन्त्रैः स्वेभ्यः 'ब्रह्म' अभिधानस्य प्रयोगः कृतः अस्ति, अतः उक्तप्रकारेण ब्राह्मणानाम् अनुसारेण केवलम् ब्रह्मशब्दाभिधेयाः मन्त्राः एव 'वेदाः' सन्ति; यतश्च 'ब्राह्मणानि', यथा च एषाम् नाम्ना एव प्रकटम् अस्ति, 'ब्रह्म' न सन्ति, अपि तु 'ब्राह्मणानि' सन्ति, अतः तानि स्वत एव 'वेदः' न भूत्वा वेदसम्बद्धानि अर्थात् 'वैदिकानि' सन्ति । एवञ्च उक्तपरम्परानुसारेण यत्र मन्त्रात्मकवाङ्मयव्यतिरिक्तम् समस्तम् ब्राह्मणादिवाङ्मयम् वेदवाङ्मयस्य परिधेः बहिर्गतम् अस्ति, तत्र प्राप्ताप्राप्तसमस्तमन्त्रसहितासु संकलितम् समस्तम् मन्त्रात्मकम् वाङ्मयम् वेदवाङ्मयस्य परिधेः अन्तर्गतम् अस्ति । फलतः यथा सूत्रस्मृतिपुराणानुसारेण मन्त्रव्यतिरिक्तस्य ब्राह्मणादिवाङ्मयस्य वेदवाङ्मयपरिधेःअन्तर्गतरूपे स्वीकरणम् वेदाभिधानप्रयोगस्य मूलायाः प्राचीनतमायाः वा परम्परायाः प्रतिकूलम् अस्ति, तथैव आर्यसमाजिपक्षानुसारेण कस्याम् अपि प्राप्तायाम् अप्राप्तायाम् वा मन्त्रसंहितायाम् संकलितानाम् मन्त्राणाम् वेदवाङ्मयस्य परिधेः बहिर्गतरूपे स्वीकरणम् अपि अस्याः मूलपरम्परायाः एव प्रतिकूलम् अस्ति ।

# १२

## श्रुतिस्वरूपम्

**१–प्रास्ताविकम्**–समस्तम् संस्कृतवाङ्मयम् मुख्यतः श्रुतिस्मृतिनामकयोः द्वयोः भागयोः विभज्यमानम् मन्यते। एतयोः भागयोः श्रुतिभागः प्राचीनतरः प्रामाणिकतरश्च मन्यते। स्मृतिभागश्च श्रुतिभागात् अर्वाचीनः, तदाधारकः तदाधारप्रमाणकश्च मन्यते। श्रुत्यनुकूला स्मृतिः एव प्रामाणिकी मन्यते। श्रुतिस्मृत्योः परस्परम् विरोधे च श्रुतेः एव प्रामाण्यम् मन्यते, तद्विरुद्धा च स्मृतिः अप्रामाणिकी मता सती उपेक्ष्यते। एवम् भारतीयपरम्परायाम् श्रुतेः प्रामाणिकतमरूपे मतत्वात् स्वत् एव एतादृशः विवादः समुपलभ्यमानः दृश्यते यत् श्रुतेः किम् स्वरूपम् अथवा श्रुति-वाङ्मयस्य का परिधिः अस्ति।

यद्यपि परम्परया 'श्रुतिस्तु वेदो विज्ञेयः' (मनु० २।१०) इत्यादिप्रकारेण 'श्रुति' शब्दस्य 'वेद' शब्दापरपर्यायिरूपे प्रायः मतत्वात्, फलतः श्रुतिस्वरूपस्य वेदस्वरूपेण अभिन्नत्वात्, विगते निबन्धचतुष्टये च वेदस्वरूपस्य चर्चितत्वेन आपाततः श्रुतिस्वरूपस्य पुनः चर्चा व्यर्था एव प्रतीयते, किन्तु, यथा च परम्परानुसन्धानेन ज्ञायते, श्रुतिस्वरूपस्य वेदस्वरूपेण पूर्णतः अभिन्नत्वाभावात् फलतश्च श्रुतिशब्दस्य पूर्णतः वेदशब्दपर्यायित्वाभावात् श्रुतिस्वरूपस्य श्रुतिवाङ्मयपरिधेः वा चर्चा आवश्यकी एव वर्तते।

**२—'श्रुति' अभिधानस्य मूलपरम्परा तदनुसारेण च तस्य अभिधेयम्**—यद्यपि विगतनिबन्धोक्तप्रकारेण 'वेद' शब्दः सामान्यतः ज्ञानस्य विद्यायाः वा, अथवा ज्ञानस्रोतसः वाङ्मयस्य ज्ञेयविषयस्य वा अर्थे मन्त्रकालात् एव प्रयुज्यमानः भवितुम् आरब्धवान्, ब्राह्मणकाले च आगत्य सः मन्त्रात्मकस्य वाङ्मयस्य विशिष्टाभिधानरूपे रूढः अपि अभवत्, किन्तु, यथा च मन्त्रब्राह्मणात्मके वाङ्मये—मन्त्रेषु, ब्राह्मणेषु, आरण्यकेषु, एतत्त्रये च संकलितासु उपनिषत्सु—दृष्टिपातकरणेन ज्ञायते, 'श्रुति' अभिधानस्य एतादृशी स्थितिः नास्ति। यदवधि मन्त्रात्मकस्य वाङ्मयस्य सम्बन्धः अस्ति, तस्मिन् तु अस्य शब्दस्य प्रयोगमात्रम् अपि न प्राप्यते। एवमेव ब्राह्मणारण्यकेषु,

तत्संकलिता: उपनिषद: विहाय, अन्यत्र कुत्रापि अस्य शब्दस्य प्रयोग: न उपलभ्यते । तत्संकलितासु उपनिषत्सु एव सर्वप्रथमम् अस्य शब्दस्य प्रयोग: 'न श्रुते: श्रोतारम् शृणुया:' (बृ० उ० ३।४।२), 'न हि श्रोतु: श्रुतेर्विपरिलोपो विद्यते' (बृ० उ० ४।३।२७), 'तस्यैषा श्रुतिर्यत्र कर्णावपि गृह्य' (छा० उ० ३।१३।८) इत्यादिरूपे प्राप्यते । किन्तु यथा च उक्तस्थलानाम् दर्शनेन ज्ञायते, अत्र अस्य शब्दस्य प्रयोग: कस्यापि वाङ्मयस्य सम्बन्धे न सन् केवलम् तस्य सामान्ये अर्थे श्रोत्रेन्द्रियव्यापारे तज्जन्ये श्रवणात्मके ज्ञाने वा—भूत: अस्ति । सहैव, एतादृशीषु उपनिषत्सु अपि: या: उपलब्धमन्त्र-ब्राह्मणात्मके वाङ्मये संकलितरूपे प्राप्ता: न सत्य: अपि ब्रह्मसूत्रै: मीमांसिता: निर्दिष्टा: वा वर्तन्ते, तद्धेतोश्च प्रामाणिक्य: फलतश्च उक्तवाङ्मयस्य लुप्ते अंशे संकलिता: मन्तुम् शक्यन्ते, 'श्रुति' शब्दस्य कस्मिन् अपि अर्थे प्रयोग: न उपलभ्यते । इत्थम् स्पष्टम् अस्ति यत् कस्मै अपि वाङ्मयाय 'श्रुति' अभिधानस्य परम्परायाः प्रवर्तनम् 'वेद' अभिधानस्य परम्पराया: प्रवर्तनम् इव स्वयम् मन्त्रब्राह्मणात्मकात् वाङ्मयात् न भवति, अपि तु तद्विपरीतम्अस्य वाङ्मयस्य अस्तित्वम् प्राप्तवत: सत: बहो: कालात् पश्चात् पूर्वोक्तप्रकारेण[1] सूत्रस्मृतिपुराणकालात् एव अभवत् । यथा च पूर्वम् दृष्टम् अस्ति[2], सूत्रस्मृतिपुराणै: अस्य अभिधानस्य—श्रुते:— प्रयोग: केवलम् मन्त्रात्मकाय वाङ्मयाय एव नहि, अपि तु समस्ताय मन्त्रब्राह्मणात्मकाय वाङ्-मयाय—मन्त्रेभ्य:, ब्राह्मणेभ्य:, आरण्यकेभ्य:, एतत्त्रयसंकलिताभ्यश्च उपनिषद्भ्य:—कृत: अस्ति, अत: अस्य अभिधानस्य परम्परागताभिधानत्वात् परम्परानुसारेण अस्य अभिधेयम् उक्तम् समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्-मयम् मन्तव्यम् भवति, फलतश्च इदम् समस्तम् वाङ्मयम् श्रुतिवाङ्मयस्य परिधे: अन्त: समाविशति । इदमेव कारणम् अस्ति यत् 'श्रुति:' इत्यभिधानम् स्वप्रयोगस्य प्रारम्भकालात् एव परम्परया ब्राह्मणारण्यकोपनिषद्भ्य: तथैव व्यवहृतम् सत् वर्तते स्म, यथा च तत् मन्त्रेभ्य: भूतम् अस्ति ।

**३—समस्तमन्त्रब्राह्मणात्मकवाङ्मयाय अस्य सूत्रकालीनस्य 'श्रुति' अभिधानस्य औचित्यम्**—इदम् एकम् सुविदितम् तथ्यम् अस्ति यत् मन्त्र-ब्राह्मणारण्यकोपनिषद्वाङ्मयम् साम्प्रतम् प्रणीयमाना: ग्रन्था: इव प्रारम्भात् एव लिपिबद्धम् सत् अस्तित्वम् न प्राप्नोत्, अपितु 'वाङ्मय' शब्दस्य वास्तविके मौलिके च अर्थे केवलम् वाचा एव स्वस्य स्वरूपस्य अभिव्यक्तिम् प्राप्तुम् अशक्नोत् ततश्च एकस्मात् सुदीर्घकालात् अनन्तरम् लिपिबद्धम् भवितुम् अशक्नोत् । फलत: तस्य सुरक्षाया: प्रकार: तस्य लिपिबद्धरूप-

---

१—पृष्ठ ३३-३४ ।

२—पृष्ठ ३३-३४।

प्राप्तिपर्यन्तम् अयमेव अभवत् यत् यथा-यथा च तस्य मूलवक्तृद्वारा प्रवचनम् सम्पद्यमानम् जातम्, तथा-तथैव तस्य अन्यजनैः 'श्रवणम्' अर्थात् श्रुत्वा धारणम् सम्पन्नम् जातम्। पश्चात् अस्य मूलप्रवचनस्य प्रारम्भिकश्रवण-कर्तृभिः इदम् अपरेभ्यः यथावत् उपदिष्टम् तैश्च पुनः तत् अपरेभ्यः उप-दिष्टम्। इत्थम् सुदूरात् अतीतकालात् समस्तस्य मन्त्रब्राह्मणात्मकस्य वाङ्-मयस्य उपदेष्टृगुरुद्वारा 'प्रवचनस्य' श्रोतृशिष्यद्वारा च 'श्रवणस्य' परम्परायाः रूपे समागतत्वात् अस्मै यत् सूत्रकाले 'आम्नाय' अभिधानम् इव 'श्रुति' अभिधानम् दत्तम् आसीत्, तत् पूर्णतः स्वाभाविकम् उचितम् च आसीत्।

**४—श्रुतत्वसंकेतनपरम्परा**—यद्यपि, यथा च अत्रैव पूर्वम् उक्तम्, सूत्र-कालात् पूर्ववर्तिनि वाङ्मये—मन्त्रेषु ब्राह्मणेषु च—मन्त्रात्मकस्य ब्राह्मणा-त्मकस्य वा वाङ्मस्य अभिधानरूपे 'श्रुति' शब्दप्रयोगपरम्परायाः प्रवर्तनम् न अभवत्, तथापि तस्य परिवर्तिनः अंशस्य काले पूर्ववर्तिनः अंशस्य परम्परा-गतश्रवणविषयत्वात् स्वभावतः तस्य परवर्तिना अंशेन पूर्ववर्तिनः अंशस्य 'श्रुत' रूपे संकेतनस्य एतादृश्याः परम्परायाः प्रवर्तनम् अभवत् यदनुसारेण सूत्रकाले पूर्वपरम्परया समागतस्य समस्तस्य मन्त्रब्राह्मणात्मकस्य वाङ्मयस्य 'श्रुतिः' इत्यभिधानम् स्वत एव प्राप्तम् अभवत्। इत्थम् च मन्त्रब्राह्मणात्म-काय वाङ्मयाय सूत्रकाले प्रदत्तम् इदम् अभिधानम् पूर्णरूपेण स्वपूर्वपर-म्परायाः अनुकूलम् अस्ति।

उक्तस्य तथ्यस्य स्पष्टप्रदर्शनार्थम् केषाञ्चित् उदाहरणानाम् दानम् उचितम् प्रतीयते। एकस्य ऋग्वेदीयसूक्तस्य वक्ता यदा 'अश्रवं हि भूरि···· युवभ्यामिद्राग्नी स्तोत्रं जनयामि नव्यम्' (१।१०९।२) इति कथयति, तदा सः स्पष्टतः स्वपूर्ववर्तिनः मन्त्रान् मन्त्रात्मकसूक्तानि वा 'अश्रवम्' इति शब्देन 'श्रुत' रूपे संकेतयति। अनेन एव प्रकारेण 'सं श्रुतेन गमेमहि मा श्रुतेन विरा-धिषि' (अ० वे० १।१।४), 'श्रुतानि शृण्वन्तो वयमायुष्मन्तः सुमेधसः' (अ० वे० ७।६१।२) इत्यादिकाः अथर्ववेदीयमन्त्राः स्वपूर्ववर्तिनः वाङ्मयस्य तद्व-र्णितविषयस्य वा तदा परम्परागतरूपेण श्रुतत्वात् श्रवणविषयत्वात् वा तत् तम् वा 'श्रुत' शब्देन निर्दिशन्ति। शतपथब्राह्मणम् 'अपि हि नऽऋषेर्वचः श्रुतम्' (६।२।२) इत कथयित्वा 'द्वे सृती अश्रृणवम्' (शु० य० मा० सं० १९।४७) इति यजुर्वेदीयमन्त्रम् निर्दिशत् सत् स्पष्टतः स्वपूर्ववर्तिनम् इमम् मन्त्रम् 'श्रुत' रूपे निर्दिशति। शुक्लयजुःसंहितायाः अन्तिमाध्यायरूपे संकलिता ईशावास्योपनिषद् 'अन्यदेवाहुर्विद्याया अन्यदाहुरविद्यायाः। इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे' (१०) इति रूपे स्वपूर्वकालसिद्धान्तितान् पुनश्च स्वकाले श्रवणपरम्परया प्राप्तान् विषयान् 'शुश्रुम' इतिद्वारा 'श्रुत' रूपे निर्दिशति। तदनु अस्तित्वम् प्राप्नुवती केनोपनिषद् 'अन्यदेव तद्विदि-

तादथो अविदितादधि। इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे' (१।३) इतिरूपे ईशावास्योपनिषद्द्वारा उक्तरूपे निर्दिष्टम् उक्तम् पूर्वपरम्परागतम् सिद्धान्तितम् विषयम् एव 'शुश्रुम' इति पदद्वारा 'श्रुत' रूपे निर्दिशति। छान्दोग्योपनिषद् च 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्' (७।१।३) इतिरूपे परम्परागतरूपेण श्रुतम् 'तरति शोकमात्मवित्' इति-विषयम् 'श्रुत' रूपे निर्दिशति।

यतः साक्षात् परम्परागतरूपेण वा श्रुतम् वचनम् विषयः वा 'श्रुतः' एव कथयिष्यते, अतः मन्त्रब्राह्मणात्मकस्य परवर्तिनि अंशे यत् श्रवणपरम्परा-प्राप्तः पूर्ववर्ती अंशः कश्चन विषयः वा 'श्रुतः' कथितः, तस्मिन् कापि विशिष्टा वार्ता नास्ति, तत् तु पूर्णतया स्वाभाविकम् एव वर्तते। फलतः सूत्र-स्मृतिपुराणैः यत् स्वपूर्ववर्ति समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्मयम्, यत् च एकया सुदीर्घकालीनया श्रवणपरम्परया समागतत्वात् स्वयमेव एका परम्परा-गता 'श्रुतिः' अभवत्, 'श्रुतिः' इत्यभिधानेन अभिहितम् अस्ति, तत् पूर्णतया मन्त्रब्राह्मणकालीनायाः स्वपूर्वपरम्परायाः अनुकूलम् एव कृतम् अस्ति। यथा मन्त्रब्राह्मणात्मकस्य वाङ्मयस्य कस्य अपि अंशस्य कृते तस्य श्रवण-परम्पराप्राप्तः पूर्ववर्ती अंशः एका 'श्रुतिः' आसीत्, तथैव सूत्रस्मृतिपुराणा-नाम् कृते दीर्घकालीनश्रवणपरम्पराप्राप्तम् तेभ्यः पूर्ववर्ति समस्तम् मन्त्र-ब्राह्मणारण्यकोपनिषदात्मकम् वाङ्मयम् समानरूपेण एका 'श्रुतिः' आसीत्, अतः तैः यत् एकम् श्रुतिरूपम् समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् विशिष्टरूपेण 'श्रुतिः' इत्यभिधानेन अलंकृतम्, तत् स्वाभाविकम् एव आसीत्। अस्मिन् तैः स्वपक्षात् कस्मिँश्चित् अपि वाङ्मये 'श्रुति', अभिधा-नस्य आरोपणम् न कृतम्, अपि तु तैः केवलम् 'श्रुतिः' एव 'श्रुतिः' कथिता, अत एव च तैः तद्व्यतिरिक्तम् समस्तम् वाङ्मयम् श्रुतिव्यतिरिक्तत्वात् 'श्रुतिः' इति न कथयित्वा 'स्मृतिः' इति कथितम्।

५—'श्रुति अभिधानपरम्परा—परम्परया यथा मन्त्रभागः कदापि 'स्मृतिः' न मतः, तथैव ब्राह्मणारण्यकोपनिषदात्मकः ब्राह्मणभागः अपि कदापि 'स्मृतिः' न मतः, अपि तु 'श्रुतिः' एव मतः। सूत्रस्मृतिपुराणानि तु पूर्वोप्रकारेण ब्राह्मणोपनिषदाम् वाक्यानि 'श्रुतिः' इति कथितवन्ति एव, निरु-क्तकारः यास्कः अपि स्वविषयप्रतिपादनम् मन्त्रब्राह्मणानाम् स्वोपज्ञतर्काणाम् च आधारे कृत्वा अन्ते' अयं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढोऽपि श्रुतितोऽपि तर्कतः। (नि० १३।१।१२) इति कथयित्वा मन्त्रान् ब्राह्मणानि च 'श्रुति' अभिधानेन एव अभिहितवान्। अत्र यतः 'मन्त्रार्थचिन्तायाः' आधारः 'श्रुतिः' कथिता अस्ति, अतः अत्र अर्थचिन्तनविषयीभूताः स्वयम् मन्त्राः 'श्रुति' रूपे निर्दिष्टाः

मन्यन्ताम् न वा, किन्तु ब्राह्मणानि, येषाम् च आधारे मन्त्राणाम् अर्थचिन्तनम् कृतम् अस्ति, अवश्यमेव 'श्रुति' शब्देन निर्दिष्टानि मन्तव्यानि सन्ति।

६—निर्धारितः सिद्धान्तः—उक्तप्रकारेण 'श्रुति' अभिधानप्रयोगस्य परम्परायाः प्रवर्तनकालात् आरभ्य अधुनावधि अविच्छिन्नसाहित्यिकपरम्परा-द्वारा निर्विवादरूपेण ब्राह्मणारण्यकोपनिषदः मन्त्रवत् एव 'श्रुतिः' कथिता मताश्च सन्ति। फलतः मन्त्रब्राह्मणात्मकस्य समस्तस्य वाङ्मयस्य श्रुति-वाङ्मयरूपे स्वीकरणे कीदृशस्य अपि विवादस्य उपस्थापनम् उचितम् न प्रतीयते। अस्मिन् प्रसङ्गे इदमपि ध्येयम् वर्तते यत् 'वेद' शब्दवत् 'श्रुति' शब्दोऽपि अपौरुषेयस्य ईश्वरप्रणीतस्य वाङ्मयस्य पर्यायवाचो शब्दः नास्ति, अतः 'वेद' अभिधानस्य इव 'श्रुति' अभिधानस्य आधारे अपि तदभि-धेयम् किमपि वाङ्मयम् अपौरुषेयम् ईश्वरप्रणीतम् वा न मन्तुम् शक्यते।

एवञ्च, यत्र केवलम् मन्त्रात्मकम् वाङ्मयम् एव श्रुतिवाङ्मयस्य परिधेः अन्तः मत्वा तद्व्यतिरिक्तस्य ब्राह्मणात्मकस्य वाङ्मयस्य तद्वहिर्ग-तत्वाभिमननम् 'श्रुति' अभिधानप्रयोगस्य मूलायाः प्राचीनतमायाः परम्प-रायाः प्रतिकूलम् अस्ति, तत्र सूत्रस्मृतिपुराणकालात् पूर्वम् श्रुतिरूपेण असमागच्छताम्, अपि तु तत्पश्चात् स्वास्तित्वम् प्राप्नुवताम् उपनिषन्नाम्ना प्रसिद्धानाम् अनेकेषाम् निबन्धानाम् श्रुतिवाङ्मयस्य परिधेः अन्तर्गतत्वाभिम-ननम् अपि अस्याः एव मूलपरम्परायाः प्रतिकूलम् अस्ति। एवञ्च, उपनिष-दाम् सम्बन्धे अयम् निष्कर्षः अस्ति यत् उपलब्धे मन्त्रब्राह्मणात्मके वाङ्मये संकलिताः, अथ च तत्र असंकलिताः अपि सत्यः ब्रह्मसूत्रचर्चिताः उपनिषदः श्रुतिवाङ्मयस्य परिधेः अन्तः सन्ति, यदा च तन्नामधारिण्यः अन्याः तद्वहि-र्गताः सन्ति।

अस्तु! एवम् पूर्वपरम्परया परस्परभिन्नकालयोः परस्परभिन्नाधारयोः प्रचलितत्वात् इमे द्वे अभिधाने—वेदः श्रुतिश्च—स्वभावत एव परस्परपर्यायौ न भूत्वा स्वकीयम् परस्परव्यतिरिक्तम् स्वतन्त्रम् अभिधेयम् धत्तः, फलतश्च अनयोः अभिधेयभूतयोः वाङ्मययोः परिधी अपि अस्मिन् रूपे परस्परभिन्ने स्तः यत् यदा केवलम् मन्त्रात्मकम् वाङ्मयम् वेदाभिधेयम् अस्ति, तदा समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् श्रुत्यभिधेयम् अस्ति। सूत्रस्मृतिपुराणकाले ब्राह्मणारण्यकोपषिदाम् अपि मन्त्रैः सह घनिष्ठतया सम्बद्धानाम् सताम् मन्त्र-वत् श्रुतिरूपेण सुदूरकालात् समागतत्वात्, फलतश्च तेभ्यः मन्त्रवत् एव स्वभा-वतः 'श्रुतिः' इत्यभिधानस्य दत्तत्वात्, मन्त्राणाम् विषये पूर्वपरम्परागतस्य 'वेदः' इत्यभिधानस्य पश्चाच्च तेभ्यः दत्तस्य 'श्रुतिः' इत्यभिधानस्य च परस्परम् पर्यायवत् जातत्वात्, वेदश्रुतीत्यभिधानद्वयम् पर्यायवत् मन्तुम् मार्गः प्रशस्तः अभवत्, फलतश्च 'श्रुति' शब्दाभिधेयब्राह्मणानि अपि वेदशब्दाभिधे-यानि मन्तुम् आरब्धानि। तस्मिन् काले रूढायाः 'वेदः सनातनः अपौरुषेयश्च'

इति मान्यतायाः कारणात् वेदप्रतिपाद्यम् परमश्रद्धेयम् परमप्रामाणिकम् च अमन्यत। इदम् गौरवम् ब्राह्मणप्रतिपाद्याय अपि प्राप्येत, यतो हि अन्यथा उक्तमान्यतायाः प्रकाशे तत्प्रतिपाद्यम् तत् महत्त्वम् प्राप्तुम् न अशक्नोत्, यस्य च तस्मिन् समये परमावश्यकता आसीत्, अतः तानि अपि सनातनानि अपौरुषेयाणि च प्रदर्शयितुम् तेभ्यः अपि 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' (आ०, श्रौ० सू० ३१) इत्यादिरूपे 'वेद' इत्यभिधानम् दत्तम् अस्ति, अन्यथा 'वेदः' 'श्रुतिः' च इमौ शब्दौ पूर्वोक्तरीत्या मूलपरम्पानुसारेण परस्परपर्यायौ न स्तः। फलतश्च यद्यपि सर्वः अपि 'वेदः' 'श्रुतिः' अस्ति, श्रुतिवाङ्मयपरिधौ वा समाविशति, किन्तु सर्वा अपि 'श्रुतिः' 'वेदः, नास्ति, वेदवाङ्मयपरिधौ वा न समाविशति।

# १३

## वेदानाम् महत्त्वम्

**१—प्रस्ताविकम्**—यतो हि वेदवाङ्मयम् सुदूरे अतीतकाले वर्तमानस्य मानवसमाजस्य धार्मिकभावनानाम् दार्शनिकविचारधाराणाम् च वर्णनम् प्रस्तुतम् करोति, अत इदम् विश्वसाहित्ये स्वकीयम् एकम् महत्त्वपूर्णम् स्थानम् धत्ते। अस्मात् वाङ्मयात् अतिरिक्तम् अन्यत् किमपि एतादृशम् वाङ्मयम् सम्पूर्णेऽपि विश्वे नास्ति यत् इदम् वाङ्मयम् इव मानवसंस्कृतेः प्राचीनतमस्य स्वरूपम् प्रकाशितम् करोति। मानवसंस्कृतेः मानवधर्मस्य च प्राचीनतमस्य स्वरूपस्य प्रकाशकम् इदमेव एकमात्रम् वाङ्मयम् सुरक्षितम् वर्तते। वेदवाङ्मयस्य अस्यैव महत्त्वस्य कारणात् प्राचीनकालीनस्य मानवस्य धार्मिकाणाम् दार्शनिकानाम् च अनुभूतीनाम् जिज्ञासवः विश्वस्य विभिन्नाः विद्वांसः इदम् स्वस्य अनुसन्धानपूर्णस्य अध्ययनस्य विषयम् कृतवन्तः सन्ति। अस्माकम् भारतीयानाम् कृते तु इदम् एकम् अपूर्वम् पैतृकम् निधानम् इव अस्ति। यत्र एकतः अस्माकम् संस्कृतसाहित्यस्य विभिन्नाः धाराः इदम् मूलम् उपजीव्यम् वा कृत्वा प्रवाहिताः सन्ति, तत्र अपरतः अस्माकम् जीवनधाराऽपि इदमेव स्रोतः कृत्वा सुदूरात् अतीतकालात् आरभ्य अधुनावधि प्रवहमाना वर्तते। फलतः अस्माकम् भारतीयानाम् कृते अस्य अध्ययनम् मननम् च ततोऽपि अधिकतरम् आवश्यकम् वर्तते। अपरञ्च, संस्कृतसाहित्यस्य अध्ययनम् तु तदवधि पूर्णमेव न कथयितुम् शक्यते, यदवधि वेदवाङ्मयस्यापि यथाशक्ति अध्ययनम् न कृतम् स्यात्। एतादृशस्य महत्त्वपूर्णस्य वाङ्मयस्य यावान् अपि महिमा गीयेत, तावान् अल्प एव अस्ति।

**२—परम्परागतम् महत्त्वम्**—भारतीयपरम्परायाम् वेदस्य स्वास्तित्वकालात् एव परमम् महत्त्वम् जातम्, यच्च अद्यावधि वर्तते, अनन्तरम् च स्थास्यति। अस्य एकैकम् अक्षरम् प्राचीनकालात् एव परमपावनम्, परमप्रामाणिकम् फलतश्च परमश्रद्धेयम् मन्यमानम् सत् वर्तते। इदम् अपि एकम् सुविदितम् तथ्यम् अस्ति यत् वैदिकपरम्परायाम् शब्दप्रमाणस्य अत्यधिकम् महत्त्वम् वर्तमानम् सत् अस्ति। शब्दप्रमाणस्य दृष्टया च

सम्पूर्णम् वाङ्मयम् श्रुतिस्मृतीतिप्रमुखवर्गद्वये विभज्य, 'श्रुतिः' स्वतःप्रमाण-रूपे सर्वोपरि प्रमाणम् मन्यते स्म, तद्व्यतिरिक्तम् च सम्पूर्णम् वाङ्मयम् स्मृतेः अन्तः कृत्वा, तत् श्रुत्यनुकूलम् सत् एव प्रमाणम् मन्यते स्म। एवम् उक्तायाम् परम्परायाम् शब्दप्रामाण्यस्य दृष्टया यत् महत्त्वम् सम्मानम् च श्रुतिवाङ्मयाम् प्राप्तय भवत् सत् वर्तते स्म, तत् अन्यस्मै कस्मैचित् अपि वाङ्मयाय प्राप्तम् न अभवत्। वैदिके समाजे परम्परागतरूपेण श्रुतिवाङ्-मयम् एतादृशम् स्वतःप्रमाणम् वाङ्मयम् मन्यते स्म यत् अस्य प्रामाणिक-तायाः सम्बन्धे कदापि केषाञ्चित् तर्काणाम् युक्तीनाम् वा आधारे कीदृशः अपि कोऽपि सन्देहः एव न प्रकटितः, अपि तु अस्य प्रतिपाद्यम् सदैव पुरुष-स्वभावसुलभेभ्यः भ्रमप्रमादविप्रलिप्सादिदोषेभ्यः सर्वथा मुक्तम् रहितम् वा मत्वा शिरोधार्यरूपे स्वीकरणीयम् अभवत्। यद्यपि अस्य अर्थनिर्धारणस्य प्रयत्नस्तु सदैव जातः, फलतश्च अस्मिन् सम्बन्धे विवादः अपि प्रचलितः सन् वर्तते स्म, किन्तु अस्य प्रामाणिकतायाः सम्बन्धे कदापि कोऽपि विवादः न अभवत्, अपि तु सर्वैः अस्य प्रामाण्यम् केनापि सन्देहेन संकोचेन वा विना नतमस्तकैः सद्भिः स्वीकृतम्।

यथा च ब्रह्मसूत्राणाम् साक्ष्येण ज्ञायते, एतेषाम् रचनकालेऽपि श्रुती-नाम् प्रामाण्यम् एतावत्सन्देहातीतम् स्वयंसिद्धम् च अमन्यत यत् ब्रह्मसूत्र कारः यदा स्वकीयम् किंचित् प्रतिपाद्यम् युक्तिभिः उपपत्तिभिः वा साधयि-तुम् प्रयत्नम् कुर्वन् इत्थङ्करणे स्वम् असमर्थम् प्राप्तवान् तदा स निःसंको-चम् श्रुतिमेव प्रमाणरूपे प्रस्तूय इदम् अवबुद्धवान् अस्ति यत् यस्य समाजस्य समक्षे सः स्वप्रतिपाद्यम् एकस्य मान्यस्य तथ्यस्य रूपे प्रस्तुवन् वर्तते, सः आपाततः अनुपपन्नरूपे प्रतीयमानम् अपि प्रतिपाद्यम्श्रुतिप्रमाणबलेन स्वी-कर्तुम् शक्नोति।[1] एतेन इदम् ज्ञायते यत् श्रुतिवाङ्मयाय स्वस्य स्वतः-प्रामाण्यस्य सम्बन्धे कियती अपूर्वा मान्यता प्राप्ता अस्ति।

एतादृशस्य स्वतःप्रमाणरूपे सम्मानितस्य महामहिमशालिनः श्रुति-वाङ्मयस्य अपि मूर्धन्यभूतम् वेदवाङ्मयम् वर्तते। यस्य महिमा स्वयम् श्रुतिवाङ्मयेन एव स्वीकृतः। यथा च स्वयम् वेदमन्त्राणाम् दर्शनेन ज्ञायते, कालक्रमेण परवर्तिभिः मन्त्रैः पूर्ववर्तिमन्त्राणाम् प्रशंसा स्तुतिः वा कृता वर्तते। पुरुषसूक्तीय 'तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे' (ऋ० वे० १०।९०।९) इति मन्त्रः एतादृशम् उद्गारम् अभिव्यनक्ति यत् ऋगादयः मन्त्राः मानवीयात स्रोतसः उद्भूताः न सन्ति इव। सामवेदीयकौथुमसंहि-तायाः 'ऋचं साम यजामहे याभ्याम् कर्माणि कृण्वते' (पू० ४।८।१०) इति

---

१—ब्रह्मसूत्र २।१।२७।

मन्त्रः ऋचम् साम च यजनीयत्वरूपे मन्यते। एवमेव अथर्ववेदीयशौनकसंहितायाः 'ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम्। एष मा तस्मान्मा हिंसीद् वेदः पृष्टः शचीपते' (७।५४।२) इति मन्त्रः ऋगादीन् ज्ञानस्रोतोरूपे स्तौति। वेदातिरिक्तम् ब्राह्मणादिकम् श्रुतिवाङ्मयम् तु अनेकशः 'अपि नऽऋषेर्वचः श्रुतम्', 'तद्धैतदृषिणा ह्युक्तम्' इत्यादिरूपेण वेदमन्त्रान् उद्धृत्य तेभ्यः स्वसम्मानम् प्रदर्शयति, 'त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात् सामवेदः' (श० ब्रा० ११।५।८।३) इत्यादिरूपे च वेदानाम् दिव्याम् उत्पत्तिम् कथयित्वा तेभ्यः स्वसम्मानम् प्रकटयति। पश्चात् सूत्रस्मृतिपुराणैः एवञ्च तदतिरिक्तेन सर्वेण अपि संस्कृतवाङ्मयेन वेदमहिमा गीत एव।

यथा च संस्कृतवाङ्मयस्य उपरि दृष्टिपातकारणेन ज्ञायते यत् वेदात् अनु अस्तित्वम् प्राप्नुवता सर्वेण अपि वाङ्मयेन प्रायः प्रत्यक्षतः अप्रत्यक्षतः वा वेदम् उपजीव्य तदाधारेण स्वप्रतिपाद्यप्रतिपादनम् कृतम्। ब्राह्मणानि प्रत्यक्षतः वेदमन्त्राधारेण स्वप्रतिपाद्यम् प्रतिपादयन्ति, तेषाम् विनियोगम् प्रदर्शयन्ति, तदर्थान् च यथावसरम् प्रकाशयन्ति। आरण्यकोपनिषदः वेदमन्त्रेषु बीजरूपेण अभिव्यक्तम् दर्शनम् पल्लवितम् कुर्वन्ति। सूत्राणि स्मृतयश्च तेषाम् आधारेण एव विभिन्नान् आचारान् लोकव्यवहारम् च प्रदर्शयन्ति। इतिहासपुराणानि वेदाख्यानानि एव पल्लवितानि कुर्वन्ति, तानि च आश्रित्य पुनः विभिन्नानाम् काव्यनाटकादीनाम् रचना जाता। अन्ये च ग्रन्थाः वेदाधारेण एव स्वप्रतिपाद्यप्रतिपादने अग्रसराः भवन्ति। एवम् वेदवाङ्मयम् सर्वस्य अपि संस्कृतवाङ्मयस्य उपजीव्यत्वरूपे परमम् महत्त्वम् धत्ते।

इदम् वेदवाङ्मस्य एव अपरम् महत्त्वम् यत् परम्परया तत् अपौरुषेयम् ईश्वरप्रणीतम् च उद्घोषितम्, तादृशम् मन्यते च। यद्यपि अयम् विचारस्य विषयः अस्ति यत् वेदमहत्त्वात् कारणात् तस्य अपौरुषेयता ईश्वरप्रणीतता वा स्वीकृता अथवा वेदस्य अपौरुषेयत्वात् तस्य महत्त्वम् स्वीकृतम्। यदि द्वितीया स्थितिः वर्तते चेत् वेदस्य स्वप्रतिपाद्याधारेण स्वस्वरूपनिष्ठम् महत्त्वम् न अवशिष्यते, अपि तु केवलम् स्वमूलमहत्त्ववशात् महत्त्वम् आयाति। किन्तु वस्तुतः इयम् वार्ता नास्ति। वेदस्य महत्त्वम् स्वप्रतिपाद्याधारेण स्वस्वरूपनिष्ठम् एव वर्तते, तद्वशात् एव परम्परया तस्य अपौरुषेयता ईश्वरप्रणीतता वा मता संभाव्यते। अतः वेदस्य स्वरूपनिष्ठम् महत्त्वम् एव सदा अनुसन्धेयम्।

३—**विविधम् महत्त्वम्**—वेदस्य विविधम् महत्त्वम् वर्तते। सर्वप्रथमम् तु तस्य विशुद्धम् धार्मिकम् महत्त्वम् वर्तते। भारतवर्षे वैदिके समाजे सर्वः अपि धार्मिकः कर्मकलापः वेदाधारेण एव सम्पाद्यते। तदाधारेण तदाधारितग्रन्थाधारेण वा एव कस्य अपि कृत्यस्य धार्मिकत्वाधार्मिकत्वनि-

र्णयः क्रियते। 'वेदोऽखिलो धर्ममूलम्' इतिवाक्यानुसारेण धर्मस्य मूलम् अर्थात् परमम् प्रमाणम् प्रवर्तकम् वा वेदः एव मन्यते। तुलनात्मकधर्मविज्ञानस्य दृष्ट्या अपि वेदस्य परमम् महत्त्वम् अस्ति।

वेदस्य अपरम् महत्त्वम् सांस्कृतिकम् वर्तते। भारतीयानाम् सर्वस्य अपि सांस्कृतिकजीवनस्य प्रत्यक्षतः अप्रत्यक्षतः वा मूलम् वेदवाङ्मयम् एव अस्ति। याम् संस्कृतिम् वेदः विकसिताम् अकरोत्, सा एव प्राचीनकालात् आरभ्य अद्यावधि भारतीयजीवनधारायाः मूलम् वर्तते।

वेदस्य अपरम् महत्त्वम् दार्शनिकम् वर्तते। यानि मुख्यानि भारतीयानि दर्शनानि सन्ति, तेषाम् विचारधाराणाम् यत्किंचित् तत्त्वम् तु वेदे अनुसन्धातुम् शक्यते एव, किन्तु भारतस्य यत् राष्ट्रीयम् दर्शनम् 'वेदान्तः' वर्तते, तस्य तु मूलम् वेदः एव वर्तते। या दार्शनिकी विचारधारा मूलरूपेण वेदे अभिव्यक्ता, तस्याः एव क्रमिकः विकासः उपनिषत्सु दृश्यते, उपनिषदाधारेण च वेदान्तदर्शनस्य स्थापना जाता, यस्य च विकासः अग्रे ब्रह्मसूत्रतद्भाष्यादिषु जातः।

वेदस्य अपरम् महत्त्वम् साहित्यिकम् वर्तते। यथा च अधुना एव पूर्वम् दृष्टम्, समस्तस्य संस्कृतवाङ्मयस्य प्रत्यक्षतः अप्रत्यक्षतः वा उपजीव्यम् वेदवाङ्मयम् वर्तते। वेदम् अनु अस्तित्वम् प्राप्नुवता संस्कृतवाङ्मयेन तस्मात् साक्षात् व्यवहितरूपेण वा भाषा शब्दावली वा गृहीता, प्रतिपाद्याः अर्थाः अपि गृहीताः। स्वयम् अपि वेदे या साहित्यिकता वर्तते तस्याः अपि न्यूनम् महत्त्वम् नास्ति। सहैव तस्मिन् यद् विभिन्नविषयाणाम् न्यूनाधिकरूपेण सूक्ष्मविकसितरूपेण वा प्रतिपादनम् अस्ति, तत् अपि तस्य अपूर्वम् महत्त्वम् द्योतयति।

वेदस्य अपरम् महत्त्वम् भाषावैज्ञानिकम् वर्तते। वेदः विश्वस्य उपलब्धम् प्राचीनतमम् वाङ्मयम् अस्ति, अतः तस्य भाषा भाषावैज्ञानिकदृष्ट्या अतीव महत्त्वपूर्णा अस्ति। तस्याः विश्वस्य अन्याभिः प्राचीनाभिः भाषाभिः सह भाषावैज्ञानिकेन तुलनात्मकेन अध्ययनेन भाषावैज्ञानिकैः वहु प्राप्तुम् शक्यते, यत्प्राप्त्यर्थम् तैः प्रयासः अपि कृतः क्रियते च, तथा च तत्र साफल्यम् अपि लब्धम्। वस्तुतः तुलनात्मकभाषाविज्ञानस्य स्थापना एव वेदभाषापरिचयेन जाता।

वेदस्य अपरम् महत्त्वम् ऐतिहासिकम् अस्ति। तस्य विश्वस्य उपलब्धप्राचीनतमवाङ्मयत्वात् स्वसमकालीनानाम् विभिन्नतथ्यानाम् विषये तेन प्रकाशः पातयितुम् शक्यते, यश्च अनुसन्धातृभिः ग्रहीतुम् पार्यते। भारतस्य कृते तु वेदस्य इदम् महत्त्वम् अत्यन्तम् एव अपेक्षणीयम् वर्तते। अस्य आधारेण प्राचीनरूपे सिद्धस्य तस्य इतिहासस्य पुनः संघटनम् कर्तुम् शक्यते।

इदानीम् भारतस्य कृते वेदस्य सर्वोपरि महत्त्वम् राष्ट्रीयम् वर्तते। यथा च पूर्वम् उक्तम्,[1] अस्य आधारेण भारतस्य राष्ट्रीयम् गौरवम् सुरक्षितम् सत् वर्धमानम् वर्तते। वेदस्य आधारे एव भारतीयैः इदम् उद्-घोषयितुम् शक्यते यत् विश्वस्य उपलब्धम् प्राचीनतमम् वाङ्मयम् वेदरूपे तेषाम् एव वाङ्मयम् अस्ति। तदाधारे च तैः इदम् कथयितुम् शक्यते यत् तेषाम् संस्कृतिः सभ्यता च अतीव प्राचीना वर्तते। पूर्वकाले ते असंस्कृताः असभ्याः वा न आसन्, अपि तु यदा विश्वस्य बहूनाम् राष्ट्राणाम् जन्म अपि न जातम्, जातेषु अपि तेषु सम्यक् विवेकः एव न उत्पन्नः आसीत्, तदा भारतम् ज्ञानविज्ञानयुक्तम् सत् सुसंस्कृतरूपे सुसभ्यरूपे च विराजते स्म।

अस्तु! उक्तप्रकारेण वेदः विविधमहत्त्वशाली वर्तते। फलतश्च तस्मात् विभिन्नफलकाङ्क्षिभिः सः यथा पूर्वकाले अधीयते स्म अनुसन्धीयते स्म च, तथैव इदानीम् अपि अस्माभिः सर्वैः भारतीयैः सः सदैव यथाशक्ति अध्येयः अनुशीलनीयश्च, येन च वैयक्तिकेन कल्याणेन सह सामाजिकम्, राष्ट्रीयम्, विश्वजनीनम् च कल्याणम् एव भविष्यति।

---

१—पृष्ठ ८।

१४

# वेदानाम् उद्भवः (अ)

## (परम्परागतम् मतम्)

१—**मीमांसकानाम् मतम्**—वेदवाङ्मयम् समग्रे भारतीये साहित्ये तु प्राचीनम् अस्ति एव, किन्तु तत् समग्रे विश्वसाहित्ये अपि प्रायः प्राचीनतमम् उपलब्धम् वाङ्मयम् मन्यते। किन्तु भारतीयपरम्परागतमान्यतानुसारेण तु तत् अनादि अपौरुषेयम् च मन्यते अर्थात् कस्मिन् अपि कालविशेषे केन अपि पुरुषविशेषेण तस्य रचना न कृता। अस्याः मान्यतायाः प्रबलतमाः प्रतिपादकाश्च भारतीयाः मीमांसकाः सन्ति। केनचित् आन्तरिकमतभेदेन सह एषाम् प्रमुखम् मतम् अस्ति यत् अस्य जगतः कदापि सृष्टिः न जाता, न च अस्य प्रलयः एव भविष्यति। इदम् जगत् एवमेव अनादिकालात् प्रवर्तमानम् अस्ति, अनन्तकालपर्यन्तम् च प्रवृत्तम् स्थास्यति। अस्य जगतः कः अपि स्रष्टा नियामकः वा ईश्वरः अपि नास्ति। यथा अस्य जगतः कस्मिन् अपि कालविशेषे केन अपि पुरुविशेषेण (जीवेन ईश्वरेण वा) सृष्टिः न कृता, तथैव वेदवाङ्मयस्य कस्मिन् अपि कालविशेषे केन अपि पुरुषविशेषेण (जीवेन ईश्वरेण वा) सृष्टिः न कृता। यथा जगत् अनादिपरम्परया प्रवर्तमानम् सत् वर्तते, तथैव वेदवाङ्मयम् अनादिभूतया गुरुशिष्यपरम्परया प्रवर्तमानम् सत् वर्तते। एवम् वेदवाङ्मयम् अनादि अपौरुषेयम् च अस्ति। मीमांसकानाम् अनुसारेण वेदः भागद्वये विभक्तः अस्ति—मन्त्रे ब्राह्मणे च, मन्त्रब्राह्मणात्मकम् च समस्तम् वाङ्मयम् अनादि अपौरुषेयम् च अस्ति।

२—**वेदान्तिनाम् मतम्**—वेदान्तिभिः उक्ताम् परम्परागतमान्यताम् मन्यमानैः अपि तस्याः उपपत्तिः किंचिद्भिन्नरूपे प्रदर्शिता। मीमांसकाः इव ते अपि इदम् मन्यन्ते यत् मन्त्रब्राह्मणात्मकम् समग्रम् वाङ्मयम् वेदः अस्ति, तच्च अनादि अपौरुषेयम् च अस्ति। किन्तु सहैव ते इदम् मन्यन्ते यत् अस्य जगतः सृष्टिप्रलयौ भवतः। सृष्टिप्रलयौ च स्वाभाविकरूपेण औपाधिकरूपेण

वा अस्य जगतः स्रष्टृ नियन्तृ च ब्रह्म करोति, यच्च जगत्कारणम् जगदीश्वरम् च अस्ति। जगत्सृष्टौ सत्याम् तदङ्गभूतस्य वेदस्य अनुद्भवः कथम् संभवी, इति प्रश्नस्य उत्तरे वेदान्तिनाम् कथनम् अस्ति यत् वेदः अस्य सृष्टस्य प्रतीयमानस्य वा जगतः अङ्गम् नास्ति, फलतश्च जगता सह तस्य सृष्टिप्रलयौ न भवतः। वेदस्तु एकम् अनादि अपौरुषेयञ्च च वाङ्मयम् अस्ति, यच्च अनादिकालात् एव अनादेः ईश्वरस्य स्वाभाविकस्य ज्ञानस्य विषयः भवन् वर्तते। अनन्तकालावधि च अनन्तस्य ईश्वरस्य ज्ञानस्य विषयः भवन् स्थास्यति। शब्दान्तरेषु, अनादिकालात् एव ईश्वरस्य वेदः अनेन प्रकारेण स्वत एव स्मृतः अस्ति, यथा कस्यचित् जनस्य किमपि गीतम् पद्यम् वा स्मृतम् स्यात्। ईश्वरस्य वेदविषयिणी स्मृतिः तस्य स्वरूपानुबन्धिनः स्वाभाविकस्य ज्ञानस्य अङ्गम् अस्ति। फलतः यदातः ईश्वरः अस्ति, तदातः एव वेदः अस्ति। यतश्च ईश्वरः अनादिः अस्ति, अतः वेदः अनादिः अस्ति, ईश्वरः अनन्तः, अतः वेदः अनन्तः अस्ति। जगत्सृष्टेः अनन्तरम् ईश्वरः देवानाम् ऋषीणाम् वा हृदये वेदम् प्रकाशयति, पुनः गुरुशिष्यपरम्पराद्वारा जगति वेदः प्रचलन् सन् वर्तते, जगतः प्रलये च सम्पन्ने सर्वस्मिन् अपि नष्टे वेदः स्वमूलाश्रये ईश्वरे पूर्ववत् स्थितः वर्तते।

**३—नैयायिकानाम् मतम्**—भारतीयनैयायिकाः वदस्य अनादित्वम् अपौरुषेयत्वम् च तर्कस्य निकषे कषित्वा निर्णीतवन्तः यत् उक्ता मान्यता उक्तरूपे तर्कसंगता नास्ति ; प्रत्येकम् सावयवम् वस्तु एकम् कार्यम् भवति, प्रत्येकम् च कार्यम् येन केन अपि कर्त्रा कालविशेषे उत्पादितम्, निर्मितम् कृतम् वा भवति। वेदः एकम् सावयवम् वस्तु वर्तते, यतो हि सः वर्णशब्दवाक्यसंयोगेन निष्पन्नः अस्ति, सावयवत्वात् च सः एकम् कार्यम् अस्ति। फलतः सः केन अपि कर्त्रा कस्मिन् अपि कालविशेषे कृतः अस्ति, एवम् च सः अनादि अपौरुषेयश्च न सन् सादिः पौरुषेयश्च वर्तते। इयती वार्ता अवश्यम् अस्ति यत् यतः वेदः एकम् महत् कार्यम् वर्तते, अनन्तस्य ज्ञानस्य निधानम अस्ति, अतः स अल्पज्ञस्य जीवस्य कृतिः न सन् सर्वज्ञस्य पुरुषस्य–ईश्वरस्य–कृतिः अस्ति। सृष्टिप्रारम्भे ईश्वरः वेदम् रचयति, प्रलये सति जगता सह वेदः अपि विनश्यति। नैयायिकाः अपि मन्त्रब्राह्मणात्मकम् समग्रम् वाङ्मयम वेदम् मन्यन्ते, इदम् समग्रम् च वाङ्मयम् उक्तप्रकारेण ईश्वरीयाम् कृतिम् मन्यन्ते।

**४—स्वामिनः दयानन्दस्य मतम्**—आधुनिकाले समागत्य आर्यसमाजप्रवर्तकः स्वामी दयानन्दः वेदविषये विचारम् कृतवान्। सः इमाम् मान्यताम् स्वीकृतवान् यत् वेदः अपौरुषेयः अस्ति, किन्तु सहैव सः कथितवान् यत् वेदः ईश्वरीया कृतिः अस्ति। इत्थम् तस्य अनुसारेण 'अपौरुषेय' शब्दस्य अर्थः मीमांसकवेदान्तिनैयायिकानाम् अनुसारेण न सन् अयम् अस्ति यत् वेदः कस्य

अपि पुरुषस्य अर्थात् कस्य अपि जीवस्य व्यक्तिविशेषस्य वा रचना न सन् उक्तरूपात् पुरुषात् भिन्नस्य अपुरुषस्य रचना अस्ति । एवम् सः मीमांसकानाम् वेदान्तिनाम् वा मतस्य समर्थनम् न कृत्वा एकेन प्रकारेण नैयायिकानाम् एव मतम् स्वीकृतवान् ।

अस्मिन् प्रसङ्गे इदमपि ज्ञेयम् अस्ति यत् सः पूर्ववर्तिनाम् मीमांसक-वेदान्तिनैयायिकानाम् अनुसारेण समग्रम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् वेदम् न अमन्यत, अपि तु तद्विपरीतम् उक्तवाङ्मयस्य एकस्य मन्त्रात्मकस्य भागस्य अपि केवलम् चतुःसंहितात्मकम् अंशम्[1] वेदम् अमन्यत, फलतश्च उक्तपरम्परागतमान्यतायाः अनुसारेण तमेव ईश्वरप्रणीतम् स्वीकृतवान्, तद्व्यतिरिक्तम् च अवशिष्टम् समग्रम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् वेदम् न मत्वा, अपितु वेदव्याख्यानमात्रम् मत्वा, फलतश्च तत् ईश्वरप्रणीतम् न मन्यमानः सन् ऋषिप्रणीतम् अमन्यत । दयानन्दस्वामिनः कथनम् अस्ति यत् मन्त्रब्राह्मणात्मकस्य वाङ्मयस्य ब्राह्मणभागे कालविशेषस्य इतिहासः उपलभ्यते, यश्च ईश्वरप्रणीते वाङ्मये असंभवी, अतः तस्य ईश्वरप्रणीततत्वासिद्धत्वात् वेदत्वम् नास्ति । सहैव तत्र मन्त्रात्मकस्य भागस्य तस्य चतुःसंहितात्मकस्य अंशस्य वा व्याख्यानम् समुपलभ्यते, अतोऽपि तस्य वेदव्याख्यानमात्रत्वात् वेदत्वम् फलतश्च ईश्वरप्रणीतत्वम् स्वत एव निरस्यते । एवमेव चतुःसंहितात्मकात् अंशात् व्यतिरिक्ते मन्त्रभागे—उक्तांशव्यतिरिक्तासु समस्तासु मन्त्रसंहितासु—उक्तांशरूपवेदव्याख्यानस्य उपलब्धत्वात् तस्य अपि वेदव्याख्यानमात्रत्वात वेदत्वम् फलतश्च ईश्वरप्रणीतत्वम् दूरीभवति ।

केवलम् चतुःसंहितात्मकः अंशः एव वेदः अथवा समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् वेदः, इति तु अन्यः विषयः अस्ति, यस्मिन् च पूर्वम् विचारः जातः एव[2], प्रस्तुतप्रसङ्गे तु इदमेव ध्येयम् अस्ति यत् दयानन्दस्वामिनः अनुसारेण समस्तम् मन्त्रब्राह्मणात्मकम् वाङ्मयम् ईश्वरप्रणीतम् नास्ति, अपितु तस्य केवलम् चतुःसंहितात्मकः अंशः एव ईश्वरप्रणीतः अस्ति ।

**५—परम्परागतमतसमीक्षणम्**—अत्र वेदानाम् उद्भवस्य सम्बन्धे प्रचलितानि परम्परागतानि यानि प्रमुखानि मतानि प्रदर्शितानि सन्ति तैः स्पष्टम् अस्ति यत् कस्मिन् अपि काले प्रवृत्ताम् इमाम् मान्यताम् यत् वेदः

---

१—ऋग्वेदीयशाकलसंहिता, शुक्लयजुर्वेदीयमाध्यन्दिनसंहिता, सामवेदीयकौथुमसंहिता, अथर्ववेदीयशौनकसंहिता ।

२—वेदस्वरूपविषयकम् निबन्धचतुष्टयम्, पृष्ठ ३३-४५ ।

अनादिः अपौरुषयश्च अस्ति अधिकाधिकरूपेण उपपन्नाम् सम्पादयितुम् प्रयत्नः निरन्तरम् क्रियमाणः अभवत्। मीमांसकाः वेदान् नितान्तम् एव निराधाररूपे अपौरुषेयान् अमन्यन्त। वेदान्तिनः तान् अपौरुषेयान् मन्यमानाः अपि तेषाम् नित्यम् आधारम् ईश्वरम् अमन्यन्त। नैयायिकाः उक्ताम् मान्यताम् अधिकतरम् उपपन्नाम् कर्तुम् वेदान् ईश्वरप्रणीतान् अमन्यन्त। अन्ते च स्वामी दयानन्दः वेदनाम्ना प्रसिद्धे समस्ते वाङ्मये उक्ताम् मान्यताम् उपपन्नाम् सतीम न दृष्ट्वा सीमितम् वाङ्मयम् एव वेदम् मत्वा तस्य एव सम्बन्धे परम्परागताम् मान्यताम् उपपन्नाम् प्रदर्शयितुम् प्रयत्नम् कृतवान्। इत्थम् श्रीस्वामिनम प्रति आगच्छन्ती-आगच्छन्ती उक्ता मान्यता तम् प्राप्य अल्पीयसः एव वाङ्मयस्य विषये अवस्थिता अभवत्। पुनश्च श्रीस्वामिनः एव तासाम् युक्तीनाम्, यासाम् च 'वेद' इति मन्यमानस्य वाङ्मयस्य अधिकांशम्—अनेकाः संहिताः समस्तानि च ब्राह्मणानि—ईश्वरप्रणीतम् न मन्तुम् सः उचितरूपेण प्रयोगम् कृतवान् अस्ति, यदि तस्य अल्पांशस्य सम्बन्धे अपि, यम् श्रीस्वामी ईश्वरप्रणीतम् अमन्यत, प्रयोगः क्रियते चेत् तस्य अपि ईश्वरप्रणीतत्वम न अवशिष्यते।

अस्तु! उक्तप्रकारेण परम्परागतमान्यता ताम् मन्यमानैः एव क्रमशः परिष्कृता सती एतादृशम् रूपम् प्राप्नोति यत् सा स्वतः स्वकीयम् अस्तित्वम् विहाय अस्यै उपपन्नायै स्वीकरणीयायै च मान्यतायै स्थानम् अर्पयति यत् वेदाः कैः अपि महापुरुषैः रचिताः सन्तु नाम, कियति च अपि प्राचीनकाले रचिताः सन्तु नाम, किन्तु ते कस्मिन् अपि कालविशेषे कैश्चित् पुरुषैः एव रचिताः सन्ति, अथ च परम्परागतमान्यता तु केवलम् तस्याः धार्मिकायाः प्रवृत्तेः प्रसवः अस्ति यस्याः अनुसारेण विभिन्नधर्माणाम् अनुयायिनः स्वान् प्राचीनधर्मग्रन्थान् अनादीन् ईश्वरीयान् उद्गारान् वा मत्वा तान् प्रति स्वम् श्रद्धाभावम् सम्मानम् च प्रकटयन्ति अथ च अस्मिन् रूपे वास्तविकानाम् मनीषिप्रणेतृजनानाम् महत्त्वम् तिरोदधति।

## १५

# वेदानाम् : उद्भव (आ)

## (तथ्यानुकूलम् मतम्)

१—**अपौरुषेयत्वनिरासः**—यथा च पूर्वम् कथितम् अस्ति, वेदानाम् विषये परम्परागता मान्यता अस्ति यत् ते अनादयः अपौरुषेयाश्च सन्ति, अथवा सृष्टिप्रारम्भे ईश्वरेण प्रणीताः सन्ति। आधुनिकम् विद्वज्जगत् इमाम् मान्यताम् बुद्धिग्राह्याम् तथ्यानुकूलाम् च न दृष्ट्वा न स्वीकरोति। किमपि वाङ्मयम् अपौरुषेयम् अपि भवितुम् शक्नोति, इयम् कल्पना अपि न कर्तुम् शक्यते। प्रत्येकम् वाङ्मये केषाञ्चित् विचाराणाम् भावानाम् वा अभिव्यक्तिः भवति, एषाम् च अभिव्यक्तानाम् विचाराणाम् भावानाम् च केनापि पुरुषेण एव अनिवार्यतः सम्बन्धः भवति अर्थात् एषाम् विचाराणाम् भावानाम् च स्रोतः कश्चन पुरुषः एव भवति यश्च एभ्य कस्यापि वाङ्मयस्य रूपे अभिव्यक्तिम् ददाति। अतः समस्तम् विश्ववाङ्मयम् पौरुषेयम् एव अस्ति, अपौरुषेयम् नास्ति। वेदाः अपि एतदपवादाः न सन्ति। वेदेषु अपि अन्येषु समस्तेषु वाङ्मयेषु इव विचाराणाम् भावानाम् च अभिव्यक्तिः अस्ति, फलतश्च ते विचाराः भावाश्च केषाञ्चित् पुरुषाणाम् स्रोतसः उद्गताः सन्ति, एवञ्च तेऽपि पौरुषेयाः सन्ति, अपौरुषेयाः नहिं। वेदेषु 'वयं स्याम पतयो रयीणाम्' (ऋ० वे० १०।१२१।१०), 'तस्मै वाताय हविषा विधेम' (ऋ० वे० १०।१६८।४) इतिसदृशाः असंख्याः उक्तयः सन्ति, यासु विभिन्नाः कामनाः प्रकटिताः सन्ति। इमाः कामनाः कथम् अपौरुषेयाः भवितुम् शक्नुवन्ति ? इमास्तु केषाञ्चित् तेषाम् पुरुषाणाम् एव कामनाः सन्ति ये च धनस्य स्वामिनः भवितुम् इच्छन्ति, वातदेवाय च यजनम् कर्तुम् इच्छन्ति। यदा इमाः कामनाः एव अपौरुषेयाः न सन्ति, तदा ताभ्यः अभिव्यक्तम् रूपम् ददानाः इमाः उक्तयः एव कथम् अपौरुषेयाः भवितुम् शक्नुवन्ति ? उक्ताः कामनाः दधानाः पुरुषाः ताः आसाम् उक्तीनाम् रूपे तथैव प्रकटिताः अकुर्वन्, यथा अन्ये सर्वे पुरुषाः स्वकामनाः स्वाभिः उक्तिभिः

प्रकटयन्ति। यदा कापि अनुभूतिः—विचारानुभूतिः भावानुभूतिः वा—एव नियमतः अपौरुषेया न भवितुम् शक्नोति, तदा तस्याः अभिव्यक्तिस्तु कथमपि अपौरुषेया न भवितुम् शक्नोति। उक्तप्रकाराः अनुभूतयः तदैव कस्मिँश्चित् कालविशेषे प्रकटीभवितुम् अवसरम् प्राप्तवत्यः स्युः, यदा च आसाम् उक्तीनाम् स्रोतोरूपाणाम् उद्गमरूपाणाम् वा पुरुषाणाम् धनमहत्त्वस्य अनुभूतिः जाता स्यात्, तैः धनस्य अभावः अनुभूतः स्यात्, फलतश्च तेषाम् तत् प्राप्तुम् कामना जाता स्यात्। एवमेव वातस्यः महत्त्वस्व अनुभूतिम् कृत्वा तेषाम् हृदये तस्य यजनम् कर्तुम् कामना जागृता स्यात्। अनेनैव प्रकारेण 'यत्रा नः पूर्वे पितरः परेयुः (ऋ० वे० १०।१४।७) इतिसदृशानि अनेकानि वचनानि कथम् अपौरुषेयाणि मन्तुम् शक्यानि, इमानि तु तेषामेव पुरुषाणाम् वचनानि मन्तव्यानि भविष्यन्ति येषाम् पूर्वपितृजनानाम् निर्देशः एषु कृतः वर्तते। एतादृशाः उक्तयः तदैव कस्मिँश्चित् कालविशेषे अवसरम् प्राप्तवत्यः स्युः, यदा च इमाः कथयताम् पूर्वपितरः अस्मात् लोकात् प्रयाणम् कृतवन्तः स्युः। एवम् उक्तप्रकाराणि वचनानि दधानः वेदः न तु अनादिः वर्तते न च अपौरुषेयः।

२—**ईश्वरप्रणीतत्वनिरासः**—उक्तप्रकाराभिः उक्तिभिः एव इदमपि स्पष्टम् अस्ति यत् वेदः ईश्वरप्रणीतोऽपि नास्ति। किम् एकः ईश्वरः स्वस्मै 'वयम्,' 'स्याम,' 'विधेम,' इत्यादीनाम् बहुवचनान्तानाम् पदानाम् प्रयोगम् कर्तुम् शक्नोति? केनापि प्रकारेण ईश्वरद्वारा स्वस्मै बहुवचनप्रयोगम् संगतम् मत्वापि इदम् तु कथमपि संगतम् न मन्तुम् शक्यते यत् तस्य धनस्य सम्पत्तेर्वा अभावोऽस्ति अथवा सः धनाय लालायितोऽस्ति यच्च सः 'वयं स्याम पतयो रयीणाम्' इतिरूपे धनपतिः भवितुम् कामनाम् कुर्वन् आस्ते अथवा सः वातम् देवम् स्वस्मात् उच्चतरम् मन्यते यच्च तस्मै हविषा यजनम् कर्तुम् कामयमानः अस्ति। एतदतिरिक्तम्, ईश्वरद्वारा 'यत्रा नः पूर्वे पितरः' इतिरूपे स्वपूर्वपितृजनानाम् चर्चा तु नितान्तम् असगता असंभवा चास्ति। किम् ईश्वरस्यापि केचन पूर्वपितरः भूतवन्तः सन्ति?

वस्तुतः सर्वेभ्यः देशेभ्यः, सर्वेभ्यः कालेभ्य, सर्वेभ्यश्च समाजेभ्यः धर्मेभ्यः वा निरपेक्षाय, निर्लिप्ताय असम्बद्धाय वा अनादये ईश्वराय 'विपाट्-शुतुद्री पयसा जवेते' (ऋ० वे० ३।३३।१) इतिरूपे कस्यापि देशस्य विपाट्-शुतुद्र्यादिनदीनाम् चर्चनम्, 'पुनश्च्यवानं चक्रथुर्युवानम्' (ऋ० वे० १।११६।१०), 'दश राजानः समिताः अयज्यवः सुदासमिन्द्रावरुणा न युयुधुः' (ऋ० वे० ७।८३।७), 'शुनशेपो यमह्वद् गृभीतः' (ऋ० वे० १।२४।११), 'ततो जातमृषिमाहुर्वसिष्ठम्' (ऋ० वे० ७।३३।१३), 'चैद्यः कशुः शतमुष्ट्राणां ददत्' (ऋ० वे० ८।३५।३७) इत्यादिरूपे कालविशेषे घटितानाम् घटनानाम् तासाम्

इतिहासस्य वा चर्चनम्, इन्द्रवरुणादिविशिष्टदेवान् मन्यमानस्य तेभ्यः विभिन्नान् पदार्थान् याचमानस्य च कस्यचित् विशिष्टस्य मानवसमाजस्य, तद्द्वारा च स्वीकृतानाम् देवोद्देश्यकानाम् सोमसवनाग्न्याधानहविःप्रक्षेपण-रूपयजनादिविशिष्टधार्मिकक्रियाणाम् चर्चनम्, सहैव च विशिष्टानाम् धार्मिकाणाम् दार्शनिकानाम् च मान्यतानाम् विचारधाराणाम् वा प्रति-पादनम् नितान्तम् असंभवम् अस्ति । तस्य आभिः सर्वाभिः वार्ताभिः किम् प्रयोजनम् ? इदम् कथनम् यत् वेदे उक्तप्रकाराः वार्ताः न सन्ति, उक्त-वर्णनानाम् भावः कश्चन अन्यः एव अस्ति, केवलम् तथ्यस्य अपलापः अस्ति ।

वस्तुतः, ईश्वरेण यदि काचन वार्ता कथिता स्यात् चेत् सा एतादृशी वार्ता न संभवेत् या केनचित् विशिष्टेन देशेन कालेन वा एव सम्बद्धा स्यात्, न च सा एतादृशो एव वार्ता संभवेत् यस्याश्च महत्त्वम् कस्मैचित् समाज-विशेषाय एव भवेत् । तद्द्वारा कथिता वार्ता तु स्वभावतः विशिष्टात् देश-कालात् समाजात् वा निरपेक्षा सती, सार्वत्रिकस्य, सार्वकालिकस्य, सर्वजनी-नस्य च महत्त्वस्य वार्ता संभवेत् । सा एतादृशी वार्ता संभवेत् यत् तस्याः स्वीकरणेन विना विश्वस्य कस्मिन् अपि भागे कस्मिन् अपि काले च उत्प-न्नस्य केनापि समाजेन धर्मेण वा सम्बद्धस्य च मानवस्य जीवनम् एव न चलितुम् शक्नुयात् । कथनस्य आवश्यकता नास्ति यत् वेदकथितासु वार्तासु इमाः विशेषताः न सन्ति । इदमेव कारणम् अस्ति यत् स्वयम् वेदम् ईश्वर-प्रणीतम् मन्यमानानाम् एव जीवनम्, वेदस्य वार्ता तु दूरे, तस्य दर्शनमात्रस्य करणेन विना एव चलत् वर्तते, विश्वस्य अन्येषाम् जनानाम् च तु वेदेन किंचित् प्रयोजनम् एव नास्ति । विश्वस्य अन्ये जनाः यत्र वेदस्य सहायताम् विना एव प्रकृतेः अभिनवानि रहस्यानि प्रकटयन्तः सन्ति, तस्याश्च चिरन्त-नान् नियमान् अन्विष्य आविष्कुर्वन्तः सन्ति, तत्र वेदम् सर्वज्ञस्य ईश्वरस्य कृतिम् मन्यमानाः तस्मात् किंचित् अपि एतादृशम् तथ्यम् उद्धृत्य विश्वस्य समक्षम् न उपस्थापयितुम् पारयन्ति यत् विश्वस्य अज्ञातम् स्यात्, किन्तु तैः अभिनवरूपेण प्रस्तुतम् कृतम् स्यात् । इयम् अन्या वार्ता यत् आधुनिक-विज्ञानेन कस्मिँश्चित् आविष्कारे प्रस्तुते कृते सति इदम् कथ्येत यत् वेदस्य अमुष्मिन् मन्त्रे अस्य आविष्कारस्य चर्चास्ति, किन्तु तस्मात् आविष्कारात् पूर्वम् तस्य चर्चा तस्मिन् एव मन्त्रे तैः कदापि न दृश्यते, कामम् ते प्रति दिनम् तस्य पाठम् पारायणम् वा कुर्वन्तः स्युः । यदि दृश्यते चेत् ते इदानीम् बोधयितुम् कृपाम् कुर्युः यत् सर्वज्ञेन ईश्वरेण कस्मिन् मन्त्रे कस्य एतादृशस्य आविष्कारस्य चर्चा कृतास्ति यः अद्यावधि न जातः, किन्तु इदानीम् कर्तुम् शक्यते । अस्य सर्वस्य कथनस्य तात्पर्यम् इदम् नास्ति यत् वेदस्य किंचित् महत्त्वम् नास्ति । वेदस्य स्वकीयम् महत्त्वम् अवश्यम् अस्ति

किन्तु तस्य एतादृशम् महत्त्वम् नास्ति यत् सः सर्वज्ञस्य ईश्वरस्य रचना मन्येत । वेदस्य प्रतिपाद्यम् उदात्तम् अस्ति, अतः तस्य महत्त्वम् अपि उत्कृष्टम् अस्ति ।

यतः वेदे एव पूर्वकालीनानाम् मान्यतानाम् कालान्तरे संशोधनम् जायमानम् सत् वर्तते, अतः ज्ञायते यत् तस्य प्रतिपादनम् अन्तिमः निष्कर्षः नास्ति, न च सः ईश्वरप्रणीतः वर्तते । उदाहरणार्थम्, वैदिकसूक्तप्रणेतृषु एकस्य स्वसमये 'द्यौस्' इत्याख्यस्य देवस्य महत्त्वम् अधिकम् अनुभूतम् अभवत् चेत् सः तस्य गौरवगाथाम् गीतवान्, पश्चात् अस्य देवस्य महत्त्वम् न्यूनम् अभवत्, तदा वेदस्य एव अन्यस्य सूक्तस्य प्रणेता तम् इन्द्रेण स्तब्धीकृतम् वर्णितवान् (यो द्यामस्तभ्नात्—ऋ० वे० २।१२।२), इन्द्रस्य च महत्त्वे न्यूने जाते सति अन्यसूक्तप्रणेता तम् 'मुखादिन्द्रश्च' (ऋ० वे० १०।९०।१३) इतिरूपे पुरुषमुखोत्पन्नम् गौणम् देवम् घोषितवान् । अनेनैव प्रकारेण सूर्यस्य महत्त्वे अनुभूते सति एकेन ऋषिणा सः 'सूर्य आत्मा जगतस्तस्थुषश्च' (ऋ० वे० १।११५।१) इतिरूपे सर्वात्मा वर्णितः, पश्चात् अन्येन ऋषिणा सः 'यः सूर्यं य उषसं जजान' (ऋ० वे० २।१२।७) इतिरूपे इन्द्रोत्पादितरूपे वर्णितः, तृतीयेन ऋषिणा सूर्यः इन्द्रश्च, उभौ अपि 'चक्षोः सूर्यो अजायत मुखादिन्द्रश्च' (ऋ० वे० १०।९०।२३) इति कथयित्वा पुरुषेण उत्पादितौ वर्णितौ । यदि सर्वेषाम् सूक्तानाम् रचयिता एकमात्रम् सर्वज्ञः ईश्वरः अभविष्यत् चेत् सः एकाम् तथ्यभूताम् वार्ताम् स्पष्टरूपेण अकथयिष्यत् यत् सूर्यः इन्द्रात् उत्पन्नः पुरुषात् वा, यतो हि तस्य तु तथ्यस्य पूर्णम् ज्ञानम् आसीत् एव । इदम् कथनम् यत् 'इन्द्रः पुरुषश्च' इमे द्वे अपि एकस्य एव देवस्य नामनी स्तः, स्वयम् वेदस्य 'मुखादिन्द्रश्च' इतिवचनविरुद्धम् अस्ति । इदम् वचनम् तु पुरुषमुखात् इन्द्रस्य उत्पत्तिम् प्रतिपाद्य अनयोः द्वयोः अपि व्यक्तित्वभेदम् स्पष्टतः प्रतिपादयत् वर्तते । एवमेव अनेकानि एतादृशानि वर्णनानि तथ्यानि च सन्ति यानि वेदेषु सर्वज्ञस्य ईश्वरस्य रूपे एकस्य कर्तुः कृतिरूपे मतेषु सत्सु कथमपि संगतानि न भवितुम् शक्नुवन्ति, किन्तु ते विभिन्नकालेषु जायमानानाम् असर्वज्ञानाम् ऋषीणाम् कृतयः सन्ति, इति मते सति संगतानि जायन्ते, यथा—वेदमन्त्रेषु समानानाम् भावानाम् शतशः पुनरुक्तिः, समानानाम् मन्त्राणाम् मन्त्रांशानाम् वा विभिन्नरूपैः सह पुनरुक्तिश्च । इमाः पुनरुक्तयः सूचयन्ति यत् परवर्तिनः ऋषयः पूर्ववर्तिनाम् ऋषीणाम् भावैः लाभम् गृह्णन्तः स्वाभिनवैः भावैः सह तेषाम् मन्त्राणाम् अपि भावान् व्यक्तान् अकुर्वन्, अपि च तेषाम् अस्पष्टरूपे प्रतीयमानानाम् भावानाम् स्वदृष्ट्या स्पष्टीकरणाय तेषु किंचित् रूपान्तरम् कुर्वन्तः आसन् । एकस्मै एव ईश्वररूपाय सर्वज्ञाय कर्त्रे स्वस्याम् एकस्याम् एव कृतौ एकस्य एव तथ्यस्य उक्तप्रकाराः पुनरुक्तयः संगताः न सन्ति । स तु यत् तथ्यम् कथयितुम् ऐषिष्यत् तत् एकदा एव अकथ-

यिष्यत्, एतादृशे च रूपे तद् अकथयिष्यत् यत् स एव तस्य स्पष्टीकरणाय बाध्यः न अभविष्यत् ।

**३—वेदसाक्ष्येण तेषाम् ऋषिप्रणीतत्वम्**—यदि स्वयम् वेदेभ्यः अस्य प्रश्नस्य उत्तरम् प्रार्थितम् स्यात् यत् तेषाम् रचना केन कृतास्ति चेत् ते स्पष्टरूपेण कथयन्ति यत् ते विभिन्नैः ऋषिभिः प्रणीताः सन्ति । तेषाम् कथनम् अस्ति—

'ये च पूर्व ऋषयो ये च नूत्ना इन्द्र ब्रह्माणि जनयन्त विप्राः ।
अस्मे ते सन्तु सख्या शिवानि यूयं पात स्वस्तिभिः सदा नः ।।
(ऋ० वे० ७।२२।९)

अत्र स्पष्टतः प्राचीनाः नवीनाश्च ऋषयः ब्रह्मणाम् अर्थात् मन्त्राणाम् जनकाः कथिताः सन्ति ।

एकेन ऋषिणा इन्द्राग्नीतिदेवयुगलस्य स्तुतिम् कुर्वता तत् प्रति स्पष्टम् कथितम्—'अश्रवं हि भूरि....युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम' । (ऋ० वे० १।१०९।२) ।

अत्र स्पष्टम् एव सूक्तप्रणेत्रा ऋषिणा 'स्तोमं जनयामि नव्यम्' कथितम् अस्ति ।

अन्यत्र मन्त्राः 'आ त्वा मन्त्राः कविशस्ता वहन्तु' (ऋ० १०।१४।४) इतिरूपे कविप्रोक्ताः एव कथिताः सन्ति । प्राचीनपद्धत्यनुसारेण कविप्रोक्तम् कविरचितम् एव भवति ।

एवंविधाः एव अनेकाः उक्तयः वेदेषु बाहुल्येन सन्ति यासु ऋषयः मन्त्राणाम् जनका कथिताः सन्ति, यासु च स्वयम् प्रणेतृभिः ऋषिभिः स्पष्टतः इदम् कथितम् अस्ति यत् ते नवीनस्य स्तोत्रस्य रचनाम् कुर्वन्तः सन्ति, यथा-'अकारि ते हरिवो ब्रह्म नव्यम्' (ऋ० वे० ४।१६।२१), 'अस्त्युक्थं नवीय': (ऋ० वे० ६।१८।१५), 'इदं ब्रह्म क्रियमाणं नवीयः' (ऋ० वे० ७।३५।१४), इत्यादिकाः । अनेकेषु स्थलेषु तु ऋषिभिः स्वरचितसूक्तेषु स्वनामनिर्देशः अपि कृतः अस्ति, यथा—'गीर्भिः परिष्कृतः विप्रस्य मेध्यातिथेः' (ऋ० वे० ९।४४।३), 'अग्नये ब्रह्म ऋभवस्ततक्षुः' (ऋ० वे० १०।८०।७), 'कण्वासो वां ब्रह्म कृण्वन्ति' (ऋ० वे० १।४८।२), 'ब्रह्म स्तोत्रं गृत्समदासो अक्रन्' (ऋ० वे० २।३९।८), 'ब्रह्माणि ससृजे वसिष्ठः' (ऋ० वे० ७।१८।४) इत्यादिकेषु । वस्तुतः तेषाम् किम् ज्ञातम् आसीत् यत् भविष्यति तेषाम् वंशजाः तेषाम् कृतिभ्यः तत्कर्तृत्वमहत्त्वम् अपसार्य तेषाम् कृतिभ्यः एव अस्मिन् रूपे महत्त्वम् दातुम् एषिष्यन्ति यत् ताः स्वतः सिद्धाः ईश्वरप्रणीताः वा सन्ति, अन्यथा ते उक्तप्रकारान् निर्देशान् न अकरिष्यन् ।

**४—रूढमान्यतायाः कारणम्**—उक्तानाम् स्पष्टनिर्देशानाम् प्रकाशे मन्त्रब्राह्मणयोः 'तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे' (ऋ० वे १०।९०।९) ,'अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेद....सूत्राण्यनुव्याख्यानानि' (श० ब्रा० १४।३।११) इत्यादिवचनानाम् तात्पर्यम् सारल्येन एव स्पष्टम् भवति यत् एषाम् वचनानाम् प्रकरणेषु जगन्मूलरूपे प्रतिपादितस्य तत्त्वस्य जगन्मूलकारणत्वरूपस्य वैभवस्य निदर्शनाय यत्र विभिन्नेभ्यः उपादानेभ्यः उद्भवताम् विभिन्नानाम् पदार्थानाम् जननम् जगन्मूलात् एव प्रतिपादितम्, यतः तेषाम् मूलम् स्रोतः एकमात्रम् तदेव अस्ति, तत्र विभिन्नेभ्यः स्रोतोभ्यः उद्भवतः तत्तद्वचनकालेषु वर्तमानस्य प्रमुखस्य वाङ्मयस्य अपि जगत एव एकांशत्वात् तत् जगन्मूलात् एव उत्पन्नरूपे प्रतिपादितम् अस्ति। वस्तुतः कस्याः अपि विचारधारायाः अनुसारेण यत् किमपि तत्त्वम् जगन्मूलकारणम् मतम् अभविष्यत्, तस्मात् एव वेदः एव किम्, सम्पूर्णम् अपि विश्ववाङ्मयम् उत्पन्नम् मतम् कथितम् च अभविष्यत्। अत एव शतपथब्राह्मणस्य उक्ते वचने वेदैः सह सूत्राणाम् अनुव्याख्यानानाम् च उद्भवः महद्भूतात् प्रतिपादितः अस्ति, किन्तु अस्य तात्पर्यम् इदम् न भवितुम् शक्नोति यत् वेदानाम्, सूत्राणाम्, अनुव्याख्यानानाम्, अन्यस्य कस्यचित् वाङ्मयस्य वा साक्षात् जनकम् प्रणेतृ वा जगन्मूलतत्त्वम् एव अस्ति।

**५—उपसंहरणम्**—अस्तु! एवम् समस्तम् वेदवाङ्मयम् अनादिसनातन-अपौरुषेय-स्वतःसिद्ध-ईश्वरीयेत्यादिभिः श्रद्धाजन्यैः, किन्तु अबुद्धिगम्यैः अग्राह्यैः वा अयथार्थविशेषणैः विशेषणीयम् न सत्, पुरातन-आर्ष-आर्षेत्यादिभिः यथार्थविशेषणैः विभूषणीयम् अस्ति।

यास्कः अपि परुच्छेपर्षिकेषु ऋग्वेदीयेषु त्रयोदशसु सूक्तेषु (१।१२७-१३९) शब्दानाम् पुनरुक्तिम् 'परुच्छेपस्य शीलम्' (नि० १०।४।४२) इतिरूपे परुच्छेपस्य रचनाशैलीम् कथयित्वा तानि सूक्तानि परुच्छेपरचितानि इति सूचयन् वेदानाम् ऋषिप्रणीतत्वम् एव समर्थयति। कालिदासश्च 'अप्यग्रणीर्मन्त्रकृतामृषीणाम्' (रघु० ५।४) इतिरूपे ऋषीणाम् मन्त्रकृत्त्वम् मत्वा इदमेव तथ्यानुकूलम् मतम् मन्यते।

## १६

# वेदानाम् रचना-कालः[1]

यद्यपि, यथा च पूर्वम् उक्तम् अस्ति[2], वेदवाङ्मयम् अपि विश्वस्य अन्यानि समस्तानि वाङ्मयानि इव सादि पौरुषेयम् च अस्ति अर्थात् अस्यापि रचना कस्मिन् अपि काले कैश्चित् पुरुषैः एव जाता अस्ति, तथापि निश्चप्रचरूपेण इदम् कथयितुम् कठिनम् अस्ति यत् अस्य रचना कदा अभवत्। वेदवाङ्मयम् कोऽपि एकः ग्रन्थविशेषः नास्ति, अपि तु विभिन्नकालेषु विभिन्नैः महापुरुषैः—ऋषिभिः—प्रणीतानाम् विभिन्नानाम् कृतीनाम् एका संकलिता समष्टिः अस्ति, एवञ्च अस्य रचनायाः एका दीर्घकालीना परम्परा प्रवर्तमाना अभवत्। इयम् परम्परा कस्मिन् काले प्रवृत्ता अभवत्, किंकालावधि च प्रवर्तमाना सती अतिष्ठित्, इदम् गणितम् अद्य स्वसमीपे नास्ति। इयत् एव कथयितुम् शक्यते यत् इयम् परम्परा एकस्मिन् एतादृशे सुदूरे अतीतकाले प्रवृत्ता अभवत्, यदवधि निश्चयात्मकतया सह गन्तुम् इदानीम् अपि इतिहासस्य गतिः सामर्थ्यम् वा नास्ति। भविष्यत्काले इतिहासः तत्र प्राप्तुम् स्वम् समर्थम् सम्पादयिष्यति न वा, इति भविष्यतः गर्भे निहितम् अस्ति। अस्तु! इत्थम्, विश्वस्य प्राचीनतमस्य अस्य वाङ्मयस्य—वेदवाङ्मस्य—रचना कदा जाता, अयमपि महान् गवेषणाविषयः वर्तते। अत एव आधुनिककाले विभिन्नैः विद्वद्भिः अस्य रचनाकाले विचारः कृतः, स्वानि-स्वानि च विभिन्नानि मतानि प्रस्तुतानि येषु कतिपयानि निम्नरूपाणि सन्ति :—

१—मैक्समूलरस्य मतम्—एकोनषष्ट्युत्तराष्टादशशततमे (१८५९) ईसवीये वर्षे अयम् स्वकीयम् 'प्राचीनसंस्कृतसाहित्य' नामकम् ग्रन्थम् प्रकाशितवान्। अस्मिन् एव अयम् वेदानाम् रचनाकाले अपि विचारम् कृतवान्। अस्य मतम् वर्तते यत् बौद्धधर्मः तद्वाङ्मयम् च सम्पूर्णस्य वैदिकस्य वाङ्मयस्य पूर्वास्तित्वम् स्वीकरोति, फलतः अत्र कश्चन सन्देहः नास्ति यत्

---

१—अथवा—ऋग्वेदस्य रचनाकालः। २—पृष्ठ ६१–६६।

वैदिकवाङ्मयम्, यस्मिन् संहिताः, ब्राह्मणानि, आरण्यकानि, उपनिषदः, कल्पसूत्राणि समाविशन्ति, महात्मनः गौतमबुद्धात् पूर्वम् अस्तित्वम् प्राप्तवत् आसीत्। सम्पूर्णस्य वैदिकवाङ्मयस्य रचनाकालम् वैदिकयुगम् वा अयम् चतुर्षु कालेषु विभाजितवान्—छन्दःकालः, मन्त्रकालः, ब्राह्मणकालः, सूत्रकालश्च। प्रत्येकम् कालम् अयम् शतद्वयवर्षपरिमितम् मतवान्, एतच्च अस्मिन् आधारे यत् प्रत्येकम् कालस्य रचनानाम् भाषायाः अथ च विषयस्य विचारधारायाः वा विकासाय इयत् (२०० वर्षाणि) अन्तरम् अपेक्षितम् अस्ति। महात्मा गौतमबुद्धः ईसातः पूर्वम् षष्ठशताब्द्याम् जातः, तदनन्तरम् बौद्धधर्मश्च ईसातः पूर्वम् पञ्चमशताब्दीसमीपकाले प्रसृतः, अतः अयम् वैदिकयुगस्य अन्तिमकालस्य–सूत्रकालस्य–प्रारम्भम् ईसातः पूर्वम् षष्ठशताब्द्याम् अमन्यत। ईसातः पूर्वम् सप्तमाष्टमशताब्दीकालम् अयम् ब्राह्मणकालम् अमन्यत, यस्मिन् ब्राह्मणारण्यकोपनिषदाम् रचना जाता। अस्यानुसारेण ईसातः पूर्वम् सहस्राब्द्याः आरभ्य अष्टमशताब्दीप्रारम्भपर्यन्तम् कालः मन्त्रकालः अस्ति, यस्मिन् यज्ञानुष्ठानस्य दृष्ट्या मन्त्राणाम् संहितारूपे संकलनम् जातम्। ईसातः पूर्वम् द्वादशशताब्द्याः आरभ्य सहस्राब्दीप्रारम्भपर्यन्तम् च छन्दःकालः अस्ति, यस्मिन् मौलिकरूपेण मन्त्राणाम् रचना जाता। यतः मन्त्रभागे ऋग्वेदः प्राचीनतमः अस्ति, अतः अस्यानुसारेण ऋग्वेदस्य रचनाकालप्रारम्भः ईसातः पूर्वम् द्वादशशततमम् वर्षम् अस्ति। मैक्समूलरस्य इदम् मतम् कियत् काल्पनिकम् अस्ति, इतिकथनस्य आवश्यकता नास्ति। इदम् तथ्यम् स्वयम् तेन एव अनुभूतम्, अतः पश्चात् एकोननवत्युत्तराष्टादशशततमे (१८८९) ईसवीये वर्षे स्वकीयायाः 'जिफोर्ड' व्याख्यानमालायाः अवसरे 'भौतिकधर्म' शीर्षके व्याख्याने सः घोषितवान् यत् तन्निर्दिष्टः वेदरचनाकालः अनुमानमात्रम् अस्ति, अथ च वस्तुतः इदम् कोऽपि न कथयितुम् शक्नोति यत् वेदानाम् रचना कदा जाता। एवम् तस्य मतम् तेनैव निराकृतम् सत् वर्तते। क्रोलब्रुकविलसनकीथादीनाम् मतानि प्रायः मैक्समूलरस्य मतेन एव समानानि सन्ति।

२—**मैकडोनलस्य मतम्**—अयम् अपि मैक्समूलरेण निर्दिष्टात् वेदरचनाकालात् इतस्तत एव ऋग्वेदस्य कालम् मन्यते। एतद्द्वारा संकलितस्य सम्पादितस्य च 'वैदिकरीडर' नामकस्य पुस्तकस्य 'परिचये' अस्य कथनम् अस्ति यत् यद्यपि ऋग्वेदस्य वास्तविकरचनाकालः अनुमानमात्रविषयः, पुनरपि इयत् निश्चयात्मकरूपेण कथयितुम् शक्यते यत् ऋग्वेदस्य प्राचीनतमानि सूक्तानि ईसातः पूर्वम् त्रयोदशशताब्द्याः अर्वाचीनानि न सन्ति। अयम् अस्मात् कालात् (१३ शीं शताब्दी ई० पू०) अधिकपूर्वकालम् ऋग्वेदरचनाकालम् मन्तम् प्रस्तुतः नास्ति। अस्य कथनम् अस्ति

यत् 'अवेस्ता' नामकस्य वाङ्मयस्य प्राचीनतमः भागः ईसातः पूर्वस्याः अष्टम-शताब्द्याः पूर्वकालीनः न भवितुम् शक्नोति । अस्य भागस्य ऋग्वेदसूक्तैः सह इयद्घनिष्ठः सम्वन्धः अस्ति यत् यदि अस्य भाषा प्रायः पञ्चशताब्द्याः पूर्वम् नीयेत चेत् महता काठिन्येन सा ऋग्वेदभाषायाः भिन्नत्वम् स्थापयितुम् शक्नुयात् अर्थात् ऋग्वेदस्य भाषा शताब्दीपञ्चके विकसिता सती अवेस्ता-भाषारूपे अभवत् । एवम् सिद्धम् अस्ति यत् भारतीयाः ईरानीयेभ्यः ईसातः पूर्वम् त्रयोदशशततमात् अब्दात् पूर्वम् पृथक् न अभवन् । अयम् पार्थक्यकालः एव ऋग्वेदस्य रचनाकालः अस्ति ।

३—**जैकोबीमतम्**—जैकोबीमहोदयः कल्पसूत्राणाम् विवाहप्रकरणे प्राप्तेन 'ध्रुव इव स्थिरा भव' इतिवाक्येन संकेतम् प्राप्तवान् यत् पूर्वम् ध्रुवः अधिकम् प्रकाशमानः स्थिरश्च आसीत् । एतादृशी स्थितिः प्रायः ईसातः पूर्वम् २७०० वर्षे आसीत्, अतः कल्पसूत्राणाम् रचनाकालः अयमेव अस्ति । वेदानाम् रचना च अस्मात् कालात् अतिशयितरूपेण पूर्वम् अभवत् । एवम् ध्रुवस्य अथ च अन्येषाम् ग्रहाणाम् नक्षत्राणाम् च स्थितेः आधारे ज्योतिर्विज्ञानसाहाय्येन जैकोबीमहोदयः ऋग्वेदस्य रचनाकालम् ईसातः पूर्वम् ४५०० वर्षे अमन्यत ।

४—**शंकरबालकृष्णदीक्षितस्य मतम्**—अयम् शतपथब्राह्मणस्य 'कृत्तिकास्वादधीत । एता ह वै प्राच्यै दिशो न च्यवन्ते, सर्वाणि ह वा अन्यानि नक्षत्राणि प्राच्यै दिशश्च्यवन्ते ।' (श० ब्रा० २।१।२) इतिवर्णनस्य आधारे इमम् निष्कर्षम् प्राप्तवान् यत् यतः ज्योतिर्गणनानुसारेण कृत्तिकानाम् पूर्वीये विन्दौ एव वृत्तेः स्थितिः प्रायः ईसातः पूर्वम् २५०० वर्षे संभाव्यते, अतः शतपथब्राह्मणस्य रचनाकालः अयमेव कालः अस्ति । यतः ऋग्वेदः शतपथ-ब्राह्मणात् नितराम् प्राचीनतरः, अतः तस्य रचनाकालः ईसातः पूर्वम् ३५०० वर्षात् परवर्ती कदापि न भवितुम् शक्नोति । अस्य कालस्य निर्धारणे दीक्षित-महोदयः वसन्तसम्पातस्य (वर्नल इक्विनाक्स) अपि आधारम् गृहीतवान्, तदाधारेणापि च पूर्वमेव निष्कर्षम् प्राप्तवान् ।

५—**लोकमान्यतिलकस्य मतम्**—अयम् दीक्षितः इव कृतिकानक्षत्रे वसन्तसम्पातस्थितेः वर्णनस्य आधारे ब्राह्मणग्रन्थानाम् रचनाकालम् ईसातः पूर्वम् प्रायः २५०० वर्षे अमन्यत । सहैव च अयम् इदम् अनुसंहितवान् यत् ऋग्वेदे मृगशिरसि पुनर्वसौ च वसन्तसम्पातस्य स्थितेः वर्णनम् अस्ति ।[1] गणनया पुनर्वसौ वसन्तसम्पातस्थितिकालः ईसातः प्रायः षट्सहस्रवर्षेभ्यः

---

१—**द्रष्टव्यः तिलकस्य 'ओरायन' नामकः ग्रन्थः ।**

प्राक् पतति। अयम् वैदिकवाङ्मये वर्णितायाः वसन्तसम्पातस्थितेः आधारे वैदिकयुगम् निम्नेषु चतुर्षु भागेषु विभक्तवान्—

(१) **अदितिकालः** (६०००–४००० ई० पू०)—पुनर्वसौ वसन्तसम्पातस्थितिकालः एतन्नक्षत्राधिदेवतायाः अदितेः नाम्नः आधारे 'अदितिकालः' कथितः अस्ति। अयम् वैदिकयुगस्य आदिकालः अस्ति। तिलकमहोदयानुसारेण अस्मिन् युगे कतिपयाः प्रारम्भिकाः वैदिक्यः रचना गद्ये पद्ये च जाताः, यासाम् च देवयजने प्रयोगः क्रियते स्म।

२—**मृगशिरःकालः** (४०००–२५०० ई० पू०)—अस्मिन् काले ऋग्वेदस्य मन्त्राणाम् अधिकांशतः रचना जाता। आर्यसभ्यतायाः वैदिकरचनाविकासस्य च दृष्ट्या अयम् महत्त्वपूर्णः कालः आसीत्।

(३) **कृत्तिकाकालः** (२५००–१४०० ई० पू०)—अस्मिन् काले विभिन्नानाम् संहितानाम् ब्राह्मणानाम् च रचना अभवत्। 'वेदाङ्गज्यौतिषस्य' रचना अस्य युगस्य अन्तिमे भागे अभवत्।

(४) **अन्तिमः कालः** (१४००–५०० ई० पू०)—अस्मिन् काले कल्पसूत्राणाम् दर्शनसूत्राणाम् च रचना अभवत्। अस्य कालस्य अन्तिमे भागे बौद्धधर्मः वैदिकधर्मस्य प्रतिक्रियारूपे उदितवान्।

उक्तप्रकारेण तिलकमहोदस्य अनुसारेण ऋग्वेदस्य रचनाकालप्रारम्भः ईसातः पूर्वम् ४००० वर्षे अभवत्।

६—**अविनाशचन्द्रस्य मतम्**—अयम् स्वकीये 'ऋग्वेदिक इण्डिया' नामके ग्रन्थे ऋग्वेदस्य रचनाकाले अपि विचारम् कृतवान् अस्ति। अयम् स्वविचाराधारम् ऋग्वेदवर्णितानि भौगोलिकानि भूगर्भसम्बन्धीनि च तथ्यानि कृतवान्। 'रायः समुद्राँश्चतुरः' (ऋ० वे० ९।३३।६) इत्यस्य 'एका चेतत् सरस्वती नदीनाम् शुचिर्यती गिरिभ्यः आ समुद्रात्' (ऋ० वे० ७।९५।२) इत्यस्य च प्रतिपाद्यस्य आधारे अयम् इमम् संकेतम् प्राप्तवान् यत् चतुर्षु समुद्रेषु एकः पञ्चनदस्य दक्षिणतः राजस्थाने आसीत्, यस्मिन् एव सिन्धुसरस्वत्यादिनदीनाम् संगमस्य ऋग्वेदे वर्णनम् अस्ति। अद्य सः समुद्रः नास्ति। यतः भूगर्भशास्त्रविदुषाम् अनुसारेण 'राजस्थान-समुद्रस्य' स्थितिः ईसातः २५००० वर्षेभ्यः प्राक् आसीत्, अतः उक्तस्य समुद्रस्य तस्मिन् च नदीनाम् संगमस्य वर्णनम् कुर्वतः ऋग्वेदस्य रचनाकालः ईसातः २५००० वर्षेभ्यः प्राक् अस्ति।

अत्र वेदानाम् विशेषतश्च ऋग्वेदस्य रचनाकालस्य सम्बन्धे विभिन्नानाम् विदुषाम् मतानि संक्षेपतः उल्लिखितानि सन्ति। अधुनावधि अस्मिन् विषये ऐकमत्यम् स्थापितम् भवितुम् न अशक्नोत्। अस्मिन समये त, यथा

च अत्र एव पूर्वम् उक्तम्, इयदेव कथयितुम् शक्यते यत् विश्वस्य प्राचीनतमस्य वाङ्मयस्य ऋग्वेदस्य रचना एतादृशे सुदूरे अतीतकाले अभवत् यत् तत्र प्राप्तुम् अधुनावधि आधुनिकः इतिहासः असमर्थः अस्ति। यदि विशिष्टतर-रूपेण कथ्येत चेत् इदमेव कथयितुम् शक्यते यत् यतो हि ऋग्वेदे अग्नेः प्रकाशमानम् स्वरूपम्, कार्यम्, विविधम् महत्त्वम् च प्रति महत् आश्चर्यम् प्रकटितम् सत् वर्तते, अतः संभाव्यते यत् तस्य रचना तस्मिन् समये प्रारब्धा यदा अग्नेः आविष्कारे जाते सति अधिकः कालः न व्यतीतः अभवत्। शब्दा-न्तरेषु, अग्निपरिचयस्य अग्न्याविष्कारस्य वा कालात् अदूरवर्ती एव अर्वाक्-कालः वेदानाम् प्राचीनतमस्य ऋग्वेदस्य तस्य अपि वा प्राचीनतमस्य अंशस्य रचनाकालः अस्ति।

## १७

# वैदिकम् साहित्यम्

**१—प्रास्ताविकम्**—विशालम् संस्कृतसाहित्यम् द्विधा विभज्यमानम् वर्तते—वैदिकम् साहित्यम् लौकिकम् साहित्यम् च । अनयो: वैदिकम् साहित्यम् प्राचीनतरम् प्रामाणिकतरम् च मन्यमानम् सत् लौकिकस्य संस्कृतसाहित्यस्य उपजीव्यम् मन्यते । मन्त्राः (संहिता:), ब्राह्मणानि, आरण्यकानि, उपनिषदः, वेदाङ्गानि च वैदिकसाहित्यस्य अन्तर्गतानि मन्यन्ते, अवशिष्टम् च संस्कृत-साहित्यम् लौकिकम् साहित्यम् मन्यते । वेद: तत्सम्वद्धम् च साहित्यम् वैदिकम् साहित्यम् अस्ति । अस्मिन् वैदिके साहित्ये अपि मन्त्रब्राह्मणारण्यकोपनिषदः श्रुतिसाहित्यस्य अन्त: मन्यन्ते, वेदाङ्गानि च स्मृतिसाहित्यस्य अन्तः मन्यन्ते । यथा च पूर्वम् दृष्टम्[१], वेदाभिधानप्रयोगस्य ब्राह्मणकालीनायाः मूलपरम्परायाः अनुसारेण केवलम् मन्त्रा: एव वेदशब्दाभिधेयाः अर्थात् वेदा: सन्ति, तदन्यत् ब्राह्मणादिकम् साहित्यम् च तैः येन केन प्रकारेण सम्वद्धम् अस्ति । एवम्, मन्त्रा: तत्सम्बन्धीनि च ब्राह्मणादिकानि समन्वितरूपेण वैदिक-साहित्यम् सन्ति । स्वयम् वैदिकसाहित्यम् अपि एकम् विशालम् साहित्यम् वर्तते, तस्य भूयान् अंशः विलुप्तः जातः । वैदिकसाहित्यस्य संक्षिप्तः परिचयः निम्नरूपेण अस्ति—

**२—मन्त्राः (संहिताः)**—मन्त्राः सकले अपि वैदिके साहित्ये प्राचीन-तमाः सन्ति । यतो हि इमे एव मूलतः वेदाः सन्ति, एतैः सह सम्वद्धत्वाद एव अन्यत् साहित्यम् वैदिकम् उच्यते, अतः इदम् स्वत एव प्रकटितम् वर्तते यत् सम्पूर्णे अपि वैदिके साहित्ये एते मूर्धन्यभूताः सन्ति । मन्त्राः स्वेतरस्य समस्तस्य ब्राह्मणादिकस्य वैदिकस्य साहित्यस्य उपजीव्याः सन्ति । यद्यपि ब्राह्मणग्रन्थेभ्यः पश्चात् प्रवर्त्तमानायाः 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यादि-रूपे अभिव्यक्तायाः सूत्रस्मृतिपुराणकालीनायाः मान्यतायाः अनुसारेण मन्त्रैः

---

१—ब्राह्मणग्रन्थानुसारम् वेदस्वरूपम् इतिशीर्षकः निबन्धः ।

सह ब्राह्मणानि अपि वेदशब्दाभिधेयानि जातानि, किन्तु पुनरपि ब्राह्मणानाम् अपेक्षया मन्त्राणाम् स्थानम् सर्वदा उच्चतरम् अमन्यत मन्यते च। स्वयम् ब्राह्मणग्रन्था: एव ससम्मानम् मन्त्रान् उद्धृत्य तेषाम् आधारेण स्वप्रतिपाद्य समर्थयन्त: तेषाम् व्याख्यानम् च कुर्वन्त: तेषाम् गौरवम् प्रकटयन्ति। ब्राह्मणातिरिक्तम् च अन्यत् वैदिकम् साहित्यम् तु मन्त्राणाम् गौरवम् स्वीकरोति एव। एवम् मन्त्रा: सम्पूर्णे अपि वैदिके साहित्ये निर्विवादरूपेण मूर्धन्यम् स्थानम् भजन्ते।

मन्त्रा: अनुष्ठानकारणभूतद्रव्यदेवताप्रकाशका: मन्यते। तेषु कतिचन देवस्तवनात्मका: सन्ति, कतिचन च कर्मसमवेतार्थस्मारका: सन्ति। मूलत: मन्त्रा: त्रिविधा: मन्यन्ते—ऋक्, यजु:, साम च। 'तेषामृग् यत्रार्थवशेन पादव्यवस्था' (जैमिनिसूत्र २।१।३५) इत्यनुसारेण येषु छन्दोबद्धेषु मन्त्रेषु अर्थाधारिता पादव्यवस्था भवति, ते ऋच: अभिधीयन्ते। 'गीतिषु सामाख्या' (जै० सू० २।१।३६) इत्यनुसारेण वैदिकसंगीतनियमेन गीतिरूपे परिणता: ऋच: तासु वा गीता: गीतय: एव सामानि उच्यन्ते। 'शेषे यजु:शब्द:' (जै० सू० २।१।३७) इत्यनुसारेग ऋक्सामव्यतिरिक्ता: मन्त्रा: यजूंषि उच्यन्ते। यजूंषि प्राय: गद्यात्मकानि भवन्ति। एतत्त्रिविधमन्त्रव्यतिरिक्ता: अपि अग्न्योषध्यादिभि: चमत्कारप्रदर्शका: अथर्वाङ्गिरस्संज्ञका: मन्त्रा: सन्ति, येषु अथर्वसंज्ञका: मन्त्रा: शङ्करा: मन्यन्ते, अङ्गिरस्संज्ञकाश्च भयङ्करा: मन्यन्ते। एतेषाम् मन्त्राणाम् मुख्यत: ऋत्विजाम् उपयोगाय कृतानि संकलनानि 'संहिता:' उच्यन्ते। ऋचाम् संकलनानि 'ऋक्संहिता:' उच्यन्ते। यजुषाम् संकलनानि 'यजु:संहिता:' उच्यन्ते। साम्नाम् संकलनानि 'सामसंहिता:' उच्यन्ते। अथर्वाङ्गिरसाम् संकलनानि च 'अथर्वसंहिता:' उच्यन्ते। सर्वासाम् ऋक्संहितानाम् समानम् नाम 'ऋग्वेद:' अस्ति अर्थात् तासाम् प्रत्येकम् संहिता 'ऋग्वेद:' अस्ति। अनेन एव प्रकारेण सर्वासाम् यजु:संहितानाम् समानम् अभिधानम् 'यजुर्वेद:' अस्ति, सर्वासाम् सामसंहितानाम् नाम 'सामवेद:', अथर्वसंहितानाम् च नाम 'अथर्ववेद:' अस्ति। शब्दान्तरेषु, ऋगादीनाम् विभिन्नाम् मन्त्राणाम् संकलनानि एव ऋग्वेदादिपदवाच्यानि सन्ति, यथा—ऋचाम् संकलनम् 'ऋग्वेद:' इति। यतो हि अध्ययनाध्यापनविधायकानाम् विभिन्ना: शाखा: ऋगादीनाम् प्रत्येकम् विभिन्नानि संकलनानि अकुर्वन्, अत: ऋग्वेदादिषु प्रत्येकम् वेदस्य अनेका: संहिता: जाता:, यासाम् प्रत्येकम् स्वस्या: स्वस्या: शाखाया: संहिता उच्यते। महाभाष्यकारेण पतञ्जलिना पस्पशाह्निके, 'एकशतमध्वर्युशाखा:। सहस्रवर्त्मा सामवेद:। एकविंशतिधा बाह्वृच्यम्। नवधाथर्वणो वेद:।' इतिप्रकारेण ऋग्वेदस्य एकविंशति:, यजुर्वेदस्य एकोत्तरशतम्, सामवेदस्य सहस्रम्, अथर्ववेदस्य च नव शाखा: कथिता: सन्ति। इत्थम् सर्वेषाम् वेदानाम् एकत्रिंशदुत्तरैकादशशतानि

शाखाः भवन्ति। प्रत्येकम् शाखायाः एकैका संहिता स्यात्, इतिनियमेन एतावत्यः एव संहिताः स्युः, किन्तु इदानीम् न तु सर्वाः परम्परागताः शाखाः उपलभ्यन्ते, न च तासाम् सर्वाः संहिताः। याः अपि शाखाः उपलभ्यन्ते, तासाम् सर्वासाम् अपि संहिताः नोपलभ्यन्ते।

ऋग्वेदस्य एका एव 'शाकलसंहिता' उपलभ्यते। यजुर्वेदः द्विधा विभक्तः वर्तते—शुक्लयजुर्वेदः, कृष्णयजुर्वेदश्च। शुक्लयजुर्वेदस्य एका एव वाजसनेयिसंहिता तस्य शाखाद्वयानुसारेण रूपद्वये उपलभ्यते–काण्वसंहितारूपे माध्यन्दिनसंहितारूपे च। कृष्णयजुर्वेदस्य तैत्तिरीयसंहिता, मैत्रायणीसंहिता, कठसंहिता, कपिष्ठलकठसंहिता, इति चतस्रः संहिताः उपलभ्यन्ते, आसु अन्तिमा खण्डिता एव उपलभ्यते। सामवेदस्य कौथुमसंहिता, राणायनीय-संहिता, जैमिनीयसंहिता, इति संहितात्रयम् उपलभ्यते। अथर्ववेदस्य शौनक-संहिता, पिप्पलादसंहिता, इति संहिताद्वयम् प्राप्यते।

३—**ब्राह्मणानि**—यथा च 'ब्रह्माणि जनयन्त विप्राः', 'ब्रह्माणि ससृजे वसिष्ठः', 'इदं ब्रह्म क्रियमाणं नवीयः' इत्यादि–ऋग्वेदीयमन्त्रांशैः ज्ञायते, मन्त्राणाम् मन्त्रात्मकसूक्तानाम् च एकम् मौलिकम् नाम 'ब्रह्म' अपि अस्ति, अतः ब्रह्मापराभिधानैः मन्त्रैः सम्बद्धत्वात् एव ब्राह्मणानि 'ब्राह्मणानि' उच्यन्ते। एतेषु यथावसरम् मन्त्राणाम् व्याख्यानम् उपलभ्यते, मन्त्राणाम् उद्धरणम् कृत्वा तदाधारेण स्वप्रतिपाद्यप्रतिपादनम् स्वप्रतिपाद्यसमर्थनम् वा अपि उपलभ्यते, विभिन्नयज्ञीयकर्मसु मन्त्राणाम् विनियोगप्रकारश्च अपि प्रदर्शितः वर्तते, सहैव तत्र इतिहासादिकम् अपि अस्ति। किन्तु एतेषाम् मूलस्वरूपम् तु एतादृशानाम् स्वतन्त्राणाम् प्रकरणानाम् रूपे एव संभाव्यते, यानि एकस्य एकस्य कर्मणः क्रमिकाम् पद्धतिम् प्रादर्शयन्। पश्चात् ऐषाम संकलनम् विभिन्नग्रन्थानाम् रूपे जातम्। एषाम् ग्रन्थानाम् मूलरूपे कर्म-सम्बन्धीनि कल्पात्मकानि वा ब्राह्मणरूपाणि प्रकरणानि एव आसन्। पश्चात्, यथा च 'यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीरिति' (तै० आ० २।६) इतितैत्तिरीयारण्यकवचनेन ज्ञायते, ब्राह्मणानाम् मूलैः कल्पात्मकैः प्रकरणैः सह इतिहासपुराणादिकम् अपि संकलय्य तत् सर्वम 'ब्राह्मणम्' अमन्यत।

'हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना।
उपमानं दशैते तु विधयो (विषया) ब्राह्मणस्य तु।'

(शाबरभाष्य २।१।८)

इतिवचनानुसारेण ब्राह्मणानाम् हेत्वादिकाः दश ातिपाद्यविषयाः मन्यन्ते। संक्षेपतः ब्राह्मणम् त्रिविधम् मन्यते—विधिरूपम्, अर्थवादरूपम् तदुभयविल-क्षणरूपम् च। तत्र विधिः एव मुख्यः वर्तते। आरण्यकानि उपनिषदश्च

ब्राह्मणानाम् अन्तः एव मन्यन्ते अथ च गोबलीवर्दन्यायेन ब्राह्मणपरिव्राजकन्यायेन वा पृथक् अपि गण्यन्ते ।

कदाचित् ब्राह्मणवाङ्मयम् अपि विपुलम् आसीत् । इदानीम् कानिचित् एव ब्राह्मणानि उपलभ्यन्ते । ऋग्वेदस्य ऐतरेयब्राह्मणम्, कौषीतकिब्राह्मणम्, इति ब्राह्मणद्वयम् उपलभ्यते । कौषीतकिब्राह्मणम् शाङ्खायनब्राह्मणम् अपि उच्यते । शुक्लयजुर्वेदस्य एकम् एव शतपथब्राह्मणम् तस्य शाखाद्वयानुसारेण काण्वशतपथब्राह्मणरूपे माध्यन्दिनशतपथब्राह्मणरूपे च उपलभ्यते । कृष्णजुवदस्य तैत्तिरीयब्राह्मणम् उपलभ्यते । एतदतिरिक्तम्, अस्य विभिन्नासु संहितासु अपि ब्राह्मणभागः संमिश्रितः वर्तते । ब्राह्मणसंमिश्रणहेतोः एव अयम् 'कृष्णः', कथ्यते, इति च मन्यते । सामवेदस्य नव ब्राह्मणानि उपलभ्यन्ते—ताण्ड्यब्राह्मणम्, षड्विंशब्राह्मणम्, सामविधानब्राह्मणम्, आर्षेयब्राह्मणम्, दैवतब्राह्मणम्, उपनिषद्ब्राह्मणम्, संहितोपनिषद्ब्राह्मणम्, वंशब्राह्मणम्, जैमिनीयब्राह्मणम्, इति । एतेषु ताण्ड्यब्राह्मणम् पञ्चविंशब्राह्मणम् अपि उच्यते । षड्विंशब्राह्मणस्य अन्तिमप्रपाठकरूपे अद्भुतब्राह्मणम् अस्ति । सम्पूर्णम् उपनिषद्ब्राह्मणम् अस्य प्रारम्भिकप्रपाठकद्वयम् वा मन्त्रब्राह्मणम् अपि उच्यते । जैमिनीयब्राह्मणस्य एकः अंशः जैमिनीयोपनिषद्ब्राह्मणम् तलवकारब्राह्मणम् वा अपि उच्यते । अथर्ववेदस्य एकम् एव गोपथब्राह्मणम् उपलभ्यते । सामवेदस्य ब्राह्मणसम्पत्तिः सर्वाधिका वर्तते । ब्राह्मणेषु शतपथब्राह्मणम् प्रमुखताम् भजते ।

**४—आरण्यकानि**—आरण्यकेषु प्रमुखतः यज्ञीयानाम् आध्यात्मिकतथ्यानाम् मीमांसा यज्ञानाम् आध्यात्मिकी व्याख्या वा उपलभ्यते । आध्यात्मिकरूपेण प्राणस्य चर्चा अपि अत्र प्रामुख्यम् भजते । स्वरूपे आध्यात्मिकत्वात् एतानि अरण्ये पठनीयत्वेन स्वीकृतानि संभाव्यन्ते, अरण्यपठनीयत्वात् च एतानि 'आरण्यकानि' अभिहितानि, इत्यपि संभाव्यते । एतेषाम् अपि भूयान् अंशः विलुप्तः जातः । केवलम् त्रीणि एव आरण्यकानि उपलभ्यन्ते—ऐतरेयारण्यकम्, शाङ्खायनारण्यकम्, तैत्तिरीयारण्यकम् च । एतेषु प्रथमे, द्वे आरण्यके ऋग्वेदीये स्तः, अन्तिमम् च कृष्णयजुर्वेदीयम् अस्ति । बृहदारण्यकम्, यत् एका उपनिषद् मन्यते, एकम् आरण्यकम् एव अस्ति, यथा च अस्य नाम्ना एव ज्ञायते । इदम् शुक्लयजुर्वेदीयम् अस्ति । अनेन एव प्रकारेण अन्यानि च कतिपयानि आरण्यकानि उपनिषत्सु परिगणितानि जातानि, कतिपयानि च ब्राह्मणसंकलितानि ब्राह्मणेभ्यः पृथक्कृतानि न जातानि । इदमेव कारणम् यत् एतेषाम् संख्यान्यूनत्वम् वर्तते ।

**५—उपनिषदः**—वेदेषु या आध्यात्मिकी विचारधारा वर्तते तस्याः चरमः विकासः उपनिषत्सु एव जातः, अतः अस्मिन् रूपे आसाम् वेदानाम्

अन्तत्वात् अर्थात् सारभूतसिद्धान्तत्वात् सारभूतसिद्धान्तानाम् प्रतिपादकत्वात् वा इमाः 'वेदान्त' नाम्ना अपि प्रसिद्धाः सन्ति । वेदवाङ्मयविकासधारायाम् अन्तिमत्वात् अपि एताः 'वेदान्त' नाम्ना कथ्यन्ते । एतासु आध्यात्मिकविचाराणाम् प्राधान्यम् अस्ति । एताः जगन्मूलतत्त्वस्य ब्रह्मणः स्वरूपम् प्रकाशयन्ति, तस्मात् जगत्सृष्टिप्रक्रियाम् वर्णयन्ति, तस्य जगदन्तरात्मत्वम् प्रतिपादयन्ति, तेन सह जीवात्मनाम् जागतिकानाम् च पदार्थानाम् सम्बन्धम् सूचयन्ति, जीवानाम् बन्धमोक्षस्वरूपम् प्रतिपाद्य मोक्षसाधनानि वर्णयन्ति । एतादृशाः एव अन्ये अपि तत्त्वमीमांसासम्बन्धिनः आचारमीमांसासम्बन्धिनश्च अनेके विषयाः उपनिषत्सु वर्तन्ते ।

उपनिषदः प्रायः ब्राह्मणारण्यकेषु संकलिताः वर्तन्ते । एका उपनिषत्—ईशावास्योपनिषत्—मन्त्रभागीया अपि अस्ति । कतिचन उपनिषदः इदानीम् मन्त्रब्राह्मणारण्यकेषु संकलिताः न उपलभ्यन्ते, किन्तु तासाम् कदाचन तेषु केषुचित् लुप्तेषु संकलितत्वम् संभाव्यते । अनेकाः उपनिषदः मन्त्रब्राह्मणारण्यकेभ्यः पूर्णतः स्वतन्त्राः सन्ति । उपनिषत्संख्या निश्चिता नास्ति । उपनिषत्सु 'ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा ।' इत्यस्मिन् मुक्तिकोपनिषदः श्लोके परिगणिताः ईशावास्योपनिषदादयः दश उपनिषदः प्रमुखाः, प्राचीनतमाः, प्रामाणिकाश्च मन्यन्ते । एतदतिरिक्तम्, कौषीतक्युपनिषत्, मैत्रायणीयोपनिषत् च अपि प्राचीने मन्येते । तैत्तिरीयनारायणोपनिषत् च तैत्तिरीयारण्यके संकलितत्वात् प्राचीना मन्तुम् शक्यते । सहैव श्वेताश्वतरोपनिषत् च अपि एका प्रसिद्धा उपनिषत् अस्ति । अवशिष्टाश्च उपनिषदः उपनिषन्नाम्ना प्रसिद्धिम् प्राप्ताः अपि प्रायः विभिन्नोद्देश्यविषयकाः निबन्धविशेषाः एव संभाव्यन्ते ।

६—**वेदाङ्गानि**—वेदस्वरूपसंरक्षणार्थम् तत्तत्त्वाववोधार्थम् च शिक्षाव्याकरणादीनाम् वेदाङ्गानाम् उद्भवः जातः । वेदानि अङ्गवत् वेदानाम् तत्प्रतिपाद्यस्य वा सहायकानि सन्ति, अतः एतानि 'वेदाङ्गानि' कथ्यन्ते । एतानि 'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति' (मु० उ० १।१।५) इतिमुण्डकोपनिषद्वाक्यपरिगणितरूपेण शिक्षादीनि षट् वर्तन्ते ।

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।<br>
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।।<br>
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।<br>
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ।। (पा० शि० ४१-४२)

इतिपाणिनीयशिक्षानुसारेण वेदाङ्गानि वेदानाम् हस्तपादादिवत् अङ्गानि वर्तन्ते, अतश्च वेदाध्ययनस्य साकल्यसम्पादनार्थम् साङ्गानाम् एव वेदानाम् अध्ययनम् कर्तव्यत्वेन वर्तते ।

वेदाङ्गेषु वर्णस्वराद्युच्चारणप्रकारः यया उपदिश्यते सा शिक्षा कथ्यते। यत्र यागप्रयोगः कल्प्यते समर्थ्यते वा सः कल्पः अस्ति। येन शब्दाः प्रकृतिप्रत्ययाद्युपदेशरूपे व्याक्रियन्ते तत् व्याकरणम् अस्ति। यत्र शब्दाः निरुच्यन्ते अर्थात् यत्र व्युत्पत्तिद्वारा शब्दानाम् अर्थप्रकाशनम् क्रियते तत् निरुक्तम् अस्ति। केषाञ्चिन्मतेन यत्र अर्थावबोधे निरपेक्षतया पदजातम् उक्तम् तत् निरुक्तम्। यत्र विभिन्नानाम् छन्दसाम् वर्णनम् वर्तते तत् छन्दः अस्ति। यत्र च यज्ञानुष्ठानकालनिर्णयः वर्तते तत् ज्यौतिषम् अस्ति। याज्ञवल्क्यशिक्षादयः शिक्षाग्रन्थाः सन्ति, ये च विभिन्नैः वेदैः सम्बद्धाः सन्ति। कल्पसूत्राणि द्विविधानि सन्ति–श्रौतसूत्राणि स्मार्तसूत्राणि च। स्मार्तसूत्राणि अपि पुनः द्विविधानि सन्ति—गृह्यसूत्राणि धर्मसूत्राणि च। एतदतिरिक्तम्, शुल्वसूत्राणि अपि कल्पसूत्रान्तर्गतानि सन्ति। एषाम् सम्बन्धः श्रौतसूत्रैः सह वर्तते। कात्यायनश्रौतसूत्रादीनि अनेकानि श्रौतसूत्राणि सन्ति। पारस्करगृह्यसूत्रादीनि च गृह्यसूत्राणि सन्ति। गौतमधर्मसूत्रादीनि च धर्मसूत्राणि सन्ति। कात्यायनशुल्वसूत्रादीनि च शुल्वसूत्राणि सन्ति। एतेषाम् विभिन्नानाम् कल्पसूत्राणाम् विभिन्नैः वेदैः सम्बन्धः अस्ति। वैदिकम् व्याकरणम् मूलतः ऋक्प्रातिशाख्यादिषु विभिन्नेषु प्रातिशाख्येषु उपलभ्यते। पाणिनीया अष्टाध्यायी व्याकरणस्य प्रमुखः ग्रन्थः अस्ति, यत्र वैदिकम् लौकिकम् च व्याकरणम् उपलभ्यते। निरुक्तक्षेत्रे कश्यपप्रजापतिप्रणीतनिघण्टुव्याख्यारूपम् यास्काचार्यप्रणीतम् निरुक्तम् प्रसिद्धम् वर्तते। छन्दःक्षेत्रे च पिङ्गलाचार्यकृतम् छन्दःसूत्रम् प्रसिद्धम् अस्ति। लगधप्रणीतम् वेदाङ्गज्यौतिषम् च ज्योतिर्वेदाङ्गस्य प्राचीनः प्रतिनिधिग्रन्थः अस्ति। वस्तुतः वेदाङ्गसाहित्यस्य अपि महान् विस्तारः वर्तते। तस्य किंचिद्विस्तृतः परिचयः अनन्तरम् स्वतन्त्ररूपेण अपि दातुम् शक्यते[1]। अस्तु ! उक्तप्रकारेण वैदिकसाहित्यस्य अत्र यः संक्षिप्तः अपि परिचयः दत्तः वर्तते, तेन अपि अयम् आभासस्तु भवितुम् शक्नोति एव यत् वैदिकम् साहित्यम् परिमाणे विशालम् स्वरूपे च व्यापकम सत् अस्माकम् कृते अमूल्यनिधिरूपे विराजमानम् अस्ति।

---

१—'वेदाङ्गानि' इतिशीर्षके निबन्धे

## १८

# श्रुतिवाङ्मयस्य रचनापरम्परायाः प्रवर्तनम्

**१—रचनायाः आधारः**—यतः, यथा च पूर्वम् दृष्टम्[1], श्रुतिवाङ्मयम् अनादिकालीनम् अपौरुषेयम् च अथवा सृष्टिप्रारम्भकाले ईश्वरप्रणीतम् न सत् विभिन्नेषु कालेषु उत्पन्नैः अनेकैः ऋषिभिः प्रणीतानाम् विभिन्नानाम् कृतीनाम् समष्टिः अस्ति, अतः इदम् कथयितुम् आवश्यकता न अवशिष्यते यत् यथा प्रत्येकम् वाङ्मयम् स्वकाले पूर्वतः प्रचलिताभ्यः विभिन्नाभ्यः मान्यताभ्यः पश्चात् अभिव्यक्तिम् ददाति तथैव श्रुतिवाङ्मयस्य विभिन्नाः अंशाः अपि स्वस्वकालेषु पूर्वतः प्रचलिताभ्यः मान्यताभ्यः पश्चात् अभिव्यक्तिम् प्रददति। अतश्च यथा प्रत्येकम् वाङ्मयम् स्वस्मिन् अभिव्यक्तासु पूर्वप्रचलितासु मान्यतासु आधारितत्वहेतोः ताभ्यः उत्तरर्वात भवति, तथैव श्रुतिवाङ्मयस्य विभिन्नाः अंशाः अपि स्वाभिव्यक्तासु पूर्वप्रचलितासु मान्यतासु आधारित्वहेतोः ताभ्यः उत्तरर्वातिनः: सन्ति। एवम् स्पष्टम् अस्ति यत् श्रुतिवाङ्मये अभिव्यक्तानाम् मान्यतानाम् समष्टिभूता सा सांस्कृतिकपरम्परा या स्वकीयस्य सर्वप्रथमस्य वाङ्मयस्य–वेदस्य–नाम्नः आधारे 'वैदिकपरम्परा' नाम्ना प्रसिद्धा अस्ति, वेदेभ्यः अपि पूर्ववर्तिनी[2] एवञ्च तेषाम् रचनायाः आधारभूता अस्ति। शब्दान्तरेषु, यदा बहुकालपर्यन्तम् देवस्तवनयजनाद्यात्मिका सांस्कृतिकपरम्परा प्रवर्तमाना अतिष्ठत्, तदा तत्पश्चात् तस्याः आधारेण श्रुतिवाङ्मयमूर्धन्यभूतानाम् वेदमन्त्राणाम् रचनायाः प्रारम्भः भवितुम् अशक्नोत्।

**२—आधारस्य विकासानुरूपम् रचनायाः दीर्घकालीना परम्परा**—यतः प्रत्येकम् सांस्कृतिकपरम्परा विकासशीला भवति, अतः श्रुतिवाङ्मयस्य आधारभूतायाः उक्तायाः सांस्कृतिकपरम्परायाः अपि कालक्रमेण यथा-यथा

---

१—'वेदानाम् उद्भवः (आ)' इतिशीर्षकः निबन्धः।

२—अत्र विषये द्रष्टव्यः—'वैदिकसंस्कृतिः' इतिशीर्षकः निबन्धः।

एव क्रमिकः विकासः जातः, तथा-तथा एव अस्याः क्रमिका अभिव्यक्तिः अपि श्रुतिवाङ्मये अभवत्। यतः, यथा च श्रुतिवाङ्मयस्य अध्ययनेन ज्ञायते, श्रुतिवाङ्मये अभिव्यक्तायाः सांस्कृतिकपरम्परायाः स्वरूपनिरूपकाणाम् आधारभूतानाम् विचारधाराणाम् तदाधारितप्रवृत्तीनाम् च स्वरूपम् सर्वत्र समानम् एकरूपम् वा न प्राप्यते, अपि तु तस्य विभिन्नेषु अंशेषु तासाम् स्वरूपभेदः अपि दृष्टिगोचरः भवति, अतः स्पष्टम् अस्ति यत् अस्य वाङ्मयस्य रचना समानकालीना न सती विभिन्नकालीना अस्ति। यतः सांस्कृतिकपरम्परायाः विकासशीलत्वे अपि तस्याः स्वरूपे अन्तरम् शीघ्रम् एव न समायाति, अपि तु दीर्घकालात् अनन्तरम् आयाति, अतः अस्याः विभिन्नानाम् स्वरूपाणाम् अभिव्यञ्जकाः अंशाः तु उक्तप्रकारेण सामान्यतः भिन्नकालीनाः एव नहि, अपि तु परस्परम् दीर्घकालस्य अन्तरात् पश्चात् रचिताः सिद्धाः भवन्ति एव, सहैव अस्य ते अंशाः अपि येषु परस्परसमानम् स्वरूपम् प्रतीयते, अनिवार्यतः एकस्य एव कालस्य रचना न सन्तः, विभिन्नकालेषु रचिताः भवितुम् शक्नुवन्ति, अथ च तेषु अभिव्यक्तायाः आधारभूतायाः विचारधारायाः समानत्वे अपि तदाधारितानाम् प्रवृत्तीनाम् मान्यतानाम् वा सूक्ष्मभेदः अपि दृष्टिगोचरः भवितुम् शक्नोति। इत्थम् श्रुतिवाङ्मये अभिव्यक्तस्य विचारधारागतस्य स्पष्टस्य स्वरूपभेदस्य प्रवृत्तिगतस्य च सूक्ष्मभेदस्य आधारेण इदम् स्पष्टतः ज्ञातम् भवति यत् अस्य समस्तस्य वाङ्मयस्य रचना एकस्मिन् एव काले न अभवत्, अपि तु अस्य रचनायाः एका दीर्घकालीना परम्परा अस्थात्।

यथा च पूर्वम् दृष्टम्[1], 'ये च पूर्व ऋषयो ये च नूत्ना इन्द्र ब्रह्माणि जनयन्त विप्राः' (ऋ० वे० ७।२२।९) इत्यादिभिः एतादृशैः मन्त्रैः ये स्वयम् एव स्वान् प्राचीनानाम् नवीनानाम् च ऋषीणाम् रचनाम् कथयन्ति, अस्य एव तथ्यस्य पुष्टिः भवति यत् समस्तस्य श्रुतिवाङ्मयस्य तु वार्ता एव का, अस्य एकस्य अंशस्य—मन्त्राणाम्—अपि एका रचना-परम्परा अतिष्ठत्।

**३—रचना-परम्परायाः प्रवर्तनम्**—उक्तप्रकारेण अस्मिन् तथ्ये स्पष्टे सति यत् श्रुतिवाङ्मयस्य एका दीर्घकालीना रचनापरम्परा अतिष्ठत्, अथ च अस्य विभिन्नाः अंशाः अस्याः एव रचनापरम्परायाः विभिन्नकालीनाः घटकाः अङ्गानि वा सन्ति, इदम् स्वत एव स्पष्टम् भवति यत् अस्य कस्माच्चित् केभ्यश्चित् वा प्राचीनतमेभ्यः अंशेभ्यः अस्य रचनापरम्परायाः प्रवर्तनम् अभवत्, तदनन्तरम् च अन्येषाम् अंशानाम् क्रमशः सृष्टिः भवन्ती आसीत्। केन कैः वा अंशैः इयम् रचना-परम्परा प्रवृत्ता, तदनन्तरम् अव-

---

१—'वेदानाम् उद्भवः (आ)' इतिशीर्षकः निबन्धः।

शिष्टाः विभिन्नाः अंशाः केन क्रमेण अस्तित्वम् प्राप्नुवन्, अस्मिन् विषये विचारणावसरे सर्वप्रथमम् अस्मिन् तथ्ये स्वत एव ध्यानम् याति यत् उपलब्धाः विभिन्नाः संहिताः ब्राह्मणानि, आरण्यकानि उपनिषदश्च श्रुतिवाङ्मयस्य एतादृशाः अंशाः न सन्ति ये च प्रस्तुतस्य विषयस्य परिधौ समायातुम् शक्नुयुः। शब्दान्तरेषु, प्रस्तुते विषये अस्मिन् रूपे विचारः न भवितुम् शक्नोति यत् अमुका संहिता अमुकम् ब्राह्मणम् वा अमुकस्याः संहितायाः अमुकस्मात् ब्राह्मणात् वा पूर्वम् अस्तित्वम् प्राप्नोत्, यतो हि एषाम् संहितादिग्रन्थानाम् एतादृशम् स्वरूपम् नास्ति यच्च तत् कस्यचित् वर्तमानस्य मौलिकस्य ग्रंथस्य स्वरूपम् इव स्वकीयानाम् सर्वेषाम् अपि अंशानाम् परस्परसम्बद्धसमानकालीनरचनात्वात् स्वत एव मौलिकरूपेण सङ्घटितम् स्यात्, अपि तु तत् एतादृशम् संकलनात्मकम् स्वरूपम् अस्ति यच्च विभिन्नकालेषु स्वतन्त्रेण मौलिकेन वा रूपेण अस्तित्वम् प्राप्नुवतीसु विभिन्नप्रकारिकासु रचनासु पश्चात् उद्देश्यविशेषेण कस्यांचित् संग्रहग्रन्थस्य रूपे संग्रथितासु संकलितासु वा सतीषु प्राप्तम् अभवत्। इत्थम् मौलिकरचनानाम् काले उपलब्धसंहितादिग्रन्थानाम् च रूपे तासाम् संकलनकाले स्वभावत एव भेदात् सहैव च संकलितरचनानाम् स्वसंकलनैः मूलतः सम्बन्धाभावात् संकलनात्मकानाम् संहितादिग्रन्थानाम् आधारेण नहि, अपि तु तेषु संकलितानाम् विभिन्नरचनानाम् एव उक्तप्रकारेण श्रुतिवाङ्मयस्य विभिन्नानाम् स्वतन्त्राणाम् मौलिकानाम् वा अंशानाम् रूपे सत्त्वात् स्वयम् एषाम् एव आधारेण प्रस्तुतस्य विषयस्य सम्बन्धे विचारः भवितुम् शक्नोति।

एवम् उपलब्धसंकलनानाम् रूपे ध्यानम् न दत्त्वा तेषु संकलितासु रचनासु एव यदि स्वतन्त्ररूपेण दृष्टिः दीयेत चेत् श्रुतिवाङ्मये रचनानाम् मुख्यतः द्वे एव प्रसिद्धे रूपे उपलभ्येते—मन्त्राः मन्त्रेतराश्च रचनाः। अनयोः मन्त्रात्मिकायाः रचनायाः परम्परागतरूपेण मुख्यभेदाः ऋक्सामयजुषः अथर्वाङ्गिरसश्च मन्यन्ते, एभ्यः अतिरिक्ताश्च समस्ताः रचनाः सामान्यतः 'मन्त्रेतराः' कथयितुम् शक्यन्ते। यद्यपि अस्याः मन्त्रेतरायाः रचनायाः परम्परागतरूपेण प्रचलितम् सामान्यम् अभिधानम् 'ब्राह्मणम्' अस्ति, किन्तु पुनरपि अस्याः अपि ब्राह्मणम्, आरण्यकम्, उपनिषत्, गाथा, श्लोकः, इतिहासः, पुराणम् चेत्यादयः अनेके मौलिकाः भेदाः सन्ति। मन्त्रब्राह्मणात्मकस्य श्रुतिवाङ्मयस्य उक्तप्रकारिकाणाम् विभिन्नानाम् रचनानाम् समूहात्मकाः अन्तिमाः घटकाः एव अस्य मौलिकाः अंशाः कथयितुम् शक्यन्ते। ब्राह्मणग्रन्थानाम् अनुसारेण उक्तानाम् चतुःप्रकारकाणाम् मन्त्राणाम् समूहात्मकाः घटकाः क्रमशः सूक्तानि (ऋचाम्), दशतानि (साम्नाम्), अनुवाकाः (यजुषाम्), पर्वाणि (अथर्वाङ्गिरसाम्) च सन्ति। अनेन एव प्रकारेण ब्राह्मणा-

त्मिकायाः रचनायाः मौलिकाः अंशाः उक्तानाम् ब्राह्मणारण्यकादिरूपाणाम् रचनानाम् स्वतन्त्राणि विभिन्नानि प्रकरणानि श्लोकादयश्च सन्ति ।

मन्त्रब्राह्मणात्मकस्य श्रुतिवाङ्मयस्य उक्तरूपेषु विभिन्नेषु अंशेषु केन रूपेण तस्य च केन अंशेन अस्य वाङ्मयस्य रचनापरम्परायाः प्रवर्तनम् अभवत्, इदम् यद्यपि निश्चितरूपेण न कथयितुम् शक्यते, किन्तु पुनरपि अस्मिन् विषये पर्याप्तः निश्चयात्मकः निष्कर्षः प्राप्तुम् शक्यते । यतः ब्राह्मणात्मकम् वाङ्मयम् मन्त्राणाम् विभिन्नप्रकारेण निर्देशम् कृत्वा एषाम् पूर्वास्तित्वम् स्वीकरोति, अतः निश्चितम् अस्ति यत् ब्राह्मणात्मिकाभिः रचनाभिः नहि अपि तु मन्त्रद्वारा एव अस्य रचनापरम्परायाः प्रवर्तनम् अभवत् । मन्त्रेषु यत्र ऋक्सामयजूंषि अथर्वाङ्गिरस्संज्ञकैः मन्त्रैः परिचितानि न सन्ति, तत्र अथर्वाङ्गिरस्संज्ञकाः मन्त्राः 'ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम्' (अ० वे० ७।५४।२) इत्यादिरूपे ऋगादिमन्त्रान् स्पष्टतः निर्दिश्य तेषाम् पूर्वास्तित्वम् सूचयन्ति । एतेन स्पष्टम् अस्ति यत् अथर्वाङ्गिरस्संज्ञकैः मन्त्रैः श्रुतिवाङ्मयस्य रचनापरम्परा न प्रवृत्ता । यथा च 'ऋच्यध्यूढं साम गीयते' (छा० उ० १।६।२) इत्यादिभिः वचनैः ज्ञायते साम ऋगाधारम् अस्ति, अतः इदम् अपि स्पष्टम् यत् सामभिः इयम् रचनापरम्परा न प्रवृत्ता । यतः यत्र सामवेदीयेन एकेन स्वतन्त्रेण मन्त्रेण 'ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते' (कौ० सं० पू० ४।८।१०) इतिरूपे ऋक्सामनी कर्मसाधने अवबोधिते, तत्र अथर्ववेदीयेन पूर्वोक्तेन स्वतन्त्रेण मन्त्रेण उक्तम् सामवेदीयमन्त्रम् पूर्वम् धृत्वा 'ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम्' (अ० वे० ७।५४।२) इतिरूपे ऋक्सामभ्याम् सह यजुः अपि कर्मोपयोगि अवबोधितम्, अतः सूचितम् भवति यत् यत्र उक्तसाममन्त्रकाले केवले ऋक्सामनी एव कर्मसाधने स्तः, तत्र उक्ताथर्वमन्त्रकाले यजुः अपि कर्मसाधनरूपे स्वीकृतम् अभवत् । फलतश्च स्पष्टम् अस्ति यत् यत्र यजूंषि अथर्वमन्त्रेभ्यः पूर्ववर्तीनि सन्ति, तत्र तानि ऋग्भ्यः एव नहि, अपि तु तदुत्तरवर्तिभ्यः साममन्त्रेभ्यः अपि उत्तरकालीनानि सन्ति । इत्थम् ऋचः एव समस्ते श्रुतिवाङ्मये अग्रजाः सिद्धाः भवन्ति, अथ च कामम् कतिपयाः ऋचः सामभ्यः, यजुर्भ्यः अथर्वाङ्गिरस्संज्ञकेभ्यः मन्त्रेभ्यः वा पश्चात् अस्तित्वम् प्राप्तवत्यः स्युः, किन्तु अधिकांशतः ताः एभ्यः सर्वेभ्यः अपि प्राचीनतमाः सन्ति, तासाम् एव श्रुतिवाङ्मयस्य रचनापरम्परायाम् सर्वप्रथमम् आविर्भावः जातः । अस्तु ! इत्थम् ऋग्भिः एव अस्याः रचनापरम्परायाः प्रवर्तनम सिद्धम् भवति । यतः ऋचाम् समूहात्मकाः मौलिकाः घटकाः ऋग्वेदे संकलितानि विभिन्नानि सूक्तानि सन्ति, अतः केनचित् कैश्चित् ऋक्सूक्तैः वा एव श्रुतिवाङ्मयस्य रचनायाः सूत्रपातः अभवत् ।

यतः ऋग्वेदीयसूक्तेषु अभिव्यक्तासु विभिन्नासु विचारधारासु बहु-

देववादीया विचारधारा एव प्राथमिकी प्रतीता भवति, अतः सामान्यतः इदम् कथयितुम् शक्यते यत् बहुदेववादीयायाः विचारधारायाः अनुसारेण एतादृशेषु विभिन्नेषु देवेषु यद्विषयिका मान्यता प्राचीनतमा स्यात्, येषाम् च महत्त्वम् रचनाप्रवर्तनकाले अतिशयितम् स्यात्, कस्यचित् केषाञ्चित् वा देवानाम् विषये रचितेषु विभिन्नेषु सूक्तेषु केनचित् कैश्चित् वा सूक्तैः श्रुति-वाङ्मयस्य रचनापरम्परायाः प्रवर्तनम् अभवत् ।

इयम् रचनापरम्परा कस्मिन् काले प्रवृत्ता अभवत्, अस्मिन् सम्बन्धे किमपि निश्चयात्मकरूपेण कथयितुम् न शक्यते । इयत् तथ्यम् अवश्यम् अस्ति यत् इदम् दृष्ट्वा यत् अग्निविषयकेषु विभिन्नेषु ऋक्सूक्तेषु अग्नेः उद्भवनप्रज्वलनादिकान् साधारणान् व्यापारान् प्रति अपि अत्यधिकः विस्मयः व्यज्यमानः अस्ति, अथ च अस्मिन् भूतले तस्य कुतोऽपि आग-मनस्य प्राकट्यस्य वा विभिन्नैः वर्णनैः एक रहस्यात्मिका स्थितिः एव सूचिता अस्ति, यदि इदम् कथ्येत यत् एषाम् सूक्तानाम् प्रणयनम् कुर्वताम् अग्निपरिचयप्राप्तेः पश्चात् बहूनि दिनानि व्यतीतानि न अभवन् चेत्, किमपि अनौचित्यम् न भविष्यति ।

## १९

# श्रुतिवाङ्मयस्य रचनापरम्परायाः विकासः

**१—प्रास्ताविकम्**—यथा च विगते निबन्धे दृष्टम्, ऋग्भिः श्रुतिवाङ्मयस्य रचनापरम्परायाः प्रवर्तनम् जातम्। वस्तुतः इदम् संभाव्यते अपि, यतो हि पूर्वपरम्पराप्राप्तम् देवयजनम् कुर्वतः मानवस्य भक्तिभावनायुक्तात् भावुकतापूर्णात् हृदयात् स्वान् इष्टदेवान् प्रति कस्याश्चित् वाङ्मय्याः रचनायाः रूपे ये सर्वप्रथमम् उद्गाराः निसृताः स्युः, ते स्वभावतः देवानाम् गुणगानस्य तान् प्रति स्वमनोरथप्रकाशनस्य च रूपे एव निःसृताः स्युः, इदमेव च ऋचाम् स्वरूपम् अस्ति। बहुदेववादीयविचारधारायाः अनुसारेण देवयजनस्य पूर्वप्रचलितायाम् परम्परायाम् यदा इज्यमानदेवानाम् स्तुतिरूपे रचितैः ऋक्सूक्तैः श्रुतिवाङ्मस्य रचनापरम्परा प्रवृत्ता अभवत्, तदा तत्पश्चात् यथा-यथा एव आधारभूतायाः विचारधारायाः तस्याः व्यावहारिकरूपस्य धर्मस्य च विकासः अभवत्, तदनुरूपम् एव अस्याः रचनापरम्परायाः विकासः अभवत्।

**२—विकासस्य प्रथमम् चरणम्**—प्रारम्भे पूर्वपरम्पराप्राप्तानाम् देवानाम् विषये विभिन्नैः ऋषिभिः विभिन्नानाम् सूक्तानाम् रचना जाता, तदनन्तरम् च यथा-यथा एव क्रमशः अभिनवानाम् देवानाम् अनुभूतिः जाता, तथा-तथा एव पूर्वमान्यताप्राप्तैः देवैः सह एषाम् अभिनवानाम् देवानाम् अपि स्तुतौ सूक्तानाम् रचना सम्पद्यमाना अभवत्।

**३—विकासस्य द्वितीयम् चरणम्**—यदा उक्तप्रकारेण एकस्याम् पर्याप्तायाम् संख्यायाम् ऋक्सूक्तानाम् रचना सम्पन्ना अवभत्, तदा तदनन्तरम् 'साम्नः' रूपे ऋचाम् गानस्य एकः प्रकारः आविष्कृतः अभवत्, अथ च अस्मिन् रूपे गेयानाम् ऋचाम् चयनम् कृत्वा ताः साम्नः गीतेः वा रूपे व्यवस्थिताः कृताः, एवञ्च स्वतन्त्ररूपेण अपि गेयाः साममन्त्राः रचितुम् आरब्धाः। अनेन एव प्रकारेण यजनपद्धतेः विकासे सति यजुषाम् रूपे यजनक्रियासूचकानाम् मन्त्राणाम् रचनायाः अपि परम्परा प्रवृत्ता अभवत्। यथा च ऋक्-

सूक्तानाम् 'इन्द्राय साम गायत' (ऋ० वे० ८।९८।१), 'ऋचः सामानि जज्ञिरे....यजुस्तस्मादजायत' (ऋ० वे० १०।९०।९) इत्यादिभिः निर्देशैः स्पष्टम् अस्ति, यद्यपि पूर्वोक्तप्रकारेण सर्वप्रथमम् ऋचाम् रचना प्रवृत्ता अभवत्, किन्तु पुनरपि इदम् नास्ति यत् समस्तानाम् ऋक्सूक्तानाम् रचनायाम् समाप्तायाम् सत्याम् एव साम्नाम् यजुषाम् च रचना प्रवृत्ता भवितुम् पारयति स्म, अपि तु तस्मात् पूर्वमेव प्रवृत्ता अभवत्, अथ च एवम् अनेकेषु ऋक्सूक्तेषु सामभ्यः यजुर्भ्यश्च पूर्वमेव रचितेषु सत्सु अपि उक्तप्रकारकान् निर्देशान् ददति सूक्तानि अन्यानि च अनेकानि सूक्तानि साम्नाम् यजुषाम् च रचनायाम् प्रारब्धायाम् सत्याम् रचितानि सन्ति। यदवधि अथर्वाङ्गिरस्संज्ञकानाम् मन्त्राणाम् सम्बन्धः अस्ति, यतः ऋक्सामयजुःसंज्ञकेषु मन्त्रेषु तेषाम् निर्देशः नास्ति, अतः स्पष्टम् अस्ति यत् एषाम् रचनायाः सूत्रपातः ऋक्सामयजुषाम् रचनायाम् समाप्तायाम् सत्याम् भवितुम् अपारयत् अथवा एषाम् रचनायाः प्रारम्भः ऋगादिमन्त्राणाम् आधारभूतायाः देवयजनात्मकपरम्परायाः बहिः स्वतन्त्ररूपेण ऋगादिमन्त्राणाम् एव अनुकरणे अभवत्, अथ च एवम् उक्तपरम्परायाः बहिः उद्भूतत्वात् एतेभ्यः ऋगादिमन्त्राणाम् रचनायाः समाप्तिपर्यन्तम् अस्याम् स्थानम् उपलब्धम् भवितुम् न शशाक।

अस्तु ! उक्तप्रकारेण ऋगतिरिक्तानाम् अन्यप्रकारकाणाम् सामादिमन्त्राणाम् अपि रचनापरम्परा प्रवृत्ता अभवत्, दीर्घकालपर्यन्तम् च इयम् रचनापरम्परा बहुदेववादीयविचारधारायाः अनुसारेण प्रवर्तमाना अतिष्ठत्।

४—**विकासस्य तृतीयम् चरणम्**—उक्तस्थितेः अनन्तरम् यदा विचारधारायाः क्षेत्रे एतादृशी क्रान्तिः अभवत् यत् यया पूर्वपरम्पराप्राप्तानाम् देवानाम् महत्त्वम् न्यूनम् जातम् तदा स्वभावत एव देवस्तवनात्मकानाम् सूक्तानाम् रचना न्यूना भवितुम् आरब्धा। अन्ते च दार्शनिकतत्त्ववादस्य सूत्रपाते सति यद्यपि एतत्सम्बन्धीनि कतिपयानि सूक्तानि रचितानि जातानि, किन्तु एतादृशेभ्यः सूक्तेभ्यः तेषाम् मौलिकस्य देवस्तवनात्मकस्य स्वरूपस्य दूरीभूतत्वात् एषाम् अपि मौलिकरचनायाः परम्परा समाप्ता अभवत्। अनेनैव प्रकारेण च अग्रे साम्नाम् यजुषाम् च मौलिकायाः रचनायाः परम्परा अपि विरामम् प्राप्तवती।

५—**विकासस्य चतुर्थम् चरणम्**—ऋगादिमन्त्राणाम् मौलिकरचनायाः परम्परायाः समाप्तिम् प्रति गमनकाले वैदिकविचारधारायाः क्षेत्रे उक्तप्रकारेण दार्शनिकतत्त्ववादस्य सूत्रपातहेतोः आधारभूतायाम् सांस्कृतिकपरम्परायाम् यज्ञादिकर्मसम्पादनस्य पूर्वपरम्परागतया प्रवृत्त्या सह तत्त्वचिन्तनस्य एका अन्या अभिनवा प्रवृत्तिः अपि प्रारब्धा अथ च एवम् तत्र यजनस्य तत्त्वचिन्तनस्य च रूपे द्वे प्रवृत्ती अभवताम्। अनयोः प्रथमायाः

प्रवृत्तेः अनुसारेण यज्ञादिकर्मणाम् पद्धतिः, या च सुदीर्घकालात् प्रवृत्तत्वात् एतत्कालपर्यन्तम् पर्याप्तरूपेण विकसिता अभवत्, व्यवस्थिता क्रियमाणा भवितुम् आरब्धा, फलतश्च अस्याः प्रक्रियायाः अनुसारेण पूर्वपरम्परया एव यज्ञेषु नियुज्यमानैः विभिन्नैः ऋत्विग्भिः सम्पाद्यमानानाम् तत्तद्यज्ञाङ्गभूतानाम् कर्मणाम् सम्पादनावसरे पूर्वत एव प्रयुज्यमानानाम् ऋगादिमन्त्राणाम् प्राथमिकानि संकलनानि सम्पादितानि जातानि यानि च ऋत्विजां शाखाभेदानुसारेण विभिन्नानाम् संहितानाम् रूपे दृष्टिगोचराणि अभवन्। अस्याः एव प्रक्रियायाः विकासे अग्रे विभिन्नानाम् ब्राह्मणप्रकरणानाम् रचना जाता, येषाम् संकलनम् विभिन्नानाम् ब्राह्मणग्रन्थानाम् रूपे सम्पन्नम् अभवत्। द्वितीयायाः तत्त्वचिन्तनस्य प्रवृत्तेः अनुसारेण तत्त्वजिज्ञासा क्रमशः बलवती जाता, तत्त्वदर्शनस्य च प्रयत्नः क्रियमाणः अभवत्। एतस्य प्रयत्नस्य फलस्वरूपम् जगतः, जगन्मूलतत्त्वस्य, स्वस्वरूपस्य, अन्येषाम् च दार्शनिकविषयाणाम् सम्बन्धे यानि रहस्यानि क्रमशः उद्घाटितानि अभवन्, तदनुसारेण पूर्वपरम्पराप्राप्तानाम् देवानाम् तेषाम् यजनाय च क्रियमाणानाम् यज्ञादिकर्मणाम् अभिनवया तात्त्विकदृष्ट्या दर्शनम् प्रारब्धम्। अस्याः प्रक्रियायाः विकासे पूर्वम् विभिन्नानाम् आरण्यकप्रकरणानाम् पश्चात् च विभिन्नानाम् उपनिषत्प्रकरणानाम् रचना जाता, येषाम् संकलनम् यथायथम् विभिन्नानाम् आरण्यकानाम् उपनिषदाम् च रूपे सम्पन्नम् अभवत्। वेदान्तापराभिधानानाम् उपनिषत्प्रकरणानाम् रचनायाः समाप्त्या सहैव श्रुतिवाङ्मयस्य रचनापरम्परायाः विकासः विरामम् प्राप्तवान्।

२०

# ऋग्वेदः

१—**प्राचीनता**—इदम् प्रायः सर्वसम्मतम् तथ्यम् अस्ति यत् 'ऋग्वेदः' विश्वस्य उपलब्धम् प्राचीनतमम् वाङ्मयम् अस्ति । यथा च पूर्वम् दृष्टम्[1], वेदवाङ्मयम् इयत्प्राचीनम् वर्तते यत् तस्य रचनाकालम् ज्ञातुम् अधुनावधि अपि आधुनिकः इतिहासः समर्थः नास्ति । एतादृशे प्राचीने वेदवाङ्मये अपि ऋग्वेदस्तु सर्वाधिकप्राचीनः प्राचीनतमः वा वर्तते । यथा च मन्त्रब्राह्मणात्मकस्य श्रुतिवाङ्मयस्य अध्ययनेन ज्ञातम् भवति, ब्राह्मणारण्यकोपनिषदात्मकात् ब्राह्मणभागात् मन्त्रात्मकम् वेदवाङ्मयम् प्राचीनतरम् अस्ति, यतो हि ब्राह्मणभागे मन्त्राणाम् निर्देशः, व्याख्यानम्, विनियोगप्रकारश्च इत्यादिकम् वर्तते, यदा च मन्त्रेषु ब्राह्मणभागस्य निर्देशादिकम् नास्ति । मन्त्रात्मके वेदवाङ्मये च दृष्टे ज्ञातम् भवति यत् अस्य प्राचीनतमानाम् अंशानाम् आकरः ऋग्वेदः अस्ति । अस्य वेदस्य अपि विभिन्नानि सूक्तानि विभिन्नेषु कालेषु विभिन्नैः ऋषिभिः प्रणीतानि सन्ति, अथ च कामम् अपवादस्वरूपम् अस्य कतिपयानि सूक्तानि वेदवाङ्मयस्य अन्यस्मात् कस्माच्चिदपि अंशात् अर्वाचीनानि सन्तु नाम, किन्तु अस्य अधिकांशभागः वेदवाङ्मयस्य प्राचीनतमः भागः अस्ति ।

उक्तविषये च इदम् विनिगमकम् अस्ति यत् चतुर्षु अपि वेदेषु समानरूपेण प्राप्तेषु मन्त्रेषु ध्यानेन दृष्टेषु सत्सु इदम् स्पष्टम् भवति यत् यत्र ऋग्वेदे ते मन्त्राः स्वकीये मौलिके स्वाभाविके च स्थाने सन्तः स्वाकरसूक्तानाम् प्रतिपाद्यस्य शृङ्खलारूपाः सन्ति, तत्र ते एव मन्त्राः अन्येषु वेदेषु प्रकरणप्रतिपाद्यस्य शृङ्खलारूपाः न सन्तः अन्येन उद्देश्यविशेषेण तत्र संकलितीकृताः सन्ति, यदि च कुत्रापि ते प्रतिपाद्यस्य दृष्ट्या अपि स्थापिताः सन्ति चेत् ते ऋग्वेदस्य मौलिकप्रतिपाद्यस्य अन्धारे विकसितस्य प्रतिपाद्यस्य अङ्गरूपे कृताः सन्ति, तत्र च तेषाम् प्रतिपाद्यम् स्पष्टतरम् पल्लवितम् च

---

१—'वेदानाम् रचनाकालः' इतिशीर्षकः निबन्धः ।

कृतम् अस्ति । सामवेदे कतिपये अल्पाः एव मन्त्राः तदीयाः सन्ति, अन्यथा तत्रस्थाः मन्त्राः मौलिकरूपेण ऋग्वेदस्य सन्ति, तस्माच्च तान् गृहीत्वा तत्र ते संगीतमयसामरूपाः गीतिरूपाः वा कृताः सन्ति । यजुर्वेदे ऋग्वेदीयमन्त्राणाम् कस्यापि प्रतिपाद्यस्य प्रतिपादनाय नहि, अपि तु कर्मविशेषे विनियोगार्थम् संकलनम् कृतम् वर्तते । प्रतिपाद्यस्य दृष्ट्या तत्र तेषाम् किंचिदपि महत्त्वम् नास्ति । यजुर्वेदस्य अथर्ववेदस्य च कतिपयेषु स्थलेषु च ऋग्वेदीयसूक्तानि प्रतिपाद्यदृष्ट्या पल्लवितानि कृतानि सन्ति । एवम् इदम् एकम् निर्विवादम् तथ्यम् अस्ति यत् कतिपयानि अपवादस्वरूपाणि सूक्तानि विहाय ऋग्वेदस्य अधिकांशः भागः वेदवाङ्मयस्य प्राचीनतमः भागः अस्ति । अन्यथा च अपि ऋग्वेदस्य प्राचीनतमत्वम् संभाव्यते, यतो हि पूर्वपरम्पराप्राप्तम् देवयजनम् कुर्वतः मानवस्य भक्तिभावनाप्लावितात् भावुकतापूर्णात् हृदयात् स्वान् इष्टदेवान् प्रति कस्याश्चित् वाङ्मय्याः रचनायाः रूपे सर्वप्रथमम् ये उद्गाराः निःसृताः स्युः, ते स्वभावतः देवानाम् गुणगानस्य तान् प्रति च स्वमनोरथप्रकाशनस्य रूपे एव निःसृताः स्युः, इदमेव च ऋचाम् स्वरूपम् अस्ति यासाम् संकलनम् ऋग्वेदः अस्ति ।

अस्तु ! इत्थम् ऋग्वेदः वेदवाङ्मयस्य प्राचीनतमम् अधिकांशम् स्वस्मिन् संकलितरूपेण दधाति, इतिहेतोः वेदवाङ्मये सर्वाधिकरूपेण प्राचीनः अस्ति, अथ च समग्रस्य भारतीयसाहित्यस्य तु कापि वार्ता एव नहि, समस्ते विश्ववाङ्मये अपि उपलब्धम् प्राचीनतमम् वाङ्मयम् अस्ति ।

२—**ऋग्वेदस्य स्वरूपम्**—यथा च वेदानाम् अध्ययनेन ज्ञायते, एषाम् रचनायाः पूर्वमेव देवयजनादिकस्य कर्मणः परम्परा प्रवृत्ता अभवत्[1], तस्याः एव अनुरूपम् च इज्यमानदेवानाम् स्तवनाय देवयजनादिकस्य च कर्मणः गौरवगानाय ऋग्वेदीयसूक्तानाम् रचना जाता । स्तुत्यात्मकत्वात् ऋग्वेदीयमंत्राः 'ऋचः' उक्ताः । ऋचाम् समूहात्मकः एकः स्वतन्त्रः घटकः एव 'सूक्तम्' उच्यते । प्रत्येकम् सूक्तम् एव ऋग्वेदस्य मौलिकः अन्तिमः घटकः अस्ति । ऋक्सूक्तानाम् संकलनम् एव 'ऋग्वेदः' अस्ति । एवम् प्रायः सम्पूर्णस्य ऋग्वेदस्य स्वरूपम् स्तुत्यात्मकम् अस्ति ।

३—**ऋग्वेदस्य शाखा**—ऋगादीनाम् विभिन्नप्रकारकाणाम् मन्त्राणाम् ऋग्वेदादिरूपे विभिन्नानि संकलनानि यज्ञकर्मणि नियुज्यमानानाम् विभिन्नानाम् ऋत्विजाम् प्रयोगार्थम् कृतानि सन्ति । ऋचाम् ऋग्वेदरूपे संकलनम् ऋत्विजाम अन्यतमस्य होतुः प्रयोगार्थम् कृतम् वर्तते । यज्ञे होतुः कार्यम् अस्ति यत् सः स्तुतिस्वरूपाभिः ऋग्भिः इज्यमानदेवानाम् आह्वानम् करोति ।

---

१—अस्मिन् विषये द्रष्टव्यः—'वैदिकसंस्कृतिः' इतिशीर्षकः निबन्धः ।

ऋचाम् संकलनम् एकत्र एव न जातम्, अपि तु ऋचाम् अध्ययनाध्यापनम् कुर्वताम् तासाम् यज्ञेषु प्रयोगम् च कुर्वताम् होतृजनानाम् शाखापराभिधानेषु विभिन्नेषु वर्गेषु कुलेषु वा जातम् । फलतः ऋचाम् विभिन्नानि संहितापराभिधानानि संकलनानि जातानि येषु प्रत्येकम् 'ऋग्वेद' शब्दाभिधेयम् स्वतन्त्ररूपेण 'ऋग्वेदः' वा आसीत् । ऋग्वेदस्य अध्ययनाध्यापनम् कुर्वताम् तस्य यज्ञेषु प्रयोगम् कुर्वताम् च विभिन्नाः शाखाः आसन् । 'एकविंशतिधा बाह्वृच्यम्'[१] इतिमहाभाष्यवचनानुसारेण ऋग्वेदस्य एकविंशतिः शाखाः आसन् । चरणव्यूहादिषु अन्येषु ग्रन्थेषु आसाम् संख्याभेदः अपि उपलभ्यते । चरणव्यूहानुसारेण विभिन्नासु ऋग्वेदशाखासु शाकला, बाष्कला, आश्वलायनी, शाङ्खायनी, माण्डूकायनी, इति पञ्च शाखाः प्रमुखाः सन्ति । एकस्याः शाखायाः तत्र संकलिता एका स्वतन्त्रा संहिता आसीत्, इतिहेतोः विभिन्नासु ऋग्वेदशाखासु संकलिताभिः ऋग्वेदसंहिताभिः अपि विभिन्नाभिः भाव्यम्, किन्तु इदानीम् केवलम् एकस्याः शाकलशाखायाः एव ऋग्वेदसंहिता उपलभ्यते या अस्मिन् विषये पूर्वप्रचलितव्यवहारानुसारेण स्वभावतः स्वशाखानाम्ना 'शाकलसंहिता' इतिरूपे अपि प्रथिता अस्ति । इदानीम् ऋग्वेदस्य यत् परिचयादिकम् दीयते तत् अस्याः एव संहितायाः अनुसारेण दीयते, यतो हि इदानीम् इयमेव केवला ऋग्वेदस्य स्वरूपम् प्रस्तुतम् करोति । अत्रापि तदनुसारेण एव ऋग्वेदस्य चर्चनम् क्रियमाणम् वर्तते ।

**४—ऋग्वेदस्य परिमाणम्**—ऋग्वेदे १०२८ सूक्तानि सन्ति, येषु एकादश खिलसूक्तानि मन्यन्ते । सकलेषु सूक्तेषु प्रायः १०६०० मन्त्राः सन्ति । एवञ्च एकस्य सूक्तस्य मन्त्राणाम् आनुपातिकी संख्या दश सिध्यति । लघोः लघुतरे सूक्ते एकः मन्त्रः अस्ति, महतः महत्तरे च सूक्ते अष्टपञ्चाशत् मन्त्राः सन्ति ।

**५—ऋग्वेदस्य विभाजनम्**—ऋग्वेदस्य द्विविधिम् विभाजनम् उपलभ्यते, ययोः एकम् कृत्रिमम् विभाजनम् अस्ति यदनुसारेण सम्पूर्णः ऋग्वेदः अष्टसु भागेषु विभक्तः अस्ति । इमे भागाः 'अष्टकानि' उच्यन्ते । प्रत्येकम् अष्टकम् अष्टसु भागेषु विभज्यमानम् अस्ति । इमे भागाः 'अध्यायाः' उच्यन्ते । एवम् ऋग्वेदे अष्ट अष्टकानि चतुःषष्टिश्च अध्यायाः सन्ति । अध्यायेषु अनियतसंख्याकाः 'वर्गा' सन्ति, ये च पञ्चषाणाम् मन्त्राणाम् समूहरूपाः सन्ति । इदम् विभाजनम् कृत्रिमत्वात् अधिकम् प्रचलितम् नास्ति ।

अपरम् विभाजनम् मौलिकम् स्वाभाविकम् च अस्ति । ऋग्वेदस्य मौलिकाः अन्तिमाः घटकाः सूक्तानि सन्ति, यानि स्वकीयम् एकम् प्रतिपाद्यम् प्रतिपादयन्ति । अस्य १०२८ सूक्तानि दशसु मण्डलेषु विभक्तानि सन्ति ।

---

१—महाभाष्ये पस्पशाह्निकम् ।

एवम्, इदम् विभाजनम् दशानाम् मण्डलानाम् १०२८ सूक्तानाम् च अस्ति। इदम् अनया दृष्ट्या ऐतिहासिकम् अपि अस्ति यत् इदम् स्वस्वरूपेण निर्दिशति यत् ऋग्वेदस्य वर्तमानरूपे संकलनम् केन प्रकारेण सम्पन्नम्। अस्य एव विभाजनस्य उद्धरणादिदानार्थम् भारतीयेषु पाश्चात्येषु च विद्वत्सु अधिकम् प्रचलनम् अस्ति।

६—**ऋग्वेदस्य संकलनम् संघटनम् वा**—यथा च इदानीम् एव उक्तम् अस्ति, ऋग्वेदस्य दशसु मण्डलेषु विभाजनम् ऐतिहासिकम् अस्ति। अस्य षण्णाम् (२–७) मण्डलानाम् संकलनम् अस्मिन् रूपे कृतम् वर्तते यत् प्रत्येकम् मण्डले एकस्य एव गोत्रस्य परिवारस्य वा ऋषिभिः रचितानाम् (परम्परागतमान्यतानुसारेण दृष्टानाम्) सूक्तानाम् संग्रहः अस्ति। एषाम् षण्णाम् पारिवारिकमण्डलानाम् ऋषयः क्रमशः गृत्समदः, विश्वामित्रः, वामदेवः, अत्रिः, भरद्वाजः, वसिष्ठश्च, तथा च एतैः सह एषाम् सर्वेषाम् वंशजाः सन्ति। एषु षट्सु मण्डलेषु प्रत्येकम् एकस्य एव परिवारस्य सूक्तानाम् सत्त्वात् तथा एषाम् एतत्संकलितानाम् सूक्तानाम् च क्रमस्य व्यवस्थितत्वात् इदम् स्पष्टतया प्रतीयते यत् इमानि ऋग्वेदस्य प्राचीनतमस्य मूलभागस्य प्रतिनिधित्वम् कुर्वन्ति, अवशिष्टम् च मण्डलचतुष्कम् (१, ८–१०) अस्मिन् भागे पश्चात् संयोजितम् अस्ति, कामम् अस्य कतिपयानि सूक्तानि पूर्वम् एव रचितानि स्युः।

७—**ऋग्वेदस्य प्रतिपाद्यविषयः**—ऋग्वेदस्य प्रमुखः विषयः विभिन्नदेवानाम् स्तवनम् अस्ति। अयम् वेदः देवस्तुतीनाम् एकः विशालः संग्रहः अस्ति। आभिः स्तुतिभिः स्तूयमानाः प्रमुखाः देवाः अग्निः, इन्द्रः, वरुणः, विष्णुः, सविता, मरुत्, रुद्रः, मित्रश्च इत्यादिकाः सन्ति। एषाम् देवानाम् विषये प्रस्तुताः विभिन्नाः स्वतन्त्राः स्तुतयः 'सूक्तानि' उच्यन्ते। देवस्तुतीनाम् प्रसङ्गात् विभिन्नविषयाणाम् प्रतिपादनम् अपि देवविषयकसूक्तेषु जातम् अस्ति, येन तत्कालीनासु भौगोलिकेतिहासिक-सामाजिक-धार्मिकार्थिक-राजनैतिकादिषु स्थितिषु परिस्थितिषु च प्रकाशः पतति। देवविषयकसूक्तेभ्यः अतिरिक्तानि अन्यानि अनेकानि एतादृशानि सूक्तानि ऋग्वेदे सन्ति, येषु स्वतन्त्रविषयाणाम् प्रतिपादनम् अस्ति। यथा, कतिपयेषु दानस्तुतयः सन्ति, कतिपयेषु पारस्परिकाः संवादाः सन्ति, कतिपयेषु द्यूतनिन्दादिप्रसङ्गेन उपदेशः अन्येषाम् लौकिकानाम् विषयाणाम् प्रतिपादनम् वा अस्ति, कतिपयेषु च दार्शनिकविचाराणाम् अभिव्यक्तिः अस्ति।

ऋग्वेदे प्रमुखतः परम्परागतायाः धार्मिकविचारधारायाः भावनामयी सरिता प्रवहति, या पश्चात् स्वकीयम् इदम् रूपम् रक्षन्ती अपि,

विकसिता सती एकेन अन्येन रूपेण दार्शनिक-विचारधारायाः तस्याः ज्ञानमय्याः सरितायाः रूपे अपि प्रवहन्ती भवति यस्याः दर्शनम् पुरुषसूक्तनासदीयसूक्तादिषु एतादृशेषु सूक्तेषु भवति यानि पश्चात् औपनिषदविचारधारायाः मूलाधाररूपे स्थितानि भवन्ति ।

अस्तु ! इत्थम् ऋग्वेदः भारतस्य प्राचीनतमम् वाङ्मयम् सन् भारतीयधर्मस्य भारतीयदर्शनस्य च प्राचीनतमम् मूलम् स्वरूपम् प्रस्तुतम् करोति, यद्ज्ञानाय अस्य अध्ययनम् अनुशीलनम् च परमावश्यकम् अस्ति ।

## २१

# ऋग्वेदीयः धर्मः[1]

१—प्रास्ताविकम्—धर्मस्य प्रमुखम् तत्त्वम् स्वरूपम् वा क्रिया आचारः वा अस्ति । अस्य क्रियात्मकस्य आचारात्मकस्य वा धर्मस्य निर्देशिका एका आधारभूता विचारधारा भवति या क्रियायाः आचारस्य वा दिशम् निर्धारयति अर्थात् यस्याः अनुसारेण क्रिया आचारः वा सम्पाद्यते । इयम् विचारधारा एव धर्मस्य आन्तरिकम् सैद्धान्तिकम् वा रूपम् भवति, यत् च 'दर्शन' शब्दस्य व्यापके अर्थे 'धर्मस्य दर्शनम्' केवलम् 'दर्शनम्' अपि वा कथयितुम् शक्यते । क्रिया आचारः वा धर्मस्य तत् बाह्यम् व्यावहारिकम् वा रूपम् अस्ति येन तस्य आधारभूता आन्तरिकविचारधारा अभिव्यक्तिम् प्राप्नोति ।

२—ऋग्वेदीयधर्मस्य मूलम् स्वरूपम्—ऋग्वेदे प्रतिपादितस्य धर्मस्य क्रियात्मकम् बाह्यम् रूपम् मुख्यतः देवोद्देश्यकम् यजनम् अस्ति यत् च घृतेन दुग्धेन, सोमरसेन, अन्यैः विभिन्नैः औषधैः पदार्थैश्च सम्पाद्यमानम् आसीत् । अनेन यजनेन सह देवस्तवनम् अपि प्रवर्तमानम् आसीत् । अस्य धर्मस्य आधारभूता आन्तरिकी विचारधारा इयम् अस्ति यत् विभिन्नाः चेतनाः देवाः, ये च प्राकृतिकशक्तीनाम् रूपे सन्ति अथवा प्राकृतिकशक्तयः येषाम् प्रतीकभूताः सन्ति, अस्य जगतः संचालकाः नियामकाः वा सन्ति । एषाम् स्तवनेन यजनेन वा एते प्रसन्नाः भवन्ति, अभीष्टान् मनोरथान् प्रापयन्ति, संकटान् च निवारयन्ति, अतः एषाम् यजनम् स्तवनम् च कर्तव्यम् । इत्थम् ऋग्वेदस्य धर्मः मूलतः 'बहुदेववादम्' मन्यते, यदनुसारेण अनेकेषाम् देवानाम् वास्तविकी स्वतन्त्रा सत्ता अस्ति । ये जनाः इदम् कथयन्ति यत् ऋग्वेदः मूलतः एकदेववादम् प्रतिपादयति, ते तथ्यस्य अपलापम् कुर्वन्ति । ऋग्वेदे आद्यन्तम् बहुदेववादः अस्ति । तत्र एवम् कुत्रापि न कथितम् अस्ति यत् अन्येषाम् देवानाम् सत्ता नास्ति, अपि तु केवलम् एकस्य एव कस्यचित्

---

१—ऋग्वेदीयम् दर्शनम् वा । अत्र विषये 'वैदिकसंस्कृतिः' इतिशीर्षकः निबन्धः अपि द्रष्टव्यः ।

देवस्य सत्ता अस्ति। इयम् अन्य वार्ता अस्ति यत् ऋग्वेदे बहुदेववादः स्वविकासपरम्परायाम् पश्चात् एकाधिदेववादे विकसितः जातः, यदनुसारेण 'यो देवेष्वधिदेव एक आसीत्' इतिरूपे विभिन्नानाम् देवानाम् अपि एकः अधिदेवः अधिष्ठाता देवः वा अमन्यत, किन्तु देवानाम् बहुत्वस्य निषेधः न अक्रियत, यथा च स्वयम् उक्तेन 'देवेषु' इति पदेन एव प्रकटम् अस्ति।

**३—ऋग्वेदीयधर्मस्य विकासपरम्परा**—यथा च इदानीम् एव उक्तम् अस्ति, ऋग्वेदीयधर्मः मूलतः बहुदेववादम् मन्यते। बहुदेववादः पूर्वम् तु स्वतन्त्रबहुदेववादरूपे आसीत्, यदनुसारेण इदम् मन्यते स्म यत् विभिन्नाः स्वतन्त्राः देवाः समानरूपेण जगतः तस्य विभिन्नानाम् अंशानाम् वा संचालनम् कुर्वन्ति। ततः किंचिदनन्तरम्, यदा विभिन्नैः देवैः धृतानाम् तत्तद्विभिन्नभौतिकपदार्थानाम् तारतम्यपूर्णायाः शक्तिशालितायाः आधारे तेषाम् महत्त्वपरीक्षणस्य प्रवृत्तिः जागृता, तत्फलस्वरूपम् च यः देवः अधिकमहत्त्वशाली प्रतीतः अभवत्, स एव न्यूनमहत्त्वशालिरूपे प्रतीयमानेभ्यः देवेभ्यः अतिशयितः उत्कृष्टः वा घोषयितुम् आरब्धः, तदा एव अस्याः देवातिदेववादीयायाः प्रवृत्तेः आधारे स्वतन्त्रबहुदेववादस्य स्थाने देवातिदेववादीयः बहुदेववादः प्रावर्तत।

अस्मिन् देवातिदेववादीये बहुदेववादे एतादृशी निश्चयात्मकता नासीत् यत् कोऽपि एक एव देवः सर्वातिशायी अस्ति, अपि तु कदापि कोऽपि देवः, कदापि च कोऽपि अन्यः देवः सर्वातिशायी घोषितः आसीत्। किन्तु यदा 'यो देवेष्वधिदेव एक आसीत्' इतिरूपे निश्चयात्मकतया सह एकः विशिष्टः देवः सर्वदेवाधिदेवरूपे घोषितः, तदा एव देवातिदेववादीयबहुदेववादस्य स्थाने एकाधिदेववादीयबहुदेववादः एकाधिदेववादः वा समागतः। अयम् एकाधिदेववादः सर्वदेवैक्यवादरूपे अपि अमन्यत, यदनुसारेण सर्वे देवाः एकस्मात् एव देवात् उत्पन्नाः तस्य रूपाणि च अमन्यन्त।

अयम् सर्वदेवैक्यवादः ऋग्वेदस्य दार्शनिकविश्वरूपवादस्य एव एकम् अङ्गम् आसीत्, यदनुसारेण सम्पूर्णम् जगत्, यस्मिन् सर्वे देवाः अपि अन्तर्भवन्ति, एकस्य एव देवस्य एकस्याः एव शक्तेः वा रूपम् अमन्यत। अयम् एव विश्वरूपवादः 'पुरुष एवेदं सर्वम्' इतिरूपे प्रकटितम् वर्तते। अस्य एव च अङ्गभूतः सर्वदेवैक्यवादः 'एकं सद् विप्रा बहुधा वदन्ति' इतिरूपे अभिव्यक्तः वर्तते।

अत्र इदम् अपि ध्येयम् वर्तते यत् 'विप्रा बहुधा वदन्ति' इत्यनेन स्पष्टया प्रकटितम् भवति यत् अस्य मन्त्रवर्णस्य कालात् पूर्वम् विप्राः बहुदेववादानुसारेण बहुधा' मतवन्तः कथितवन्तश्च आसन्, अत एव तत्पश्चात् विकसितायाः विचारधारायाः अनुरूपम् अत्र दार्शनिकदृष्टचा कथितम् अस्ति 'एकं सद् विप्रा बहुधा वदन्ति' इति। एवम् अत्र अपि पूर्ववर्तिनः बहुदेववादस्य आभासः स्पष्टतया प्राप्यते। एतदतिरिक्तम्, 'विश्वे देवाः' इत्यनेन

प्रकटम् अस्ति यत् ऋग्वेद: बहून् देवान् मन्यते। यदि एक एव देव: अग्न्यादिनामभि: अभिहित: अभविष्यत् चेत् 'इन्द्राग्नी' इतिसदृशा: द्वन्द्वसमासयुक्ता: शब्दा: न प्रयुक्ता: अभविष्यन्। एषाम् उपपत्तिस्तु तदा एव भवितुम् शक्नोति यदा इन्द्राग्न्यादय: पृथक्-पृथक् देवा: मता: स्यु:। सहैव ऋग्वेदे (१।१३९।११) स्पष्टत: वर्णितम् अस्ति यत् त्रयस्त्रिंशत् देवा: सन्ति, येषु एकादश पृथिवीस्थानीया:, एकादश अन्तरिक्षस्थानीया:, एकादश च द्युस्थानीया: सन्ति। पुरुषसूक्ते च पुरुषस्य विभिन्नेभ्य: अङ्गेभ्य: विभिन्नानाम् देवानाम् उत्पत्ति: प्रतिपादिता अस्ति। इत्थम् अत्र विषये क: अपि सन्देह: न अवशिष्यते यत् ऋग्वेदस्य धर्म: विभिन्नदेवानाम् सत्ताम् मन्यते, फलतश्च स: बहुदेववादी धर्म: अस्ति, यश्च पश्चात् विकसित: सन् क्रमश: देवातिदेववादे, एकाधिदेववादे, सर्वदेवैक्यवादे परिणतीभूय अन्ते दार्शनिकविश्वरूपवादे परिणत: अभवत्। किंचिदनन्तरम्, दार्शनिकविश्वरूपवादेन सह दार्शनिकतत्त्ववाद: अपि प्रचलित: अभवत्, यस्य अभिव्यक्ति: ऋग्वेदीयनासदीयसूक्ते 'आनीदवातं स्वधया तदेकम्' इत्यादिरूपे विद्यते।

यथा च पूर्वम् उक्तम्, ऋग्वेदीयधर्मानुसारेण तस्य उपास्यदेवा: चेतना:, साकारा:, विशिष्टशक्तिसम्पन्ना:, प्राकृतिकघटनानियामकाश्च सन्ति। प्राकृतिका: मेघविद्युतादय: पदार्था तेषाम् बाह्यरूपाणि सन्ति। एभि: रूपै: ते स्वानि-स्वानि विभिन्नानि कार्याणि सम्पादयन्ति। ते दुष्टानाम् निग्रहम् भक्तानाम् च अनुग्रहम् कुर्वन्ति। स्तवनेन यजनेन च ते प्रसीदन्ति घृतसंयुक्तम् हवि: सोमरसश्च तेभ्य: रोचेते। आभ्याम् तृप्ता: सन्त: एते यजमानस्य कल्याणम् कुर्वन्ति, प्रसन्ना: सन्त: कदाचित् दर्शनम् अपि वितन्वते। अत: देवस्तवनम् देवयजनम् च कर्तव्यम्। ऋग्वेदीयधर्मस्य अयम् एव प्रमुख: सन्देश: अस्ति। अनन्तरम् यदा विकसितेन सता बहुदेववादेन दार्शनिकविश्वरूपवादस्य रूपम् गृहीतम्, तदा ऋग्वेदेन सन्देश: दत्त: यत् विभिन्ना: देवा: पृथक्-पृथक् सन्त: एकस्या: एव जगत्संचालिकाया: परमशक्ते: देवाधिदेवस्य वा रूपाणि सन्ति, ताम् परमशक्तिम् च प्रसादयितुम् अनया दृष्ट्या तस्या: यजनम् कर्तव्यम् यत् तया एव तस्या: यजनम् सम्पाद्यमानम् अस्ति—'यज्ञेन यज्ञमयजन्त देवा:'। इत्थम् बहुदेववादिन: धर्मस्य विश्वरूपवादिदर्शने विकास: सम्पद्यते, येन सह पश्चात् दार्शनिकतत्त्ववाद: अपि प्रचलित: भवति। फलत: तदनन्तरम् यद्यपि धार्मिकी क्रिया देवयजननरूपे प्रचलिता सती तिष्ठति, किन्तु स्वधारभूताया: विचारधाराया: उक्तप्रकारेण जातस्य विकासस्य अनुरूपम् परिवर्तितत्वाभावात् सा ऋग्वेदात् पश्चात् यान्त्रिके यज्ञानुष्ठाने परिणता भवति।

२२

# ऋग्वेदीया भाषा[1]

**१—प्रास्ताविकम्**—ऋग्वेदस्य भाषा वैदिकभाषायाः प्राचीनतमम् स्वरूपम् उपस्थितम् करोति। वैदिकभाषायाः लौकिक्या संस्कृतभाषया सह तुलना क्रियेत चेत् इदम् स्पष्टम् प्रतीयते यत् यत्र लौकिकसंस्कृतम् नियमनिगडितम् अस्ति, तत्र वैदिकभाषा नियमानाम् वन्धने तथा नास्ति। संस्कृतव्याकरणस्य प्रसिद्धेन आचार्येण पाणिनिमुनिना लौकिकसंस्कृतस्य इव वैदिकभाषायाः अपि अन्तर्निहितान् नियमान् अन्वेष्टुम् पर्याप्तः प्रयासः कृतः, किन्तु सः कांश्चित् अपवादरहितान् नियमान् अन्वेष्टुम् असमर्थः अतिष्ठत्, फलतश्च सः अनेकदा 'बहुलं छन्दसि' इतिरूपे घोषणाम् कर्त्तुम् बाध्यः अभवत्। वस्तुतः वैदिकभाषा एवम् उदारा अस्ति यत् तत्र कस्य अपि रूपस्य प्रवेशाय निषेधः नास्ति इव। अस्य एव परिणामः अस्ति यत् सा शब्दानाम् धातूनाम् च रूपाणाम् प्रत्ययानाम् च वैविध्यदृष्टया लौकिकसंस्कृतापेक्षया अत्यधिकरूपेण सम्पन्ना अस्ति।

**२—लौकिकसंस्कृतेन वैदिकभाषायाः तुलना**—लौकिकसंस्कृतेन सह तुलनायाम् वैदिकभाषायाः कतिपयाः प्रमुखाः विशेषताः निम्नप्रकारेण प्रस्तुताः कर्तुम् शक्यन्ते—

**(अ) स्वराघातः**—यत्र लौकिकसंस्कृते उदात्तादिस्वराणाम् आघातस्य किमपि स्थानम् नास्ति, तत्र वैदिकभाषायाम् स्वराघातः अस्ति यस्य च अर्थनिर्धारणेऽपि पर्याप्तम् महत्त्वम् अस्ति।

**(आ) शब्दाः धातवश्च**—१—वैदिकभाषायाम् अनेके एतादृशाः शब्दाः (अव्ययसमेताः) प्रयुक्ताः सन्ति, येषाम् लौकिकसंस्कृते कुत्रापि दर्शनम् एव नास्ति।

---

१—अथवा—वैदिकी भाषा।

२—वैदिकभाषायाम् अनेके एतादृशाः धातवः सन्ति, येषाम् लौकिकसंस्कृते प्रयोगः नास्ति ।

३—लौकिकसंस्कृतस्य अपि अनेकेषाम् शब्दानाम् वैदिकभाषायाम् प्रचलनम् नास्ति ।

४—बहवः एतादृशाः शब्दाः सन्ति ये वैदिकभाषायाम् लौकिकसंस्कृते च समानरूपेण उपलभ्यन्ते, किन्तु तेषाम् अर्थः उभयोः भाषयोः पृथक्-पृथक् अस्ति ।

५—एवमेव अनेकेषाम् धातूनाम् अर्थः वैदिकभाषायाम् अन्यः अस्ति, लौकिकसंस्कृते च अन्यः अस्ति, किन्तु अर्थभेदवताम् शब्दानाम् अपेक्षया अर्थभेदवताम् धातूनाम् संख्या न्यूनतरा अस्ति ।

(इ) **शब्दरूपाणि**—१—यत्र लौकिकसंस्कृते अकारान्तपुंल्लिङ्गशब्दानाम् प्रथमाद्वितीययोः विभक्त्योः द्विवचने 'देवौ' इत्यादिवत् औकारान्तम् रूपम् एव प्रचलितम् अस्ति, तत्र वैदिकभाषायाम् 'देवौ' इत्यादिना सह 'देवा' इत्यादिवत् आकारान्तम् रूपम् अपि प्रचलितम् अस्ति ।

२—यत्र लौकिकसंस्कृते अकारान्तपुंलिङ्गशब्दानाम् प्रथमाबहुवचने 'देवाः' इतिसदृशम् एव रूपम् प्रचलितम् अस्ति, तत्र वैदिकभाषायाम् 'देवाः' इत्यादिना सह 'देवासः' इतिसदृशम् अपि रूपम् प्रचलितम् अस्ति ।

३—यत्र लौकिकसंस्कृते अकारान्तपुंलिङ्गशब्दानाम् तृतीयाबहुवचने 'देवैः' इतिसदृशम् एव रूपम् प्रचलितम् अस्ति, तत्र वैदिकभाषायाम् 'देवैः' इत्यादिना सह 'देवेभिः' इतिसमानम् अपि रूपम् प्रचलितम् अस्ति ।

४—यत्र लौकिकसंस्कृते दीर्घान्तशब्दानाम् प्रथमाद्वितीयाद्विवचने 'नद्यौ' 'वध्वौ' इत्यादिसमानानि एव रूपाणि प्रचलितानि सन्ति, तत्र वैदिकभाषायाम् एतादृशैः रूपैः सह 'नदी' 'वधू' इत्यादिसमानानि अपि रूपाणि (अर्थात् मूलरूपाणि एव) प्रचलितानि सन्ति ।

५—यत्र लौकिकसंस्कृते दीर्घान्तशब्दानाम् प्रथमाबहुवचने 'नद्यः' 'वध्वः' इत्यादिसमानानि एव रूपाणि प्रचलितानि सन्ति, तत्र वैदिकभाषायाम् उक्तरूपैः सह 'नदीः' 'वधूः' इत्यादिसमानानि अपि रूपाणि प्रचलितानि सन्ति ।

६—यत्र लौकिकसंस्कृते नपुंसकलिङ्गशब्दानाम् प्रथमाद्वितीयाबहु-वचने 'वनानि' इत्यादिसमानानाम् एव रूपाणाम् प्रयोगः कृतः वर्तते, तत्र वैदिकभाषायाम् 'वनानि' इत्यादिभिः सह 'वना' इत्यादिसमानानि अपि रूपाणि सन्ति ।

७—एतदतिरिक्तम्, वैदिकभाषायाम् लौकिकसंस्कृतविपरीतम्, शब्द-रूपाणाम् विषये निम्नानि तथ्यानि यथावसरम् दृष्टिगोचराणि भवन्ति—

(अ) कस्याः अपि विभक्तेः कस्मिन् अपि वचने विभक्तिरहितस्य मूलशब्दस्य एव प्रयोगः ।

(आ) उक्तायाम् स्थितौ प्रथमैकवचनस्य एव प्रयोगः ।

(इ) कासुचित् विभक्तिषु शब्दान्तिमस्वरस्य दीर्घीकरणमात्रेण निष्प-न्नस्य रूपस्य प्रयोगः ।

(ई) कदाचित् शब्दरूपम् आकारान्तम् एव कृत्वा तस्य कतिपय-विभक्तिरूपाणाम् स्थाने प्रयोगः ।

(उ) 'युष्मद्'-'अस्मद्' शब्दयोः विभिन्नरूपाणाम् स्थाने 'युष्मे'-'अस्मे' इतिरूपयोः प्रयोगः ।

(ऊ) शब्दान्ते 'या' इति संयोज्य निष्पादितस्य रूपस्य कासांचित् विभक्तीनाम् रूपाणाम् स्थाने प्रयोगः ।

(ई) **उपसर्गाः**—यत्र लौकिकसंस्कृते उपसर्गाणाम् नियमतः क्रिया-रूपेभ्यः अव्यवहितरूपेण पूर्वम् एव प्रयोगः भवति, तत्र वैदिक-भाषायाम् तेषाम् क्रियारूपेभ्यः परम् अपि प्रयोगः भवति, अथ च पूर्वम्, परम् च, उभयोः स्थित्योः उपसर्गाणाम् क्रियारूपाणाम् च मध्ये व्यवधानम् अपि, स्थातुम् शक्नोति ।

(उ) **धातुपदानि**—वैदिकभाषायाम् परस्मैपदात्मनेपदादिसम्बन्धे कठोरः नियमः नास्ति ।

(ऊ) **लकाराः**—१—यत्र लौकिकसंस्कृते 'लेट्' लकारस्य प्रयोगः नास्ति, तत्र वैदिकभाषायाम् अस्य अपि प्रयोगः वर्तते ।

२—यत्र लौकिकसंस्कृते लुङ् लङ् लिट्लकाराणाम् भूतकाले एव प्रयोगः भवति, तत्र वैदिकभाषायाम् एषाम् लकाराणाम् कस्मिन् अपि काले प्रयोगः कृतः अस्ति । अन्येषाम् लकाराणाम् अपि एवमेव कस्मिन् अपि काले प्रयोगः यदा-कदा क्रियमाणः वर्तते एव ।

(ए) विकरणादयः—१—वैदिकभाषायाम् 'शप्' इत्यादीनाम् विकरणानाम् व्यत्ययेन प्रयोगः उपलभ्यते।

२—वैदिकभाषायाम् धातुरूपेषु 'अट्' 'आट्' (अ, आ) इत्येतयोः पूर्वागमयोः प्रयोगस्य तत्र अनिवार्यता नास्ति यत्र लौकिकसंस्कृते एतौ नियमेन भवतः।

(ऐ) प्रत्ययाः—१—वैदिकभाषायाम् लोट्लकारस्य मध्यमपुरुषबहुवचने 'तात्, तन, थन' इत्यादयः प्रत्ययाः दृष्टिगोचराः भवन्ति, यदा च लौकिकसंस्कृते एवम् नास्ति।

२—वैदिकभाषायाम् लोट्लकारस्य उत्तमपुरुषबहुवचने 'मसि' प्रत्ययोऽपि दृष्टिगोचरः भवति।

३—वैदिकभाषायाम् 'तुमुन्' प्रत्ययस्य अर्थे एतत्प्रत्ययातिरिक्तम् 'से, सेन्, असे, असेन् अध्यै, अध्यैन्, तवै, तवेङ्, तवेन्' इत्यादीनाम् अपि प्रत्ययानाम् दर्शनम् भवति।

४—वैदिकभाषायाम् 'क्त्वा' प्रत्ययात् अनन्तरम् 'य' इत्यस्य अपि यत्र-तत्र दर्शनम् भवति।

५—वैदिकभाषायाम् लौकिकसंस्कृतविपरीतम्, समासे उपसर्गपूर्वकत्वे वा अपि 'क्त्वा' इत्यस्य स्थाने 'ल्यप्' इत्यादेशः अनिवार्यः नास्ति।

६—वैदिकभाषायाम् अनेके विशिष्टाः प्रत्ययाः दृश्यन्ते, यथा मत्वर्थीयतद्धितप्रत्ययः 'ई' इति।

(ओ) सन्धयः—वैदिभाषायाम् सन्धीनाम् अपि स्वीयाः अनेके एतादृशा विशिष्टाः नियमाः सन्ति ये च लौकिकसंस्कृते न सन्ति, यथा, अनेकेषु स्थानेषु पदान्ताभ्याम् 'ए' 'ओ' इत्येताभ्याम् परस्य अपि 'अ' इत्यस्य पूर्वरूपाभावः; आकारात् परवर्तिनः नकारस्य स्वरे परस्मिन् सति आकारम् अनुनासिकम् विधाय लोपः (महान्+इन्द्र=महाँ इन्द्रः), ।

(औ) दीर्घीकरणम्—संहितापाठे अनेकेषु स्थानेषु ह्रस्वस्य दीर्घीकरणम् अपि वैदिकभाषायाः अन्यतमा विशेषता अस्ति।

उक्तरूपेण अत्र वैदिकभाषायाः कतिपयाः प्रमुखाः साधारण्यः विशेषताः संक्षिप्ततया प्रदर्शिताः। एतदतिरिक्ताः अपि अनेका साधारण्यः विशिष्टाश्च विशेषताः सन्ति यासाम् अत्र परिगणनम् असंभवम् अस्ति। आसाम् सर्वासाम् विशेषतानाम् विशिष्टरूपेण ज्ञानम् तु वैदिकव्याकरणसम्बद्धेभ्यः ग्रन्थेभ्यः एव संभवम् अस्ति।

# २३

## उपनिषदः

१—**महत्त्वम्**—भारतीयवाङ्मये उपनिषदाम् अतीव महत्त्वपूर्णम् स्थानम् अस्ति। इदम् सुविदितम् अस्ति यत् भारतीयवाङ्मये मन्त्रब्राह्मणात्मकस्य श्रुतिवाङ्मयस्य सर्वोच्चम् मूर्धन्यम् वा स्थानम् अस्ति। अस्य वाङ्मयस्य एकैकम् अक्षरम् प्राचीनकालात् एव वैदिके समाजे परमपावनम्, परमप्रामाणिकम् फलतश्च परमश्रद्धेयम् मन्यमानम् सत् वर्तते। एकस्याः सुदीर्घकालीनायाः रचनापरम्परायाः द्वारा क्रमशः अस्तित्वम् प्राप्तवत्त्वात् समस्तम् श्रुतिवाङ्मयम् वैदिकेभ्यः ऋषिभ्यः आरभ्य औपनिषदान् मनीषिणः यावत् वर्तमानायाः सुदीर्घकालीनायाः परम्परायाः चिन्तनस्य फलम् स्वस्मिन् संरक्षत् सत् अस्ति, अथ च अस्य श्रुतिवाङ्मयस्य आधारभूतायाः दार्शनिक विचारधारायाः चरमम् विकासम् केवलम् अस्य ते विशिष्टाः अंशाः, ये अस्य रचनापरम्परायाम् अन्तिमाः सन्तः, उपनिषदाम् रूपे अस्मिन् संकलिताः सन्ति, प्रस्तुवन्ति। फलतः उपनिषदः यत्र स्वोद्भवकालस्य दृष्टया श्रुतिवाङ्मयस्य अन्येभ्यः समस्तेभ्यः अंशेभ्यः कनिष्ठाः सन्ति, तत्र ताः अस्य वाङ्मयस्य आधारभूतायाः दार्शनिविचारधारायाः चरमस्य विकासस्य स्वासु संरक्षणात् सहैव च स्वपूर्ववर्तिनाम् समस्तानाम् अंशानाम् सभयस्य उपलब्धेः स्वद्वारा प्रदर्शनात् हेतोः अस्य वाङ्मयस्य अन्येभ्यः समस्तेभ्यः अंशेभ्यः ज्येष्ठाः सन्ति। इदमेव कारणम् यत् ताः वैदिकपरम्परायाम् वेदानाम् अन्तस्य अर्थात् सारभूतस्य सिद्धान्तस्य प्रतिपादकरूपे स्वीकृतत्वात् 'वेदान्त' नाम्ना अलंकृताः जाताः, अथ च तत्प्रतिपादितः दार्शनिकः सिद्धान्तः अपि वेदानाम् अंतिमस्य सारभूतस्य सिद्धान्तस्य रूपे स्वीकृत्वात् तेन एव 'वेदान्त' नाम्ना अलंकृतः वर्तते उपनिषदाम् तत्प्रतिपादितस्य च दर्शनस्य उक्तरूपे 'वेदान्त' नाम्ना अलङ्करणेन वैदिकपरम्परायाम् वर्तमानम् आसाम् महत्त्वम् स्वत एव स्पष्टतया प्रकाशितम् भवति।

उपनिषत्प्रतिपादितम् दर्शनम्—वेदान्तः—यत्र स्वेषाम् उच्चानाम् महनीयानाम् च सिद्धान्तानाम् आधारे विश्वस्य दार्शनिके क्षेत्रे स्वकीयम्

महत्त्वपूर्णम् स्थानम् वर्त्ते, तत्र भारतवर्षे तु तत् प्राचीनकालात् एव एकस्य परम्पराप्राप्तस्य राष्ट्रीयदर्शनस्य रूपे सम्मानम् प्राप्नुवत् सत् वर्तते । यद्यपि भारतवर्षस्य दार्शनिकक्षेत्रे अनेकानि आन्दोलनानि प्रचलितानि, अनेकानि च दर्शनानि उद्भूय स्वकीयेन युक्तिजालमयेन प्रकाशेन भारतीयाम् जनताम् चमत्कृत्य ताम् स्वानि प्रति आकृष्टाम् कर्तुम् प्रयत्नम् अकुर्वन्, किन्तु पुनरपि भारतीयजनतायाः एकस्य महत्तमस्य भागस्य—वैदिकसमाजस्य—स्वकीये परम्पराप्राप्ते वेदान्तदर्शने अविचला निष्ठा अतिष्ठत् । वेदान्तदर्शनम् प्रति वैदिकसमाजस्य अस्याः अपूर्वायाः निष्ठायाः आधारः यत्र तस्य सिद्धान्तानाम् उच्चता महनीयता च अस्ति, तत्र तत्प्रतिपादकस्य उपनिषद्वाङ्मयस्य परम्परागता महत्ता अपि अस्ति । किन्तु ये भारतीयाः विदेशीयाश्च उपनिषदाम् एतादृशीम् परम्परागताम् महत्ताम् नापि स्वीकुर्वन्ति, ते अपि आसाम् प्रतिपाद्यस्य महत्त्वात् हेतोः आसाम् परमम् महत्त्वम् स्वीकुर्वन्ति, अथ च इमाः आध्यात्मिकज्ञानस्य शान्तसरोवररूपे अनुभूय आसु निमज्जनम् कृत्वा परमाम् शान्तिम् अनुभवन्ति । अस्य तथ्यस्य उदाहरणरूपे दाराशिकोह-शोपेनहावर-गेटे, इत्यादिकानाम् अन्येषाम् च अनेकेषाम् विगतानाम् वर्तमानानाम् च महानुभावानाम् नामानि प्रस्तोतुम् शक्यन्ते । वस्तुतः उपनिषत्सु एतादृशम् उच्चस्तरीयम् आध्यात्मिकम् चिन्तनम् वर्तते, एतादृशी आनन्दमयी आत्मानुभूतिः वर्तते, विविधरहस्यानाम् च एतादृशम् भास्वरम् प्रकाशनम् वर्तते यत् चिन्तकानाम् जनानाम् मनः आनन्दम् अनुभूय स्वत एव तत्र रमते ।

२—उद्भवः अभिधानम् च—उपनिषदाम् कथम् उद्भवः जातः, कथम् च आभिः स्वकीयम् 'उपनिषद्' इत्यभिधानम् प्राप्तम्, इति तिरोहितम् नास्ति । यद्यपि परम्परागतायाः मान्यतायाः अनुसारेण श्रुतिवाङ्मयस्य अपौरुषेयरूपे स्वीकृतत्वात् अस्य अन्ये अंशाः इव उपनिषदः अपि तदन्तर्गतत्वात् अपौरुषेयाः मन्यन्ते, किन्तु, यथा च पूर्वम् दृष्टम्[३], इदम् तथ्यानुकूलम् मतम् नास्ति । उपनिषदः अपि अन्यानि वाङ्मयानि इव कालविशेषे पुरुषविशेषेभ्यः उद्भूताः सन्ति । मन्त्रब्राह्मणात्मकस्य श्रुतिवाङ्मयस्य आधारभूतायाः विचारधारायाः विभिन्नरूपानुरूपम् यथा अस्य विभिन्नानाम् अंशानाम् रचना जाता, तथैव अस्य अन्यतमांशभूतानाम् उपनिषदाम् रचना सम्पन्ना ।

श्रुतिवाङ्मयस्य आधारभूता विचारधारा स्वमूलरूपात् बहुदेववादात् स्वविकासयात्राम् आरभ्य विभिन्नानि च कालक्रमेण विकसितानि स्वरूपाणि अनुभूय यदा 'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास' (ऋ० वे० १०।१२९।२) इत्यादिरूपे अभिव्यक्तम् दार्शनिकतत्त्ववादीयम्

---

३—'वेदानाम् उद्भवः (आ) तथ्यानुकूलम् मतम्' इतिशीर्षके निबन्धे ।

स्वरूपम् प्राप्तवती, तदा वैदिकपरम्परायाम् स्वत एव पूर्वप्रचलितस्य देवस्तवनस्य देवयजनस्य च महत्त्वम् न्यूनम् जातम्, तत्स्थाने च तत्त्वचिन्तनस्य प्रवृत्तिः प्रचलिता। फलतः अत्र आगत्य वैदिकपरम्परायाम् प्रवृत्तिद्वैविध्यम् अभवत्। एकस्या पूर्वागतायाः प्रवृत्तेः अनुसारेण यद्यपि पूर्वपरम्पराप्रचलितम् यजनम् क्रियमाणम् आसीत्, किन्तु तत् दार्शनिकतत्त्ववादस्य उद्भवाद् हेतोः परम्परागतम् सरलम् भक्तिभावनामयम् स्वाभाविकम् रूपम् परित्यज्य केवलम् यान्त्रिकम् अभवत्। यजनस्य अस्य यान्त्रिकस्वरूपस्य व्यवस्थापनार्थम् तेषाम् विभिन्नानाम् ब्राह्मणप्रकरणानाम् रचना जाता यानि पश्चात् विभिन्नानाम् ब्राह्मणग्रन्थानाम् रूपे संकलितानि अभवन्।

अपरस्याः नवोदितायाः प्रवृत्तेः अनुसारेण तत्त्वचिन्तनम् क्रियमाणम् आसीत्, यस्य प्रारम्भिकाः उपलब्धयः तेषु विभिन्नेषु आरण्यकप्रकरणेषु अभिव्यक्ताः वर्तन्ते, यानि पश्चात् विभिन्नानाम् आरण्यकग्रन्थानाम् रूपे संकलितानि जातानि। तत्त्वचिन्तनस्य एताः उपलब्धयः पूर्वपरम्परागते यजने प्रवृत्तेन वैदिकेन समाजेन किंचित् स्वप्रतिकूलरूपे अनुभूताः, अतः तेन तासाम् अभिव्यञ्जकानि प्रकरणानि अरण्यपठनीयरूपे घोषितानि, फलतः 'आरण्यक' नाम्ना च अभिहितानि। वैदिकपरम्परायाः तत्त्वचिन्तनस्य अन्तिमाः उपलब्धयः तेषु विभिन्नेषु उपषित्प्रकरणेषु अभिव्यक्ताः वर्तन्ते, यानि पश्चात् विभिन्नानाम् उपनिषदाम् रूपे संकलितानि अभवन्। यतः एतासाम् उपलब्धीनाम् काले तत्त्वचिन्तनस्य विजयपताका पूर्णतः प्रसृता अभवत्, अतः तत्कालीनेन विकसितेन वैदिकेन समाजेन अपि एताः स्वप्रतिकूलाः न मताः, अपि तु एताभिः सह अस्मिन् रूपे स्वसामञ्जस्यम् स्थापितम् यत् प्रवृत्तिमार्गीयाः कामम् केवलम् पूर्वपरम्परागतम् कर्मकलापम् सम्पादयेयुः, किन्तु निवृत्तिमार्गीयेभ्यः मुमुक्षुभ्यः एतासाम् अवगमनम् एतदनुकूलम् च साधनानुष्ठानम् आवश्यकम् अस्ति। फलतः तत्त्वज्ञानाय तत्त्वज्ञानिनाम् गुरूणाम् 'उपनिषद्' अर्थात् तेषाम् शरणवरणम् कृत्वा तत्समीपस्थितिः क्रियमाणा अभवत्। एवम् एतादृशी समीपस्थितिः एव 'उपनिषद्' शब्दस्य मौलिकः अर्थः अस्ति। पश्चात् इयम् 'उपनिषद्' यस्मै प्रयोजनाय—तत्त्वज्ञानाय रहस्यज्ञानाय वा—क्रियमाणा आसीत्, तत् अपि 'उपनिषद्' शब्दवाच्यम् जातम्। पश्चात् इदम् तत्त्वज्ञानम् आध्यात्मिकरहस्यम् वा यत्र वर्णितम् अभूत्, तद् वाङ्मयम् अपि 'उपनिषद्' शब्दवाच्यम् अभवत् यथा च तत् इदानीम् वर्तते।

अस्तु! एवम् वैदिकपरम्परायाम् स्वतन्त्ररूपेण उद्भूय अपि आरण्यकानि उपनिषदश्च पश्चात् उक्तात् सामञ्जस्यात् हेतोः कर्मकाण्डप्रतिपादके मन्त्रब्राह्मणात्मके वाङ्मये एव संकलिताः अभूवन्।

**३—उपनिषत्साहित्यम्**—वर्तमानम् उपनिषत्साहित्यम् विशालम् वर्तते। अनेकाः उपनिषदः उपलभ्यन्ते श्रूयन्ते च। तासाम् संख्या निश्चिता

नास्ति । किन्तु तत्र 'ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः । ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा' इतिमुक्तिकोनिषद्वाक्यपरिगणिताः दश उपनिषदः प्रमुखाः मन्यन्ते, सहैव कौषीतक्युपनिषद्, तैत्तिरीयनारायणोपनिषद्, मैत्रायण्युपनिषद्, श्वेताश्वतरोपनिषद् च अपि मुख्याः मन्यन्ते । याः उपनिषदः मन्त्रब्राह्मणात्मके वाङ्मये संकलिताः उपलभ्यन्ते, याश्च तत्र असंकलिताः अपि सत्यः ब्रह्मसूत्रेषु मीमांसितत्वात् तत्र कदाचित् संकलितरूपेण संभाव्यन्ते, ताः एव प्रामाणिक्यः सन्ति, अन्याश्च तथाकथिताः उपनिषदः 'उपनिषद्' नाम्ना प्रसिद्धिम् प्रापिताः केवलम् निबन्धविशेषाः एव सन्ति । उक्तासु उपनिषत्सु केवलम् एका एव उपनिषद्—ईशावास्योपनिषद्—मन्त्रात्मके वाङ्मये संकलिता अस्ति । माण्डूक्यम् श्वेताश्वतरम् च विहाय अन्याः उपनिषदः ब्राह्मणात्मके वाङ्मये संकलिताः सन्ति अथवा ब्रह्मसूत्रमीमांसितत्वात् तथा संभाव्यन्ते । माण्डूक्योपनिषत् श्वेताश्वरोपनिषद् च यद्यपि मन्त्रब्राह्मणात्मके वाङ्मये संकलितरूपे न उपलभ्येते, नापि च अनयोः ब्रह्मसूत्रमीमांसितत्वम् सुनिश्चितम् अस्ति, तथापि एते मुख्यासु उपनिषत्सु परिगण्येते ।

४—**विषयः**—उपनिषदाम् मुख्यम् प्रतिपाद्यम् जगन्मूलतत्त्वम् अस्ति, यत् च तत्र सद्ब्रह्मात्मादिभिः अनेकैः शब्दैः अभिहितम् अस्ति । अस्य एव स्वरूपम् तत्र विविधप्रकारैः अवबोधितम् अस्ति । इदम् मूलतत्त्वम् परमात्मरूपे जगदन्तरात्मरूपे वा तत्र अनुभूतम् वर्तते । इदमेव सर्वेषाम् जीवात्मनाम् परमम् प्राप्यम् तत्र प्रतिपादितम् । इदम् प्राप्य अर्थात् स्वान्तरात्मरूपे अनुभूय एव जीवात्मनाम् स्वस्वरूपावाप्तिरूपा मुक्तिः भवति । अस्याम् दशायाम् जीवाः सर्वबन्धविनिर्मुक्ताः भवन्ति । अस्य मुख्यस्य प्रतिपादनस्य अङ्गरूपे सहकारिरूपे एव वा तत्र जीवस्वरूपम्, तस्य च सांसारिकी दशा, ब्रह्मजीवयोः सम्बन्धः, ब्रह्मप्राप्तिप्रकारः, ब्रह्मप्राप्तिसाधनानि, ब्रह्मप्राप्तिप्रतिबन्धकानि, जगत्सृष्टिश्च इत्यादिकानाम् विषयाणाम् प्रतिपादनम् तत्र वर्तते । सहैव तत्र गौणरूपे ब्राह्मणारण्यकवातावरणप्रभावितानाम् अपि केषाञ्चित् विषयाणाम् वर्णनम् अस्ति ।

५—**प्रयोजनम्**—उपनिषदाम् अध्ययनस्य इदमेव प्रयोजनम् अस्ति यत् तत्र प्रतिपादितानाम् उक्तानाम् विषयाणाम् परिज्ञानम् स्यात्, येन तदनुसारेण ब्रह्मप्राप्तिसाधनानि अनुष्ठाय स्वान्तरात्मनः ब्रह्मणः निरन्तरसाक्षात्काररूपा प्राप्तिः स्यात्, इयम् ब्रह्मप्राप्तिः एव मुक्तिः अस्ति, इयमेव च जीवस्य परमम् लक्ष्यम् अस्ति ।

अस्तु ! इत्थम् उपनिषदः परमलक्ष्यप्राप्तिसाधनरूपे स्वकीयम् परमम् महत्त्वम् दधते, फलतश्च ताः निरन्तरम् अनुशीलनीयाः सन्ति ।

२४

# औपनिषदम् दर्शनम्[1]

१—**महत्त्वम्**—औपनिषदम् दर्शनम् अर्थात् उपनिषत्प्रतिपादितम् दर्शनम् यत् च मुख्यत: 'वेदान्तदर्शनम्' इति नाम्ना प्रसिद्धम् अस्ति, भारतस्य प्रतिनिधिभूतम् राष्ट्रीयम् दर्शनम् अस्ति। यथा च विगते निबन्धे उक्तम्, इदम् दर्शनम् यत्र स्वीयानाम् उच्चानाम् महनीयानाम् च सिद्धान्तानाम् आधारे विश्वस्य दार्शनिकक्षेत्रे स्वकीयम् महत्त्वपूर्णम् स्थानम् धत्ते, तत्र भारतवर्षे तु इदम् प्राचीनकालात् एव एकस्य परम्पराप्राप्तस्य राष्ट्रीय-दर्शनस्य रूपे सम्मानम् प्राप्नुवत् सत् वर्तते। यद्यपि भारतवर्षस्य दार्शनिक-क्षेत्रे अनेकानि आन्दोलनानि प्रचलितानि, अनेकानि च दर्शनानि उद्भूय स्वकीयेन युक्तिजालमयेन प्रकाशेन भारतीयाम् जनताम् चमत्कृत्य ताम् स्वानि प्रति आकृष्टाम् कर्तुम् प्रयत्नम् अकुर्वन्, किन्तु पुनरपि भारतीयजनताया: एकस्य महत्तमस्य भागस्य—वैदिकसमाजस्य—स्वकीये परम्पराप्राप्ते वेदान्त-दर्शने अविचला निष्ठा अतिष्ठत्। वेदान्तदर्शनम् प्रति वैदिकसमाजस्य अस्या: अपूर्वाया: निष्ठाया: आधार: यत्र तस्य सिद्धान्तानाम् उच्चता मह-नीयता च अस्ति, तत्र तत्प्रतिपादकस्य उपनिषद्वाङ्मयस्य परम्परागता महत्ता अपि अस्ति। वेदान्तदर्शनम् एकस्मात् एतादृशात् उद्गमात्—श्रुतिवाङ्मयात् यस्य, च अन्तर्गता: उपनिषद: सन्ति—प्रसूतम् अस्ति, यस्य एकैकम् अक्षरम् प्राचीनकालात् एव वैदिकसमाजे परमपावनम्, परमप्रामा-णिकम्, फलतश्च परमश्रद्धेयम् मन्यमानम् सत् वर्तते।

२—**औपनिषददर्शनस्य मुख्यम् दानम्—(अ) पूर्ववर्तिन: सिद्धान्ता:**—औपनिषदम् दर्शनम् एतादृशम् पूर्णत: स्वतन्त्रम् निरपेक्षम् वा दर्शनम् नास्ति यत् तस्य सर्वे सिद्धान्ता: केवलम् उपनिषदाम् एव दानरूपा: मौलिका: सिद्धान्ता: स्यु:, अपि तु यत: तत् समस्तस्य मन्त्रब्राह्मणात्मकस्य श्रुतिवाङ्-मयस्य आधारभूताया: मूलविचारधाराया: एव विकसितम् स्वरूपम् अस्ति,

---

१—अथवा—वेदान्तदर्शनम्।

अतः तस्य अनेके सिद्धान्तास्तु पूर्वपरम्पराप्राप्ताः एव एतादृशाः सन्ति ये उपनिषद्भ्यः पूर्वम् एव वैदिकपरम्परायाम् स्थापिताः जाताः, उपनिषद्भिश्च ते स्वभावतः स्वीकृताः। उदाहरणार्थम्, उपनिषदाम् 'सर्वं खल्विदं ब्रह्म' (छा० उ० ३।१४।१) इत्यादिरूपे अभिव्यक्तः यः एतादृशः सिद्धान्तः वर्तते यत् सर्वम् जगन्मूलतत्त्वम् एव अस्ति सः पूर्वम् एव 'पुरुष एवेदं सर्वम्' (ऋ० वे० १०।९०।२) इत्यादिरूपे वैदिकपरम्परायाम् स्थापितः आसीत्। उपनिषदाम् 'तदात्मानं स्वयमकुरुत' (तै० उ० ब्र० ७) इत्यादिरूपे अभिव्यक्तश्च यः अभिन्ननिमित्तोपादानकारणवादीयः एतादृशः सिद्धान्तः वर्तते यत् जगन्मूलतत्त्वम् एव जगतः निमित्तकारणम् उपादानकारणम् च वर्तते सः अपि पूर्वम् एव 'य इमा विश्वा भुवनानि जुह्वद् ऋषिर्होता न्यसीदत् पिता नः', 'द्यावाभूमी जनयम् देव एकः', 'हविषि स्वधावः स्वयं यजस्व तन्वं वृधानः' (ऋ० वे० १०।८१।१-५) इत्यादिरूपे वैदिकपरम्परायाम् स्थापितः आसीत्। अत्र स्पष्टतः कथितम् अस्ति यत् जगत्कर्त्ता स्वकीयम् एव तनुम् रूपम् वा वर्धयन् जगद्रूपे परिणतः भवति।

(आ) **मूलतत्त्वस्वरूपविषये दानम्**—एतादृश्याम् स्थितौ अयम् प्रश्नः स्वाभाविकरूपेण उद्भवति यत् औपनिषददर्शनस्य किम् स्वकीयम् मौलिकम् दानम् अस्ति अर्थात् तेन पूर्वपरम्परागतायाम् श्रौत्याम् दार्शनिकविचारधारायाम् किम् अभिनवरूपेण संयोजितम्? अस्य प्रश्नस्य समाधानाय प्रयत्ने कृते सति इदम् स्पष्टतः ज्ञायते यत् औपनिषददर्शनस्य स्वकीयम् विशिष्टम् दानम् इदम् अस्ति यत् अनेन वेदेषु अन्तिमरूपेण 'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास' (ऋ० वे० १०।१२९।३) इत्यादिरूपे प्रतिपादितस्य जगन्मूलतत्त्वस्य अस्पष्टम् स्वरूपम् 'सत्यं ज्ञानमनतं ब्रह्म' (तै० उ० ब्र० १), 'विज्ञानमानन्दं ब्रह्म' (बृ० उ० ३।९।२८), 'तत्सत्यं स आत्मा' (छा० उ० ६।८।७) इत्यादिरूपे स्पष्टतः ज्ञापितम्। अनेन अस्मिन् रूपे यत् जगन्मूलतत्त्वम् सत्यम् अनन्तम् च कथितम्, तस्य आधारस्तु वेदेषु एव उपलब्धम् भवति, किन्तु ततोऽपि परम् अनेन उक्तरूपे यत् इदम् स्पष्टम् कृतम् यत् जगन्मूलतत्त्वम् ज्ञानानन्दस्वरूपम् एकम् आत्मतत्त्वम् अस्ति, एतदेव तस्य स्वीयम् एकम् विशिष्टम् दानम् अस्ति।

वेदेषु जगन्मूलतत्त्वस्य स्वरूपम् स्पष्टम् भवितुम् न अपारयत्। तत् एकम् 'तत्' (तत्त्वम्) मन्यमानम् अपि एतादृश्याः जीविताया: सत्तायाः रूपे अमन्यत यत् 'आनीदवातम्' इतिरूपे 'वातम्' अर्थात् प्राणवायुम् विना एव 'आनीत्' अर्थात् अननम् श्वासप्रश्वासक्रियाम् वा कुर्वत् स्वया स्वरूपशक्त्या एव स्वकीयम् अस्तित्वम् संरक्षत् आसीत्; किन्तु औपनिषदे दर्शने इदम् स्पष्टम् अभवत् यत् तस्य स्वकीयम् अस्तित्वम् संरक्षितुम् प्राणिवत् अननस्य आवश्यकता नास्ति, यत् च तस्य विषये 'आनीदवातम्' इत्यपि कथ्येत, तत् तु

एकम् ज्ञानानन्दस्वरूपम् सत्यम् अनन्तम् च आत्मतत्त्वम् अस्ति, फलतश्च तस्य स्वकीयाय अस्तित्वाय अननापेक्षा नास्ति । जगन्मूलसत्तायाः ज्ञानानन्द-स्वरूपस्य आत्मतत्त्वस्य रूपे अनुभूतिः श्रुतिवाङ्मयस्य आधारभूतायाः दार्श-निकविचारधारायाः एका महत्तमा उपलब्धिः अस्ति या च औपनिषदानाम् मनीषिणाम् तत्त्वचिन्तकानाम् दीर्घकालीनाया साधनायाः स्वरूपम् प्राप्ता अभवत् ।

(इ) **मूलतत्त्वेन सह आध्यात्मिकसम्बधविषये दानम्**—एतदतिर-क्तम्, यद्यपि पूर्वम् 'सम्पूर्णम् जगत् मूलसत्तायाः एव रूपम् अस्ति' इति मन्यमानत्वात् वैदिकाः ऋषयः मूलसत्तया 'सह' अहं रुद्रेभिर्वसुभिश्चरामि' (ऋ० वे० १०।१२५।१) इत्यादिरूपे किञ्चित् तादात्म्यम् अनुभवितुम् आरब्ध-वन्तः, किन्तु पुनरपि तदा मूलसत्तया सह स्वस्य आध्यात्मिकस्य तादात्म्यस्य अनुभूतिः न प्रतीयते । अस्य च कारणम् इदमेव आसीत् यत् एकम् तु, स्वयम् मूलसत्तायाः एव आत्मतत्त्वस्य रूपे अनुभूतिः न भवितुम् अपारयत्, अपरम् च, स्वस्वरूपस्य अपि आत्मतत्त्वस्य रूपे अनुभूतिः न भवितुम् अशक्नोत् । किन्तु यदा पश्चात् जगन्मूलसत्तायाः स्वरूपस्य आत्मतत्त्वरूपे अनुभूत्या सह स्वस्वरूपस्य अपि आत्मतत्त्वरूपे अनुभूतिः अभवत्, या अपि च एका अतीव महती उपलब्धिः आसीत्, तदा स्वस्य आत्मतत्त्वस्य जगन्मूलस्य आत्मतत्त्वस्य च आध्यात्मिकस्य सम्बन्धस्य स्वभावतः अनुसन्धानम् जातम्, तस्य च फलम् 'अहं ब्रह्मास्मि' (बृ० उ० १।४।१०),, 'तत्त्वमसि' (छा० उ० ६।८।७), 'एष म आत्मा' (छा० उ० ३।१४।४), अयमात्मा ब्रह्म' (मां० उ० २) इत्यादि-प्रकारेण जगन्मूलेन आत्मतत्त्वेन सह आध्यात्मिकस्य तादात्म्यस्य अनुभवरूपे उपलब्धम् अभवत् । औपनिषददर्शनस्य इयम् आध्यात्मिकी उपलब्धिः विश्वस्य दार्शनिके क्षेत्रे महत्तमा उपलब्धिः अस्ति ।

(ई) **अन्यत् स्फुटम् दानम्**—स्वकीयेभ्यः उक्तेभ्यः विशिष्टेभ्यः दानेभ्यः अतिरिक्तम्, औपनिषदेन दर्शनेन वेदेषु 'कुत आजाता: कुत इयं विसृष्टिः' (ऋ० वे० १०।१२९।६) इत्यादिरूपे व्यक्तायाः जिज्ञासायाः तु 'तस्माद्वा एतस्मादात्मनः आकाशः संभूतः ।' (तै० उ० ब्र० १), 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व तद्ब्रह्मेति ।' (तै० उ० ऋ० १) इत्यादिरूपे असंदिग्धतया समाधानम् कृतम् एव, सहैव तेन स्वद्वारा उक्तप्रकारेण ज्ञापितस्य मूल-तत्त्वस्य प्राणिजीवनतत्त्वस्य च स्वरूपस्य अनुरूपम् जीवनस्य अन्तिमम् लक्ष्यम् निर्धारितम्, तदनुरूपम् च तस्य प्राप्तिसाधनानि अपि निर्धारितानि ।

उक्तैः सर्वैः मौलिकदानरूपैः हेतुभिः औपनिषदम् दर्शनम् श्रुतिवाङ्-मयस्य आधारभूतायाः दार्शनिकविचारधाराया, चरमस्य विकासस्य स्वरूपम् अस्ति, फलतश्च इदमेव दर्शनम् 'वेदान्तः' अर्थात् वैदिकविचारधारायाः

अन्तिमः दार्शनिकः सिद्धान्तः अस्ति, अस्मिन् रूपे च तत् प्रसिद्धम् अपि अभवत् अस्ति च ।

३—**औपनिषददर्शनस्य प्रमुखाः सिद्धान्ताः**—औपनिषददर्शनस्य पूर्वपरम्पराप्राप्ताः स्वोद्भाविताश्च ये सिद्धान्ताः वर्तन्ते ते संक्षेपतः निम्नप्रकारेण प्रस्तोतुम् शक्यन्ते—

(अ) **जगत्सत्यत्वम्**—औपनिषददर्शनस्य या पूर्वपरम्परा विद्यते तस्याम् सर्वत्र जगतः सत्यत्वम् स्वीकृतम् वर्तते । अनेन दर्शनेन अपि तदेव स्वीकृतम्, तत्र किंचिदपि संशोधनम् न कृतम् । यथा उपनिषत्पूर्ववर्तिनि मन्त्रब्राह्मणात्मके श्रुतिवाङ्मये कुत्र अपि जगतः मिथ्यात्वम् न प्रतिपादितम्, तथा उपनिषत्सु ऽपि कुत्र अपि जगतः मिथ्यात्वम् प्रतिपादितम् न वर्तते । तत्र तु 'सदेव सोम्येदमग्र आसीत्' (छा० उ० ६।२।१) इत्यादिरूपे इदमेव घोषितम् वर्तते यत् यथा 'इदम्' दृश्यमानम् जगत् इदानीम् 'सत्' अस्ति, तथैव इदम् 'अग्रे' अर्थात् पूर्वम् अपि 'सदेव' आसीत् । इत्थम् इदम् स्पष्टम् अस्ति यत् आधुनिकवेदान्तिनाम् 'ब्रह्म सत्यं जगन्मिथ्या' इत्यादिरूपे प्रतिपातितः जगन्मिथ्यात्वसिद्धान्तः उपनिषदनुकूलः नास्ति

(आ) **जगतः अभिन्ननिमित्तोपादानकारणम् ब्रह्म**—यथा च अत्र एव पूर्वम् उक्तम्, औपनिषददर्शनम् पूर्वपरम्परानुसारेण एव मूलतत्त्वम् जगतः अभिन्ननिमित्तोपादानकारणम् मन्यते, अर्थात् उपनिषदाम् अनुसारेण तदेव मूलतत्त्वम् जगतः निमित्तम् उपादानम् च अस्ति—'तदात्मानं स्वयमकुरुत ।' (तै० उ० ब्र० ७)। इदम् मूलतत्त्वम् अत्र सद्ब्रह्मादिभिः अनेकैः शब्दैः अभिहितम् वर्तते, किन्तु अस्य मुख्यम् अभिधानम् 'ब्रह्म' अस्ति ।

(इ) **ब्रह्मणः स्वरूपम्**—इदम् मूलतत्त्वम् ब्रह्म, यथा च अत्र एव पूर्वम् उक्तम्, अन्तिमम् सत् अनन्तम् च अस्ति । इदम् ज्ञानस्वरूपम् नित्यम् आत्मतत्त्वम् अस्ति । इदम् सर्वेषाम् परमः आत्मा अस्ति, अतः इदम् परमात्मतत्त्वम् अस्ति । सर्वम् जडजीवात्मकम् जगत् एतदात्मकम् एव अस्ति—'सत्यं ज्ञानमनन्तं ब्रह्म ।' (तै० उ० ब्र० १), 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' (छा० उ० ६।८।७), 'नित्यो नित्यानाम्' (क० उ० २।५।१३) । इत्थम् सर्वस्य ब्रह्मात्मकत्वात् 'सर्वं खल्विदं ब्रह्म' (छा० उ० ३।१४।१), 'सर्वं ह्येतद्ब्रह्म' (मां० उ० २) इत्यादिप्रकारेण सर्वम् ब्रह्म उच्यते; अस्य इदम् तात्पर्यम् नास्ति यत् सर्वम् स्वरूपतः ब्रह्म एव अस्ति, यतो हि सर्वस्मिन् ब्रह्मस्वरूपलक्षणम् न अनुभूयते दृश्यते वा । इदम् स्वाभाविकरूपेण सर्वज्ञानाश्रयम् अपि अस्ति—'यः सर्वज्ञः सर्ववित्' (मु० उ० १।९), 'चेतनश्चेतनानाम्' (क० उ० २।५।१३) ।

(ई) **जीवस्वरूपम्**—जीवः नित्यः, अणुः, ज्ञानस्वरूपः, स्वाभाविकरूपेण ज्ञानवान्, आत्मा च अस्ति, उक्तप्रकारेण च सर्वस्य ब्रह्मात्मकत्वात्

जीवस्य च सर्वान्तर्गतत्वात् जीवः ब्रह्मात्मकः अस्ति—'नित्यो नित्यानां चेतनश्चेतनानाम्' (क० उ० २।५।१३), 'एषोऽणुरात्मा चेतसा वेदितव्यः' (मु० उ० ३।१।९), 'एष म आत्मा' (छा० उ० ३।१४।४), 'एष त आत्मान्तर्याम्यमृतः' (बृ० उ० ३।७।२३)। इत्थम् जीवस्य ब्रह्मात्मकत्वात् सः 'अहं ब्रह्मास्मि' (बृ० उ० १।४।१०), 'तत्त्वमसि' (छा० उ० ६।८।७), 'अयमात्मा ब्रह्म' (मां० उ० २) इत्यादिरूपे तथैव ब्रह्म उच्यते, यथा सर्वस्व अपि ब्रह्मात्मकत्वात् सर्वम् अपि 'सर्वं खल्विदं ब्रह्म' (छा० उ० ३।१४।१) इत्यादिरूपे ब्रह्म उच्यते। अस्य इदम् तात्पर्यम् नास्ति यत् जीवः स्वरूपतः ब्रह्म एव अस्ति। फलतः आधुनिकवेदान्तिताम् 'जीवो ब्रह्मैव नापरः' इत्यादिरूपे प्रतिपादितः सिद्धान्तः उपनिषदनुकूलः न प्रतीयते।

**(उ) जीवस्य परमम् लक्ष्यम्**—जीवस्य परमम् लक्ष्यम् अज्ञानमूलकात् जननमरणात्मकात् 'संसारात्, यस्मिन् सः अनादिकालात् पतितः वर्तते, मुक्तिः अस्ति—'अविद्याग्रन्थिं विकिरति' (मु० उ० २।१।१०), 'यस्माद् भूयो न जायते।....मृत्युमुखात् प्रमुच्यते। (क० उ० १।३।८, १५), 'नामरूपाद् विमुक्तः....तरति गुहाग्रन्थिभ्यः विमुक्तः' (मु० उ० ३।२।८,९), 'न च पुनरावर्तते' (छा० उ० ८।१५।१)। अस्याम् दशायाम् तस्य स्वस्वरूपावाप्तिः ब्रह्मावाप्तिश्च भवति—'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा० उ० ८।१२।३), 'परात्परं पुरुषमुपैति दिव्यम्' (मु० उ० ३।२।८)। इयम् स्वस्वरूपावाप्तिपूर्वकब्रह्मावाप्तिः एव औपनिषदम् अमृतत्वम् अस्ति, यच्च 'अपाम सोमममृता अभूम' (ऋ० वे० ८।४८।३) 'इत्यादिरूपे वेदेषु काङ्क्षतात् चिरकालावधि प्राणधारणरूपात् साधारणात् अमृतत्वात् अतीव उत्कृष्टतरम् वर्तते—'गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति।' (मु० उ० ३।२।९)। यद्यपि जीवस्य स्वस्वरूपम् स्वयम् स्वस्वरूपेण एव, ब्रह्म च स्वात्मरूपेण परमात्मरूपेण वा स्वभावतः पूर्वत एव प्राप्तम् वर्तते, किन्तु तस्य तादृशः अनुभवः नास्ति, अतः निरन्तरम् तादृशः साक्षादनुभवः एव तयोः—स्वस्वरूपब्रह्मणोः—प्राप्तिः अभिधीयते।

**(ऊ) परमलक्ष्यसाधनम्**—उक्तस्य परमलक्ष्यस्य एकमात्रम् साधनम् स्वस्वरूपज्ञानपूर्वकम् ब्रह्मज्ञानम् अस्ति—'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति।' (क० उ० १।२।१२), 'निचाय्य तन्मृत्युमुखात्प्रमुच्यते' (क० उ० १।३।१५), 'तत्परमं ब्रह्म वेद ब्रह्मैव भवति...गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति।' (मु० उ० ३।२।९), ब्रह्मविदाप्नोति परम्' (तै० उ० ब्र० १)। इदम् ब्रह्मज्ञानम् च 'अहं ब्रह्मास्मि', 'तत्त्वमसि' इत्यादिरूपे स्वात्मना स्वान्तर्यामिणा वा परब्रह्मणा सह स्वस्य एतादृशम् साक्षात् आध्यात्मिकतादात्म्यानुसन्धानम् अस्ति यस्मिन् स्वस्वरूपम् निर्मलम् सत् स्पष्टतः ब्रह्मात्मकम् अनुभूयते। एतादृशस्य ब्रह्मज्ञानस्य साधनानि श्रवणमनननिदिध्या-

सनादीनि सन्ति, कर्माणि च तत्र सहकारिताम् लभन्ते । औपनिषदम् दर्शनम् कर्तव्यानाम् कर्मणाम् परित्यागम् न प्रतिपादयति, अपि तु 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ई० उ० २) इत्यादिरूपे तेषाम् अवश्यकर्तव्यताम् एव बोधयति ।

एतैः प्रमुखैः अन्यैश्च अनेकैः सिद्धान्तैः युक्तम् औपनिषदम् दर्शनम् विश्वस्य दार्शनिकक्षेत्रे उत्कृष्टतया विराजते । अनेन दर्शनेन जगन्मूलतत्त्वस्य स्वरूपस्य सम्बन्धे 'सत्यं ज्ञानमनन्तं ब्रह्म' इतिरूपे यः अन्तिमः सिद्धान्तः प्रतिष्ठापितः तस्य अंशद्वयम—सत्यम् अनन्तम् च—आधुनिकम् विज्ञानम् अपि स्वीकृतवत् अस्ति, पुनः इदम् कथम् मन्तुम् शक्यते यत् तस्य तृतीयः अंशः–ज्ञानम्–अपि एकम् वैज्ञानिकम् तथ्यम् नास्ति ? इयती वार्ता अवश्यम् अस्ति यत् इमम् अंशम् अनुभवितुम् चिन्तकैः भौतिकविज्ञानसाधनानि एकतः कृत्वा, औपनिषदैः तत्त्वचिन्तकैः इव आध्यात्मिकविज्ञानसाधनानि स्वीकरणीयानि एव, यतः उपनिषदाम् अनुसारेण जगन्मूलतत्त्वम् भौतिकम् तत्त्वम् न सत् अतिभौतिकम् आत्मतत्त्वम् अस्ति । अस्तु ! एवं औपनिषदम् दर्शनम् काल्पनिकम् न सत् विज्ञानाधारितम् अस्ति, यच्च विज्ञानप्रियायाम् वैदिकपरम्परायाम् क्रमशः विकसन्त्याः विज्ञानाधारितायाः वैदिकविचारधारायाः अन्तिमरूपेण विकसिते रूपे स्वरूपम् प्राप्तवत् अस्ति । फलतः औपनिषदाः मनीषिणः इव तत्पूर्ववर्तिनः वैदिकाः ऋषयः अपि विज्ञानप्रियाः वैज्ञानिकाः एवं सिध्यन्ति, ते विज्ञानशून्याः न आसन्, यथा च कतिपये विद्वांसः कथयन्ति ।[1]

अस्य औपनिषददर्शनस्य ब्रह्मसूत्रकारपूर्ववर्तिभिः आश्मरथ्यौडुलोमिकाशकृत्स्नादिभिः अनेकैः आचार्यैः मीमांसा कृता । गीताकारेण अस्यैव मुख्यम् आधारम् गृहीत्वा स्वकीयम् गीतादर्शनम् स्थापितम् । ब्रह्मसूत्रकारेण वादरायणेन अस्य सोपपत्तिकाम् समन्वयात्मिकाम् च मीमांसाम् कृत्वा इदम् एकस्य उपपन्नस्य समन्वितस्य च दर्शनस्य रूपे प्रस्तुतम् । शंकररामानुजादिभिः विभिन्नैः भाष्यकारैः आचार्यैः उपनिषदाम् ब्रह्मसूत्राणाम् च–द्वयोः एकस्य वा–भाष्याणि कृत्वा इदम् दर्शनम् अद्वैतविशिष्टाद्वैतादिभिः त्रिभिन्नरूपैः प्रदर्शितम् । एवम् विभिन्नरूपेषु विराजितम् इदम् दर्शनम् भारते अन्येभ्यः सर्वेभ्यः दर्शनेभ्यः अधिकम् जनान् प्रभावितान् कुर्वत्, तेषाम् जीवनलक्ष्यम् च निर्धारयत् वर्तते, सहैव च इदम् विदेशीयान् प्रबुद्धजिज्ञासून् अपि पर्याप्तरूपेण प्रभावितान् कुर्वत्, तेभ्यः शान्तिम् च प्रददत् वर्तते ।

---

१—मैकडोनल—वैदिकदेवशास्त्र (वैदिक माइथोलोजी), पृष्ठ १ ।

# २५

## वेदाङ्गानाम् महत्त्वम्

**१—सर्वेषाम् वेदाङ्गानाम् सामान्यरूपेण महत्त्वम्**—यथा च पूर्वम् उक्तम्[१], वेदस्वरूपसंरक्षणार्थम् तत्तत्त्वाववोधार्थम् च शिक्षादीनाम् वेदाङ्गानाम् उद्भवः, जातः। वेदाङ्गानि, यथा च एतेषाम् अनया संज्ञया एव सूच्यते, अङ्गवत् वेदानाम् तत्प्रतिपाद्यस्य च सहायकानि सहकारीणि वा सन्ति। यद्यपि वेदाङ्गानि मूलतः वेदानाम् अङ्गानि इव सहायतार्थम् उद्भूतानि, किन्तु पश्चात् तानि स्वविकासपरम्परायाम् लौकिकस्य संस्कृतस्य, तद्वाङ्मयस्य, तस्य च प्रतिपाद्यस्य अपि सहायकानि अभवन्, इदानीम् च वर्तन्ते; यथा हि शिक्षाव्याकरणे वेदाङ्गे यथा स्वमौलिकरूपे वैदिकक्षेत्रे सहायताम् कुरुतः, तथैव ते स्वविकसितरूपे लौकिकक्षेत्रे अपि साहाय्यम् वितनुतः। एवम्, संस्कृतस्य वैदिके लौकिके च इति उभयोः अपि क्षेत्रयोः वेदाङ्गानाम् महत्त्वम् वर्तते।

यद्यपि वेदाङ्गानाम् बीजम्, यथा च 'अथ शीक्षां (शिक्षां) व्याख्यास्यामः' (तै० उ०, शि० व० १), 'शिक्षा कल्पो व्याकरणम्' (मु० उ० १।१।४) इत्यादिभिः वचनैः ज्ञायते, श्रुतिवाङ्मयेऽपि समुपलभ्यते, तथापि तानि व्यवस्थितवाङ्मयरूपे श्रुतिवाङ्मयात् अनन्तरम् एव अस्तित्वम् प्राप्नुवन्, अतः अस्मिन् रूपे तानि स्मृतिवाङ्मयस्य अन्तः समागच्छन्ति। स्मृतिवाङ्मये च तेषाम् मूर्धन्यभूतम् कालक्रमेण च प्रायः सर्वप्रथमम् स्थानम् अस्ति। तानि आधारीकृत्य भूयसः स्मृतिवाङ्मयस्य विकासः जातः, यथा हि कल्पम् तदंशभूतानि च धर्मसूत्राणि आधारीकृत्य विभिन्नाः स्मृतयः स्वास्तित्वम् प्राप्नुवन्।

अस्तु! एवम् श्रुतिवाङ्मयस्य तत्प्रतिपाद्यस्य च संरक्षकरूपेण सहायकरूपेण वा, अथ च स्मृतिवाङ्मयस्य मूर्धन्यत्वेन तदाधाररूपेण च, सहैव च स्वविकसितरूपे समस्तस्य लौकिकसंस्कृतवाङ्मयस्य अपि सहायकरूपेण वेदा-

---

१—'वैदिकम् साहित्यम्' इतिशीर्षके निबन्धे, पृष्ठ ७६-७७।

ङ्गानाम् संस्कृतवाङ्मये उच्चम् स्थानम् अतिशयितम् च महत्त्वम् वर्तते। अत एव पाणिनीयशिक्षायाम् 'तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते' इति-प्रकारेण, महाभाष्ये च 'षडङ्गो वेदोऽध्येय: ज्ञेयश्च' इतिप्रकारेण वेदाध्ययनस्य साकल्यसम्पादनार्थम् साङ्गस्य एव वेदस्य अध्ययनाय निर्देशनम् वर्तते।

२—पृथक्-पृथक् विशिष्टरूपेण महत्त्वम्—'शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति' (मु० उ० १।१।५) इतिमुण्डकोपनिषद्वाक्यानुसारेण शिक्षा, कल्प:, व्याकरणम्, निरुक्तम्, छन्द:, ज्योतिषम् चेति षट् वेदाङ्गानि वर्तन्ते।

छन्द: पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
(पा० शि० ४१-४२)

इतिप्रकारेण पाणिनीयशिक्षायाम् अपि एषाम् वेदाङ्गानाम् परिगणनम् कृतम् वर्तते। अत्र इदमपि प्रतिपादितम् अस्ति यत् एतानि वेदस्य हस्तपादादिवत् अङ्गानि वर्तन्ते अर्थात् एतानि अङ्गानि इव विशिष्टरूपेण तस्य सहकारीणि सन्ति।

उक्तेषु शिक्षादिषु वेदाङ्गेषु वर्णस्वराद्युच्चारणप्रकार: यया शिक्ष्यते उपदिश्यते वा सा 'शिक्षा' उच्यते। शिक्षाया: अस्य स्वरूपेण तस्या: महत्त्वम् स्वत एव प्रकाशते। वर्णस्वराद्युच्चारणप्रकारस्य ज्ञानेन विना वेदमन्त्राणाम् अन्यस्य वा कस्यचित् वाङ्मयस्य शुद्धरूपेण समीचीनतया च पाठ: कर्तुम् न शक्यते। प्राचीनकाले यदा वाङ्मयस्य उपदेश: गुरुशिष्यपरम्परया मौखिकरूपेण एव क्रियमाण: आसीत्, तदा तु उक्तस्य उच्चारणप्रकारस्य ज्ञानेन विना वेदादिवाङ्मयस्य शुद्ध: पाठ एव असंभव: अभविष्यत्, फलतश्च इदानीम् परम्परया अशुद्ध: पाठ: प्राप्त: अभविष्यत्। इत्थम्, वेदादीनाम् शुद्धपाठसंरक्षणेन अनेन वेदाङ्गेन बहु उपकृतम्।

यत्र यागप्रयोग: कल्प्यते समर्थ्यते वा स: कल्प: अस्ति। शनै:शनै: यागानुष्ठानप्रक्रिया जटिला जाता, ताम् सूत्ररूपेण अवबोधयितुम् अस्य वेदाङ्गस्य उद्भव: जात:। अनेन वेदाङ्गेन विना श्रुतिप्रतिपादितानाम् यागादीनाम् कर्मणाम् यथातथरूपेण सम्पादनम् एव असंभवम् अभविष्यत्, अत: अस्य महती उपयोगिता अस्ति। अस्य वेदाङ्गस्य विकासे जाते, अस्य चातुर्विध्यम् जातम्, यदनुसारेण कल्पसूत्राणि चतुर्विधानि सन्ति—श्रौतसूत्राणि, गृह्यसूत्राणि, धर्मसूत्राणि, शुल्वसूत्राणि च। श्रौतसूत्रेषु श्रौते श्रुतिविहिते वा अग्नौ सम्पाद्यमानानाम् श्रौतानानाम् श्रुतिविहितानाम् वा यागादिकानाम् कर्मणाम् अनुष्ठानप्रकार: वर्णित: वर्तते। गृह्यसूत्रेषु गृह्याग्नौ सम्पाद्यमानानाम् यागानाम् विभिन्नानाम् संस्काराणाम् च अनु-

ष्ठानप्रकारः वर्णितः अस्ति। धर्मसूत्रेषु वर्णाश्रमाचारस्य राजकर्तव्यस्य च वर्णनम् वर्तते। शुल्वसूत्रेषु वेदिनिर्माणरीतिः प्रतिपादिता अस्ति। एतेषु गृह्यसूत्राणि धर्मसूत्राणि च स्मार्तसूत्राणि मन्यन्ते, शुल्वसूत्राणि च श्रौतसूत्रैः सम्बद्धानि सन्ति। एषाम् चतुर्विधानाम् कल्पसूत्राणाम् अनेन स्वरूपपरिचयेन कल्पवेदाङ्गस्य अनेकप्रकारकम् महत्त्वम् स्वत एव स्पष्टम् भवति।

येन शब्दाः प्रकृतिप्रत्ययाद्युपदेशरूपे व्याक्रियन्ते तत् व्याकरणम् अस्ति। यदि प्रत्येकम् शब्दः स्वतन्त्ररूपेण ज्ञातः क्रियेत चेत् महत् गौरवम् स्यात्, महान् प्रयासश्च अपेक्षितः स्यात्। किन्तु व्याकरणेन शब्दानाम् प्रकृतिप्रत्ययाद्युपदेशे कृते समानप्रकृतिकाः समानप्रत्ययकाश्च शब्दाः युगपत् एव लाघवेन ज्ञाताः भवन्ति। व्याकरणस्य यानि विभिन्नानि प्रयोजनानि सन्ति, तानि वार्तिककारेण 'रक्षोहागमलघ्वसंदेहाः प्रयोजनम्' इत्यस्मिन् वार्तिके प्रदर्शितानि। व्याकरणस्य एतानि रक्षादीनि प्रयोजनानि अन्यानि च कतिचन प्रयोजनानि पतञ्जलिना स्वप्रणीते महाभाष्ये स्पष्टीकृतानि। एतैः विभिन्नैः प्रयोजनैः ज्ञायते यत् व्याकरणाध्ययनम् महाप्रयोजनवत् वर्तते।

यत्र शब्दाः निरुच्यन्ते अर्थात् यत्र व्युत्पत्तिप्रदर्शनद्वारा शब्दानाम् अर्थप्रकाशनम् क्रियते तत् निरुक्तम् अस्ति। अस्य साहाय्येन एव वेदमन्त्रप्रयुक्तानाम् शब्दानाम् उक्तप्रकारकम् निर्वचनम् कर्तुम् शक्यते, तदाधारेण च अन्येषाम् अपि शब्दानाम् निर्वचनम् संभवम् अस्ति। एवम् शब्दानाम् अर्थज्ञानाय अस्य उपयोगिता स्पष्टा अस्ति।

यत्र विभिन्नानाम् छन्दसाम् वर्णनम् अस्ति, तत् छन्दः अस्ति। वेदः प्रायः छन्दोमय एव वर्तते। तत्र कानि कानि छन्दांसि प्रयुक्तानि, तेषाम् च किम् स्वरूपम्, इत्यादिप्रकारकम् ज्ञानम् अनेन एव वेदाङ्गेन भवति। विकासपरम्परायाम् इदमेव वेदाङ्गम् लौकिकानाम् छन्दसाम् ज्ञानम् वितरति।

यत्र यज्ञानुष्ठानकालनिर्णयः वर्तते तत् ज्यौतिषम् अस्ति। विभिन्नानाम् यज्ञानाम् अनुष्ठानस्य कालः नियतः अस्ति। नियतकाले अनुष्ठिताः एव यज्ञाः निर्दिष्टफलदायकाः भवन्ति। अतः यथार्थकालज्ञानम् आवश्यकम् वर्तते, तच्च अस्य वेदाङ्गस्य एव शरणवरणेन प्राप्तुम् शक्यम्। एवमेव अन्येषाम् अपि विभिन्नानाम् वैदिकानाम् लौकिकानाम् च कर्मणाम् कालज्ञानाय इदम् वेदाङ्गम् अपेक्षितम् भवति। इत्थम् अस्य महत् महत्त्वम् वर्तते।

अस्तु! एवम् स्पष्टम् अस्ति यत् विभिन्नानाम् वेदाङ्गानाम् विविधम् महत्त्वम् वर्तते।

+

२६

# वेदाङ्गसाहित्यम्

१—**प्रास्ताविकम्**—विगते निबन्धे वेदाङ्गानाम् महत्त्वस्य किञ्चित् दर्शनम् कृतम् । इदानीम् तेषाम् साहित्यसम्पत्तेः अपि किञ्चित् दर्शनम् करणीयत्वेन वर्तते । वेदाङ्गसाहित्यम् स्वस्मिन् मौलिके विकसिते च रूपे समेत्य अतीव विस्तृतम् वर्तते । तस्य संक्षिप्तः परिचयः वेदाङ्गानाम क्रमेण निम्नरूपेण दातुम् शक्यते—

२—**शिक्षा**—अस्य वेदाङ्गस्य प्रतिनिधिभूताः प्राचीनतमाः उपलब्धाः ग्रन्थाः विभिन्नानि प्रातिशाख्यानि एव मन्तुम् शक्यन्ते । यतः प्रत्येकम् शाखायाः एकम् स्वकीयम् प्रातिशाख्यम् आसीत्, अतः एतेषाम् अभिधानम् एव 'प्रातिशाख्यम्' जातम् । प्रातिशाख्येषु संहितापाठसम्बन्धिनाम् वर्णोच्चारण-स्वरविधान-सन्ध्यादिविषयाणाम् साङ्गोपाङ्गम् विवेचनम् वर्तते । संहितापाठस्य पदपाठरूपे परिवर्तनस्य विभिन्नाः नियमाः अपि अत्र सूक्ष्मतया वर्णिताः सन्ति । यतः अत्र व्याकरणसम्बन्धिनः अपि अनेके नियमाः वर्णिताः विद्यन्ते, अतः एतानि व्याकरणस्य अपि उद्गमस्थानानि मन्तुम् शक्यन्ते । वस्तुतः प्रातिशाख्येषु शिक्षाव्याकरणयोः वेदाङ्गयोः प्रायः समन्वयः वर्तते । अत एव एतयोः विकासपरम्परायाम् अपि अनयोः प्रायः समन्वयः एव अतिष्ठत् । यत्फलस्वरूपम् अनन्तरम् शिक्षावेदाङ्गम् व्याकरणवेदाङ्गे एव प्रायः अन्तर्भूतम् समाविष्टम् वा अभवत् ।

प्रातिशाख्येषु शौनकप्रणीतम् 'ऋक्प्रातिशाख्यम्' प्राचीनतमम् प्रामाणिकतमम् च मन्यते । यथा च अस्य नाम्ना एव ज्ञायते, इदम् ऋग्वेदेन सम्बन्धम् धत्ते । अस्य उपरि उवटप्रणीतम् भाष्यम् वर्तते । अस्य प्रातिशाख्यस्य प्रारम्भिके वर्गद्वये विष्णुमित्रप्रणीता 'वर्गद्वयवृत्ति' नामिका वृत्तिः अपि अस्ति ।

द्वितीयम् महत्त्वपूर्णम् प्रातिशाख्यम् कात्यायनप्रणीतम् 'वाजसनेयिप्रातिशाख्यम्' अस्ति । इदम् 'कात्यायनप्रातिशाख्यम्' अपि उच्यते । इदम्

शुक्लयजुर्वेदेन सम्बद्धम् अस्ति । आचार्येण उवटेन अस्य अपि भाष्यम् कृतम् अस्ति । अस्मिन् प्रातिशाख्ये पाणिनीये अष्टाध्यायीग्रन्थे च बहुषु स्थलेषु साम्यम् वर्तते ।

तृतीयम् प्रातिशाख्यम् कृष्णयजुर्वेदीयतैत्तिरीयसंहितया सम्बद्धम् 'तैत्तिरीयप्रातिशाख्यम्' अस्ति । अस्य अनेकानि भाष्याणि सन्ति, येषु माहिषेयकृतम् 'पदक्रमसदन' नामकम् भाष्यम् प्रसिद्धम् अस्ति ।

सामवेदसम्बन्धिषु प्रातिशाख्येषु पुष्पप्रणीतम् 'पुष्पसूत्रम्' शाकटायनप्रणीतम् 'ऋक्तन्त्रम्' च प्रमुखे स्तः । अथर्ववेदसम्बन्धिषु प्रातिशाख्येषु 'अथर्वप्रातिशाख्यम्' प्रमुखम् अस्ति ।

विभिन्नानि प्रातिशाख्यानि आधारीकृत्य अनेके शिक्षाग्रन्थाः प्रणीताः अभवन्; यथा–याज्ञवल्क्यशिक्षा, वासिष्ठीशिक्षा, कात्यायनीशिक्षा, पाराशरी शिक्षा, माण्डव्यशिक्षा, माध्यन्दिनीशिक्षा, प्रातिशाख्यप्रदीपशिक्षा, नारदीयशिक्षा, माण्डूकीशिक्षा, पाणिनीयशिक्षा च इत्यादयः । एतेषु शिक्षाग्रन्थेषु पाणिनीयशिक्षा वेदे लौकिके च वाङ्मये उपयोगिनी वर्तते, फलतः महत्त्वपूर्णा प्रचारबहुला च अस्ति । एवम् शिक्षावेदाङ्गस्य साहित्यसम्पत्तिः विशाला वर्तते ।

३—कल्पः—अस्य वेदाङ्गस्य यज्ञादिभिः कर्मभिः साक्षात् सम्बन्धः अस्ति । अस्य प्रतिनिधिभूताः ग्रन्थाः विभिन्नानि कल्पसूत्राणि सन्ति । यथा च पूर्वम् उक्तम्[1], कल्पसूत्राणि प्रमुखतः चतुर्विधानि सन्ति–श्रौतसूत्राणि, गृह्यसूत्राणि, धर्मसूत्राणि, शुल्वसूत्राणि च । श्रौतसूत्रेषु ऋग्वेदस्य द्वे श्रौतसूत्रे स्तः—आश्वलायनश्रौतसूत्रम्, शाङ्खायनश्रौतसूत्रञ्च । शुक्लयजुर्वेदस्य एकमात्रम् श्रौतसूत्रम् कात्यायनश्रौतसूत्रम् अस्ति । कृष्णयजुर्वेदस्य बौधायनश्रौतसूत्रम्, आपस्तबश्रौतसूत्रम्, हिरण्यकेशि सत्याषाढम् वा श्रौतसूत्रम्, वैखानसश्रौतसूत्रम्, भारद्वाजश्रौतसूम्, मानवश्रौतसूत्रम्, वाराहश्रौतसूत्रञ्चेति षट् सूत्राणि उपलभ्यन्ते । सामवेदस्य आर्षेयकल्पसूत्रम् प्राचीनतमम् मन्यते । एतदतिरिक्तम्, अस्य वेदस्य लाटचायनश्रौतसूत्रम्, द्राह्यायणश्रौतसूत्रम्, जैमिनीयश्रौतसूत्रञ्चेति श्रौतसूत्राणि सन्ति । अथर्ववेदस्य श्रौतसूत्रम् वैतानश्रौतसूत्रम् अस्ति ।

गृह्यसूत्रेषु ऋग्वेदस्य आश्वालयनगृह्यसूत्रम्, शाङ्खायनगृह्यसूत्रञ्चेति गृहसूत्रद्वयम् प्रसिद्धम् अस्ति । एतदतिरिक्तम्, अस्य वेदस्य कोषीतकिगृह्यसूत्रम् अपि प्रकाशितम् जातम्, यच्च शाङ्खायनगृह्यसूत्रेण सह बहु साम्यम् धत्ते । शुक्लयजुर्वेदस्य एकमात्रम् गृह्यसूत्रम्–पारस्करगृह्यसूत्रम्–प्रसिद्धम्

---

१—विगते निबन्धे ।

अस्ति, यस्य च अनेकाः व्याख्याः उपलभ्यन्ते। कृष्णयजुर्वेदस्य बौधायनगृह्यसूत्रम्, आपस्तम्बगृह्यसूत्रम्, हिरण्यकेशिगृह्यसूत्रम्, भारद्वाजगृह्यसूत्रम्, मानवगृह्यसूत्रम्, काठकगृह्यसूत्रञ्चेति गृह्यसूत्राणि सन्ति। सामवेदस्य गोभिलगृह्यसूत्रम्, खादिरगृह्यसूत्रम्, जैमिनीयगृह्यसूत्रञ्चेति गृह्यसूत्राणि सन्ति। अथर्ववेदस्य एकमात्रम् गृह्यसूत्रम् कौशिकगृह्यसूत्रम् अस्ति, यस्मिन् प्राचीनायाः भारतीययातुविद्यायाः वह्वी सामग्री उपलभ्यते। धर्मसूत्रसाहित्यम् अद्य पूर्णतः उपलब्धम् नास्ति। उपलब्धेषु धर्मसूत्रेषु गौतमधर्मसूत्रम् प्राचीनतमम् मन्यते। प्राचीनेषु धर्मकारेषु केवलम् मनोः उल्लेखः अत्र वर्तते, किन्तु मनोः नाम्ना सम्बद्धम् 'मानवधर्मसूत्रम्' यदाधारे मनुस्मृतेः रचना मन्यते, अधुनावधि उपलब्धम् नास्ति। गौतमधर्मसूत्रातिरिक्तानि उपलब्धानि धर्मसूत्राणि बौधायनधर्मसूत्रम् आपस्तम्बधर्मसूत्रम्, हिरण्यकेशिधर्मसूत्रम्, वसिष्ठधर्मसूत्रञ्चेत्यादीनि सन्ति।

उपलब्धानि शुल्वसूत्राणि अपि संख्यायाम् बहूनि न सन्ति। उपलब्धेषु शुल्वसूत्रेषु कात्यायनशुल्वसूत्रम् प्रसिद्धम् अस्ति। अन्यानि उपलब्धानि शुल्वसूत्राणि बौधायनशुल्वसूत्रम्, आपस्तम्बशुल्वसूत्रम्, मानवशुल्वसूत्रम् च इत्यादीनि सन्ति।

३—**व्याकरणम्**—यथा च अत्रैव पूर्वम् उक्तम्, अस्य वेदाङ्गस्य बीजम् विभिन्नेषु प्रातिशाख्येषु उपलभ्यते। तत्र वैदिकस्य व्याकरणस्य अनेके नियमाः वर्णिताः सन्ति, यदाधारेण अनन्तरम् संस्कृतव्याकरणस्य विकासः जातः। अस्य वेदाङ्गस्य विकासपरम्परायाम् सूत्रात्मिका पाणिनीया अष्टाध्यायी प्रमुखरूपेण राजते, यत्र वैदिकम् लौकिकम् च व्याकरणम् उपलभ्यते। यथा च स्वयम् अष्टाध्यायी साक्ष्यम् ददाति, पाणिनेः पूर्वम् अपि अनेके वैयाकरणाः अभवन्, किन्तु तेषाम् ग्रन्थाः नोपलभ्यन्ते। फलतः पाणिनीयव्याकरणम् एव उपलब्धम् प्राचीनतमम् व्याकरणम् अस्य वेदाङ्गस्य प्रतिनिधिभूतम् च अस्ति। पाणिनिसूत्रेषु कात्यायनेन वार्तिकानाम् पतञ्जलिना च भाष्यस्य रचना कृता। पतञ्जलेः भाष्यम् स्वगौरवेण हेतुना 'महाभाष्यम्' उच्यते। पाणिनिकात्यायनपतञ्जलीतिमुनित्रयविरचितानि एतानि सूत्रवार्तिकभाष्याणि व्याकरणस्य आधारभूतानि सन्ति। अनन्तरम् एषाम् एव सिद्धान्तप्रकाशनरूपे व्याख्यानानुव्याख्यानरूपे च व्याकरणस्य महान् विकासः महती च साहित्यसम्पत्तिः अभवत्। अस्याम् साहित्यसम्पत्तौ भर्तृहरिविरचितम् वाक्यपदीयम्, वामनजयादित्यविरचिता काशिकावृत्तिः, तदुपरि जिनेन्द्रबुद्धिविरचितः न्यासः, हरदत्तविरचिता च पदमञ्जरी, महाभाष्यस्य कैयटप्रणीतम् 'प्रदीप' नामकम् व्याख्यानम् तस्य च नागेशविरचितम् 'उद्योत' नामकम् व्याख्यानम्, रामचन्द्राचार्यविरचिता प्रक्रियाकौमुदी, भट्टोजिदीक्षित-

विरचिता सिद्धान्तकौमुदी तस्याश्च टीकापरम्परायाम् मनोरमाशब्देन्दु-शेखरादयः टीकाग्रन्थाः, सहैव वैयाकरणभूषणसारलघुमञ्जूषापरिभाषेन्दु-शेखरादयश्च ग्रन्थाः प्रमुखताम् भजन्ते ।

४—**निरुक्तम्**—अस्य वेदाङ्गस्य प्रातिनिध्यम् अद्य एकमात्रम् यास्काचार्यप्रणीतम् निरुक्तम् विधत्ते । यद्यपि, यथा च अनेन निरुक्तेन एव ज्ञायते, अस्मात् पूर्वम् अपि अनेके निरुक्तकाराः जाता, किन्तु तेषाम् ग्रन्थाः इदानीम् न उपलभ्यन्ते । महर्षियास्कप्रणीतम् निरुक्तम् कश्यपप्रजापतिप्रणीतनिघण्टु-व्याख्यारूपम् अस्ति । निघण्टाः एकम् 'निघण्टुनिर्वचनम्' इत्याख्यम् भाष्यम् अपि देवराजयज्वप्रणीतम् उपलभ्यते । निरुक्तस्य अपि कतिपयाः टीकाः सन्ति यासु स्कन्दमहेश्वरस्य निरुक्तभाष्यटीका दुर्गाचार्यस्य दुर्गवृत्तिश्च प्रमुखे स्तः । अस्य वेदाङ्गस्य अधिकम् साहित्यम् न उपलभ्यते, तत्र कारणद्वयम् संभाव्यते—एकम् तु अस्य भूयसः साहित्यस्य लोपः, द्वितीयम् च यास्कप्रणीतात् निरुक्तात् अनन्तरम् अस्य वेदाङ्गस्य निर्वचनरूपकार्यस्य व्याकरणेन परिग्रहणम्, येन निरुक्तम् व्याकरणे एव अन्तरभवत् ।

५—**छन्दः**—अस्य वेदाङ्गस्य प्रातिनिध्यम् मुख्यतः पिङ्गलाचार्यकृतेन छन्दःसूत्रेण विधीयते । अस्मिन् वैदिकानाम् लौकिकानाम् चेत्युभयेषाम् छन्दसाम् लक्षणानि वर्णितानि सन्ति । अस्य हलायुधकृता 'मृतसंजीवनी' व्याख्या प्रसिद्धा अस्ति । अस्य वेदाङ्गस्य विकासपरम्परायाम् प्रायः एतादृशाः ग्रन्थाः प्रणीताः जाताः येषु लौकिकानाम् एव छन्दसाम् वर्णनम् अस्ति । एषु श्रुतबोधछन्दोमञ्जरीवृत्तरत्नाकरादयः ग्रन्थाः प्रसिद्धाः सन्ति ।

६—**ज्यौतिषम्**—अस्य वेदाङ्गस्य प्राचीनतमः ग्रन्थः लगधप्रणीतम् 'वेदाङ्गज्यौतिषम्' अस्ति । अस्य ऋग्वेदसम्बन्धी भागः 'आर्चज्यौतिषम्' उच्यते, यजुर्वेदसम्बधी च भागः 'याजुषज्यौतिषम्' अभिधीयते । अस्य अन्य-वेदसम्बन्धी अन्यः कोऽपि भागः नास्ति । अस्य ग्रन्थस्य अर्थः भावः वा अतीव गूढः अस्ति, यस्य प्रकाशनाय शङ्करबालकृष्णलोकमान्यतिलकादिभिः अनेकैः विद्वद्भिः प्रयत्नः कृतः अस्ति । अस्य ग्रन्थस्य एकम् प्राचीनम् भाष्यम् सोमाकरप्रणीतम् अस्ति, अपरञ्च अस्य भाष्यम् सुधाकरप्रणीतम् अस्ति । अस्य वेदाङ्गस्य विकासपरम्परायाम् अनेकेषाम् ग्रन्थानाम् रचना जाता, येषु सिद्धान्तशिरोमणिग्रहलाघवादयः प्रसिद्धाः सन्ति ।

वेदाङ्गानि इव अनुक्रमण्यः अपि वेदक्षेत्रे साहाय्यम् कुर्वन्ति । अनुक्रमणीग्रन्थेषु बृहद्देवतासर्वानुक्रमण्यादयः ग्रन्थाः प्रसिद्धाः सन्ति ।

अस्तु ! एवम् वेदाङ्गसाहित्यम् अतीव विस्तृतम् विविधरूपैः उपयोमि च वर्तते ।

## २७

# भारतीयदर्शनानि तेषाम् वैशिष्ट्यम् च

**१—प्रास्ताविकम्**—भारतम् दर्शनानाम् एकम् प्रसिद्धम् उर्वरम् क्षेत्रम् अस्ति । अत्र असंख्यैः दर्शनैः जन्म गृहीतम्, येषु अनेकानि स्वकीये मौलिके विकसिते वा रूपे अद्यापि न्यूनाधिकतया प्रचलितानि सन्ति, अत्रत्यान् विभिन्नान् जनसमुदायान् च प्रभावितान् कुर्वन्ति । कतिपयानि भारतीयदर्शनानि तु अद्य भारतात् बहिरपि विदेशीयान् जनान् प्रभावितान् कुर्वन्ति ।

प्रत्येकम् दर्शनम् जगतः वास्तविकस्य स्वरूपस्य दर्शनम् कर्तुम् प्रयतते । इदम् इन्द्रियगोचरम् जगत् यस्मिन् रूपे सर्वसाधारणस्य समक्षम् अस्ति, तस्मिन् एव रूपे तत् दार्शनिकानाम् समक्षम् उपस्थितम् अस्ति । सर्वसाधारणः जनः जगत् तस्मिन् एव रूपे गृह्णाति, यस्मिन् रूपे तत् उपलभ्यते, किन्तु दार्शनिकः—

इन्द्रियैरुपलब्धं यत् तत् तत्त्वेन भवेद्यदि ।<br>
जातास्तत्त्वविदो बालास्तत्त्वज्ञानेन किं तदा ।।

(कश्चन बौद्धः दार्शनिकः)

इतिरूपे घोषणाम् कृत्वा जगतः तात्त्विकस्वरूपम् ज्ञातुम् प्रयतते, एतत्फलस्वरूपम् च ज्ञातस्य तात्त्विकस्वरूपस्य निर्देशेन सः जगतः इन्द्रियोपलब्धस्य रूपस्य व्याख्याम् प्रस्तौति । इयम् व्याख्या एव एकस्य दर्शनस्य स्वरूपम् गृह्णाति । सुदूरात् अतीतकालात् आरभ्य अधुनावधि जगतः मूलम् तात्त्विकम् वा स्वरूपम् ज्ञातुम् अनवरतरूपेण प्रयत्नः क्रियमाण वर्तते स्म, इदानीम् च निरन्तरम् क्रियमाणः वर्तते, किन्तु तस्य सम्बन्धे अद्यावधि मतैक्यम् स्थापितम् भवितुम् न अशक्नोत्, न च कापि एतादृशी आशा एव अस्ति । असंख्यरूपेषु जगतः वर्तमानस्वरूपस्य व्याख्याः प्रस्तुताः अभवन्, यासु पूर्णरूपे कतिपयाः एव अद्य विभिन्नानाम् दर्शननाम् रूपे उपलब्धाः सन्ति,

कतिपयानाम् केचन अंशाः एव यत्र-तत्र निर्दिष्टाः सन्ति, अवशिष्टानाम् च असंख्यानाम् दर्शनानाम् नाम अपि अतीतस्य गर्भे समाहितम् । जगतः स्वरूपस्य सम्बन्धे अद्य उपलब्धासु उक्तासु अनेकासु व्याख्यासु काश्चन ताः अपि सन्ति या विभिन्नानाम् भारतीयदर्शनानाम् रूपे वर्तन्ते ।

२—भारतस्य प्राचीनतमाः दार्शनिकविचारधाराः—भारतवर्षस्य प्राचीनतमाः प्रमुखाश्च दार्शनिकविचारधाराः ताः सन्ति याः स्वमूलम् ऋग्वेदस्य नासदीयसूक्तादिषु रक्षन्त्यः विभिन्नासु प्राचीनासु उपनिषत्सु प्रतिपादितरूपेण विकसिताः जाताः । एताः विचारधाराः समष्टिरूपेण 'वेदान्तः' इत्यभिधीयन्ते । एताः कस्यचित् एकस्य समन्वितस्य व्यवस्थितस्य वा दर्शनस्य रूपे न सन्ति, अपि तु स्फुटरूपेण वर्तन्ते । एतासाम् न्यूनाधिकः आधारः विभिन्नैः भारतीयदर्शनैः विभिन्नरूपेषु गृहीतः । एतासाम् मीमांसायाः फलस्वरूपम् एतासाम् आधारे एकस्य समन्वितस्य विशिष्टस्य दर्शनस्य—वेदान्तदर्शनस्य—स्थापना अपि अभवत् । एताः विचारधाराः समष्टिरूपेण 'औपनिषददर्शनम्' इत्यपि अभिधीयन्ते । अस्य च औपनिषददर्शनस्य संक्षिप्तः परिचयः पूर्वमेव दत्तः वर्तते ।[1]

३—प्रमुखानि भारतीयदर्शनानि—प्रमुखानि भारतीयदर्शनानि इमानि सन्ति—सांख्यम्, योगः, न्यायः, वैशेषिकम्, मीमांसा, वेदान्तः, जैनदर्शनम् बौद्धदर्शनम्, चार्वाकदर्शनम् च । एतेषु सांख्यम्, योगः, न्यायः वैशेषिकम्, मीमांसा, वेदान्तश्चेति समेत्य 'षड्दर्शनानि' उच्यन्ते । अतः एतानि वेदम् प्रमाणम् मन्यन्ते, अतः एतानि 'आस्तिकदर्शनानि' इत्यपि अभिधीयन्ते । जैनदर्शनम्, वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकेतिचतुर्विधम् बौद्धदर्शनम्, चार्वाकदर्शनम् चेति समेत्य एतानि अपि षट् परिगण्यन्ते । यतः एतानि वेदम् प्रमाणम् न मन्यन्ते, अतः एतानि पूर्वम् कैश्चित् 'नास्तिकदर्शनानि' इत्यपि अभिहितानि । अत्र विषये आस्तिकनास्तिकेतिविभाजनम् ईश्वरस्य अस्तित्वनास्तित्वयोः मान्यतायाः आधारे न वर्तते, यतो हि उक्तेषु आस्तिकदर्शनेषु अपि कतिचन ईश्वरस्य अस्तित्वम् न मन्यन्ते । इदम् विभाजनम् तु वेदप्रामाण्याप्रामाण्याधारे वर्तते, किन्तु आधुनिककाले अस्मिन् आधारे इदम् विभाजनम् समीचीनम् न प्रतिभाति । वस्तुतस्तु अनेन विभाजनेन कस्यचित् अतिभौतिकस्य तथ्यस्य अस्तित्वनास्तित्वयोः मान्यतायाः आधारे भाव्यम् । भौतिकानि तथ्यानि तु प्रत्यक्षगोचराणि सन्ति एव, अतः यानि दर्शनानि तद्व्यतिरिक्तस्य कस्यचित् अतिभौतिकस्य तथ्यस्य सत्तायाम् विश्वसन्ति, तानि आस्तिकदर्शनानि मन्तव्यानि, तद्विपरीतानि च नास्तिकानि । एवम्

---

१—'औपनिषदम् दर्शनम्' इतिशीर्षके निबन्धे ।

'अस्ति नास्ति दिष्टं मतिः' इति पाणिनीयेन सूत्रेण अपि सामञ्जस्यम् यथा-वत् तिष्ठति। इत्थम् च केवलम् एकम् चार्वाकदर्शनम् एव नास्तिकदर्शनम् मन्तुम् शक्यते, यतो हि तत् प्रत्यक्षगोचराणि तथ्यानि अतिरिच्य किञ्चित् अतिभौतिकम् तथ्यम् न मन्यते। अवशिष्टानि च उक्तानि दर्शनानि काञ्चित् अतिभौतिकीम् सत्ताम् कञ्चित् अतिभौतिकम् धर्मम् वा मन्यन्ते एव, अतः तानि आस्तिकानि एव मन्तव्यानि।

उक्तानि दर्शनानि अतिरिच्य कानिचित् पाशुपतपाञ्चरात्रादीनि तान्त्रिकाणि आगमिकानि वा अपि दर्शनानि सन्ति, येषाम् स्वतन्त्रे वेदान्त-समन्विते वा आधारे बहूनाम् शैवानाम् वैष्णवानाम् च दर्शनानाम् विकासः जातः।

४—**भारतीयदर्शनानाम् वैशिष्ट्यम्**—यद्यपि एतेषाम् विभिन्नानाम् भारतीयदर्शनानाम् अनेके परस्परभिन्नाः तत्त्वमीमांसासम्बन्धिनः आचार-मीमांसासम्बन्धिनश्च सिद्धान्ताः सन्ति, किन्तु तथापि तेषु एतादृशम् समानम् वैशिष्ट्यम् वर्तते यत् तेभ्यः अभारतीयेभ्यः दर्शनेभ्यः पृथक् विशिष्टम् स्थानम् ददाति, सहैव तेषु कतिचन एतादृश्यः परस्परसमानाः मान्यताः अपि सन्ति याः तेषु ऐक्यस्य अनुभूतिम् कारयन्त्यः तेषाम् समानम् वैशिष्ट्यम् द्योतयन्ति। भारतीयदर्शनानाम् एतत् वैशिष्ट्यम् संक्षेपतः निम्नरूपेण प्रदर्शयितुम् शक्यते—

(अ) **स्वतन्त्रा स्थितिः**—सर्वेषाम् भारतीयदर्शनानाम् अस्मिन् रूपे स्वतन्त्रा स्थितिः वर्तते यत् तानि पाश्चात्त्यदर्शनानि इव धर्मराजनीत्यादी-नाम् अङ्गरूपे तदाधारकाणि न सन्ति, अपि तु स्वाधारे स्वतन्त्ररूपेण स्थितानि सन्ति।

(आ) **जीवनोपयोगिता**—भारतीयानि दर्शनानि पाश्चात्त्यदर्शनानि इव केवलम् बुद्धिविकासाय मानसिककुतूहलनिवारणाय वा न सन्ति, अपि तु तानि लौकिकम् पारलौकिकम् च जीवनम् सुखशान्तिमयम् विधातुम् प्रयत-मानानि सन्ति, अस्मिन् रूपे च तानि स्वकीयाम् जीवनोपयोगिताम् व्याव-हारिकीम् उपयोगिताम् वा दधति।

(इ) **दुःखानुभूतिजन्यता**—भारतीयानि दर्शनानि पाश्चात्त्यदर्शनानि इव आश्चर्यजन्यानि कुतूहलजन्यानि वा न सन्ति, अपि तु वर्तमाने जीवने या दुःखानुभूतिः वर्तते तज्जन्यानि सन्ति। अत्र जीवने दुःखम् वर्तते, तत् कथम् वर्तते, कथम् च तस्य निरासः स्यात्, इत्यादिकान् विचारान् आश्रित्य एव प्रायः सर्वेषाम् भारतीयदर्शनानाम् अविर्भावः जातः

(ई) **आचारस्य अनिवार्यता**—यतो हि पाश्चात्त्यदर्शनानि केवलम् मानसिककुतूहलजन्यानि सन्ति, अतः तानि किमपि लक्ष्यम् न निर्धारयन्ति।

कतिपयानाम् केचन अंशाः एव यत्र-तत्र निर्दिष्टाः सन्ति, अवशिष्टानाम् च असंख्यानाम् दर्शनानाम् नाम अपि अतीतस्य गर्भे समाहितम्। जगतः स्वरूपस्य सम्बन्धे अद्य उपलब्धासु उक्तासु अनेकासु व्याख्यासु काश्चन ताः अपि सन्ति या विभिन्नानाम् भारतीयदर्शनानाम् रूपे वर्तन्ते।

**२—भारतस्य प्राचीनतमाः दार्शनिकविचारधाराः**—भारतवर्षस्य प्राचीनतमाः प्रमुखाश्च दार्शनिकविचारधाराः ताः सन्ति याः स्वमूलम् ऋग्वेदस्य नासदीयसूक्तादिषु रक्षन्त्यः विभिन्नासु प्राचीनासु उपनिषत्सु प्रतिपादितरूपेण विकसिताः जाताः। एताः विचारधाराः समष्टिरूपेण 'वेदान्तः' इत्यभिधीयन्ते। एताः कस्यचित् एकस्य समन्वितस्य व्यवस्थितस्य वा दर्शनस्य रूपे न सन्ति, अपि तु स्फुटरूपेण वर्तन्ते। एतासाम् न्यूनाधिकः आधारः विभिन्नैः भारतीयदर्शनैः विभिन्नरूपेषु गृहीतः। एतासाम् मीमांसायाः फलस्वरूपम् एतासाम् आधारे एकस्य समन्वितस्य विशिष्टस्य दर्शनस्य—वेदान्तदर्शनस्य—स्थापना अपि अभवत्। एताः विचारधाराः समष्टिरूपेण 'औपनिषददर्शनम्' इत्यपि अभिधीयन्ते। अस्य च औपनिषददर्शनस्य संक्षिप्तः परिचयः पूर्वमेव दत्तः वर्तते।[१]

**३—प्रमुखानि भारतीयदर्शनानि**—प्रमुखानि भारतीयदर्शनानि इमानि सन्ति—सांख्यम्, योगः, न्यायः, वैशेषिकम्, मीमांसा, वेदान्तः, जैनदर्शनम् बौद्धदर्शनम्, चार्वाकदर्शनम् च। एतेषु सांख्यम्, योगः, न्यायः वैशेषिकम्, मीमांसा, वेदान्तश्चेति समेत्य 'षड्दर्शनानि' उच्यन्ते। यतः एतानि वेदम् प्रमाणम् मन्यन्ते, अतः एतानि 'आस्तिकदर्शनानि' इत्यपि अभिधीयन्ते। जैनदर्शनम्, वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकेति चतुर्विधम् बौद्धदर्शनम्, चार्वाकदर्शनम् चेति समेत्य एतानि अपि षट् परिगण्यन्ते। यतः एतानि वेदम् प्रमाणम् न मन्यन्ते, अतः एतानि पूर्वम् कैश्चित् 'नास्तिकदर्शनानि' इत्यपि अभिहितानि। अत्र विषये आस्तिकनास्तिकेतिविभाजनम् ईश्वरस्य अस्तित्वनास्तित्वयोः मान्यतायाः आधारे न वर्तते, यतो हि उक्तेषु आस्तिकदर्शनेषु अपि कतिचन ईश्वरस्य अस्तित्वम् न मन्यन्ते। इदम् विभाजनम् तु वेदप्रामाण्याप्रामाण्याधारे वर्तते, किन्तु आधुनिककाले अस्मिन् आधारे इदम् विभाजनम् समीचीनम् न प्रतिभाति। वस्तुतस्तु अनेन विभाजनेन कस्यचित् अतिभौतिकस्य तथ्यस्य अस्तित्वनास्तित्वयोः मान्यतायाः आधारे भाव्यम्। भौतिकानि तथ्यानि तु प्रत्यक्षगोचराणि सन्ति एव, अतः यानि दर्शनानि तद्व्यतिरिक्तस्य कस्यचित् अतिभौतिकस्य तथ्यस्य सत्तायाम् विश्वसन्ति, तानि आस्तिकदर्शनानि मन्तव्यानि, तद्विपरीतानि च नास्तिकानि। एवम्

---

१—'औपनिषदम् दर्शनम्' इतिशीर्षके निबन्धे।

'अस्ति नास्ति दिष्टं मतिः' इति पाणिनीयेन सूत्रेण अपि सामञ्जस्यम् यथावत् तिष्ठति । इत्थम् च केवलम् एकम् चार्वाकदर्शनम् एव नास्तिकदर्शनम् मन्तुम् शक्यते, यतो हि तत् प्रत्यक्षगोचराणि तथ्यानि अतिरिच्य किञ्चित् अतिभौतिकम् तथ्यम् न मन्यते । अवशिष्टानि च उक्तानि दर्शनानि काञ्चित् अतिभौतिकीम् सत्ताम् कञ्चित् अतिभौतिकम् धर्मम् वा मन्यन्ते एव, अतः तानि आस्तिकानि एव मन्तव्यानि ।

उक्तानि दर्शनानि अतिरिच्य कानिचित् पाशुपतपाञ्चरात्रादीनि तान्त्रिकाणि आगमिकानि वा अपि दर्शनानि सन्ति, येषाम् स्वतन्त्रे वेदान्तसमन्विते वा आधारे बहूनाम् शैवानाम् वैष्णवानाम् च दर्शनानाम् विकासः जातः ।

४—**भारतीयदर्शनानाम् वैशिष्ट्यम्**—यद्यपि एतेषाम् विभिन्नानाम् भारतीयदर्शनानाम् अनेके परस्परभिन्नाः तत्त्वमीमांसासम्बन्धिनः आचारमीमांसासम्बन्धिनश्च सिद्धान्ताः सन्ति, किन्तु तथापि तेषु एतादृशम् समानम् वैशिष्ट्यम् वर्तते यत् तेभ्यः अभारतीयेभ्यः दर्शनेभ्यः पृथक् विशिष्टम् स्थानम् ददाति, सहैव तेषु कतिचन एतादृश्यः परस्परसमानाः मान्यताः अपि सन्ति याः तेषु ऐक्यस्य अनुभूतिम् कारयन्त्यः तेषाम् समानम् वैशिष्ट्यम् द्योतयन्ति । भारतीयदर्शनानाम् एतत् वैशिष्ट्यम् संक्षेपतः निम्नरूपेण प्रदर्शयितुम् शक्यते—

(अ) **स्वतन्त्रा स्थितिः**—सर्वेषाम् भारतीयदर्शनानाम् अस्मिन् रूपे स्वतन्त्रा स्थितिः वर्तते यत् तानि पाश्चात्त्यदर्शनानि इव धर्मराजनीत्यादीनाम् अङ्गरूपे तदाधारकाणि न सन्ति, अपि तु स्वाधारे स्वतन्त्ररूपेण स्थितानि सन्ति ।

(आ) **जीवनोपयोगिता**—भारतीयानि दर्शनानि पाश्चात्त्यदर्शनानि इव केवलम् बुद्धिविकासाय मानसिककुतूहलनिवारणाय वा न सन्ति, अपि तु तानि लौकिकम् पारलौकिकम् च जीवनम् सुखशान्तिमयम् विधातुम् प्रयतमानानि सन्ति, अस्मिन् रूपे च तानि स्वकीयाम् जीवनोपयोगिताम् व्यावहारिकीम् उपयोगिताम् वा दधति ।

(इ) **दुःखानुभूतिजन्यता**—भारतीयानि दर्शनानि पाश्चात्त्यदर्शनानि इव आश्चर्यजन्यानि कुतूहलजन्यानि वा न सन्ति, अपि तु वर्तमाने जीवने या दुःखानुभूतिः वर्तते तज्जन्यानि सन्ति । अत्र जीवने दुःखम् वर्तते, तत् कथम् वर्तते, कथम् च तस्य निरासः स्यात्, इत्यादिकान् विचारान् आश्रित्य एव प्रायः सर्वेषाम् भारतीयदर्शनानाम् अविर्भावः जातः

(ई) **आचारस्य अनिवार्यता**—यतो हि पाश्चात्त्यदर्शनानि केवलम् मानसिककुतूहलजन्यानि सन्ति, अतः तानि किमपि लक्ष्यम् न निर्धारयन्ति ।

फलतश्च तत्र कस्यापि आचारस्य अनिवार्यता नास्ति, किन्तु भारतीयानि दर्शनानि दुःखानुभूतिजन्यानि सन्ति, अतः तानि एतादृशम् लक्ष्यम् निर्धारयन्ति यत्र दुःखस्य आत्यन्तिकः अभावः स्यात्; एतस्य लक्ष्यस्य प्राप्त्यै च तानि विभिन्नान् आचारान् निर्धारयन्ति, तेषाम् च पालनम् अनिवार्यम् मन्यन्ते। एवम् भारतीयेषु दर्शनेषु तत्त्वमीमांसायाः आचारमीमांसायाश्च अविच्छेद्यः सम्बन्धः अस्ति।

**(उ) धर्मेण अविरोधः**—पाश्चात्यदर्शनानाम् धर्मेण विरोधः अपि भवति, किन्तु यतः भारतीयेषु दर्शनेषु तत्त्वमीमांसा आचारमीमांसा च परस्परम् अविच्छेद्ये पूरके च स्तः, अतः अत्र धर्मविरोधः नास्ति, अपि तु अत्र धर्मः दर्शनाधारितः सन् तस्य व्यावहारिकरूपमात्रम् अस्ति।

**(ऊ) बन्धनम् मुक्तिश्च**—पाश्चात्यदर्शनेषु बन्धनमुक्तिसम्बन्धिनी मान्यता नास्ति, यदा च भारतीयेषु दर्शनेषु एतादृशो मान्यता स्वीक्रियते। अत्र जननमरणचक्ररूपः संसारः बन्धनम् मन्यते, अस्मात् चक्रात् मुक्तिः एव मुक्तिः मन्यते।

**(ए) अविद्या विद्या च**—पाश्चात्यदर्शनेषु अनयोः अपि मान्यता नास्ति। भारतीयदर्शनेषु उक्तम् अनादि बन्धनम् अनाद्यविद्याहेतुकम् मन्यते, तस्मात् मुक्तिश्च विद्याहेतुका स्वीक्रियते।

**(ऐ) पुनर्जन्म कर्म च**—भारतीयेषु दर्शनेषु पुनर्जन्मसिद्धान्तश्च मन्यते।

एवमेव अन्याः अपि काश्चन परस्परसमानाः विशेषताः भारतीयदर्शनेषु वर्तन्ते याः तेषाम् समानम् वैशिष्ट्यम् आदधानाः तानि अभारतीयेभ्यः दर्शनेभ्यः पृथक् कुर्वन्ति।

यद्यपि उक्तासु मान्यतासु काश्चन चार्वाकदर्शने न स्वीक्रियन्ते, किन्तु यतः तत् दर्शनम् भारतस्य दार्शनिकप्रकृतेः पूर्णतः प्रतिकूलम् अस्ति, फलतश्च पूर्णतया लुप्तम् अपि जातम्, अतः तत् भारतीयदर्शनानाम् वास्तविकम् प्रातिनिध्यम् न करोति। अवशिष्टेषु च दर्शनेषु उक्ताः मान्यताः परस्परसमानाः सन्ति एव, अतः सर्वम् अनवद्यम् अस्ति।

२८

## भारतीयदर्शनानाम् प्रमुखाः सिद्धान्ताः

१—**सांख्यम् योगश्च**—विगते निबन्धे परिगणितेषु प्रमुखेषु भारतीयदर्शनेषु सांख्यम् द्विविधम् मन्यते—निरीश्वरम् सेश्वरम् च, किन्तु केवलेन विशेषणरहितेन वा 'सांख्य' शब्देन प्राय: निरीश्वरस्य एव सांख्यस्य वोध: भवति । 'सेश्वरसांख्य' शब्देन प्राय: योगदर्शनस्य वोध: भवति । सांख्ये योगे च प्राय: अयमेव प्रमुख: भेद: अस्ति यत् यत्र सांख्यम् ईश्वरस्य सत्ताम् न मन्यते, तत्र योग: तस्य सत्ताम् मन्यते । यदि अयम् भेद: उपेक्षित: स्याच्चेत् तदा अनयो: तत्त्वमीमांसासम्वन्धिषु सिद्धान्तेषु तु कश्चन उल्लेखनीय: भेद: न अवशिष्यते, केवलम् अनयो: अयम् स्वरूपगत: भेद: अवशिष्यते यत् यत्र सांख्यम् तत्त्वमीमांसाप्रधानम् अस्ति, तत्र योग: आचारमीमांसाप्रधान: साधनप्रधान: वा अस्ति । अनेन स्वरूपगतेन भेदेन च एते दर्शने परस्परपूरके भवत:, फलतच एते समानतन्त्रे मन्येते । सांख्यस्य तत्त्वमीमांसासम्बन्धिन: सिद्धान्ता: सन्ति यत् प्रत्यक्षगोचरस्य जगत: मूलम् तत्त्वद्वयम् अस्ति—प्रकृति: पुरुषश्च । अनयो: प्रकृति: एका अस्ति, पुरुषाश्च संख्यायाम् वहव: सन्ति । प्रकृति: सत्त्वादिगुणत्रयात्मिका जडा विकारशीला वा अस्ति । पुरुष: तद्विपरीतम् निर्गुण: चित्स्वरूप: निर्विकारश्च अस्ति । प्रकृतिपुरुषयो: अनादि: सम्वन्ध: अस्ति, प्रकृति: स्वाभाविकरूपेण पुरुषसंनिधानवशात् वा पुरुषस्य भोगापवर्गार्थम् जगत्सृष्टिम् करोति । अस्याम् प्रक्रियायाम् मूलत: अव्यक्तरूपा सा व्यक्तरूपे परिणमते । सत्त्वम्, रज:, तम: इति प्रकृते: त्रय: गुणा: सन्ति । वस्तुतस्तु, एते त्रय: गुणा: एव समष्टिरूपेण 'प्रकृति' पदवाच्या: सन्ति । एषाम् गुणानाम् साम्यावस्था एव प्रलयावस्था अस्ति, एषाम् वैषम्यावस्था च सृष्टि: अस्ति । प्रलयावस्थायाम् इयम् प्रकृति: अव्यक्तरूपे तिष्ठति, सृष्टयवस्थायाम् च व्यक्तरूपा भवति । व्यक्तरूपा च इयम् त्रयोविंशतितत्त्वरूपा अस्ति । एतानि च त्रयोविंशतितत्त्वानि सन्ति—महत्, अहङ्कार:, पञ्च तन्मात्रा:, मन:, पञ्च ज्ञानेन्द्रियाणि, पञ्च भूतानि च । एतानि तत्त्वानि मूलप्रकृतिश्च, एवम् प्रकृते: चतुर्विंशतितत्त्वानि परिगण्यन्ते । अनादि-

कालात् आरभ्य पुरुषस्य प्रकृतिविवेकः नास्ति, फलतः स प्रकृतिगुणान् स्वस्मिन् अध्यस्यति, प्रकृतौ च स्वकीयम् चित्त्वम् अध्यस्यति । विवेकाभावात् सः अनादिकालात् बन्धने वर्तते । यदा तस्य साधनवशात् प्रकृतिपुरुषविवेकरूपम् तत्त्वज्ञानम् भवति, तदा तस्य कैवल्यरूपा मुक्तिः भवति । सांख्यस्य इमाम् तत्त्वमीमांसाम्, सहैव च तदतिरेकरूपेण ईश्वरस्य सत्ताम् मन्यमानः योगः विशेषरूपेण स्वकीयाम् अष्टाङ्गयोगरूपाम् आचारमीमांसाम्, तस्याः अङ्गरूपे च स्वकीयम् मनोविज्ञानम् प्रतिपादयति, अथ च एवम् मोक्षसाधनानि प्रकाशयन् सांख्यस्य पूरक इव तिष्ठति ।

**(आ) न्यायः वैशेषिकम् च**—एते दर्शने अपि समानतन्त्रे परस्परपूरके च मन्येते । अनयोः न्यायः प्रमाणमीमांसाबहुलः अस्ति वैशेषिकम् च प्रमेयमीमांसाबहुलम् अस्ति । न्यायः 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' (न्या० सू० १) इतिसूत्रे परिगणितान् षोडशपदार्थान् स्वीकरोति, एतेषाम् तत्त्वज्ञानाच्च मोक्षप्राप्तिम् मन्यते । एतेषु पदार्थेषु प्रमेयम् परित्यज्य अन्ये केवलम् प्रमाणमीमांसासम्बधीनि एव तथ्यानि सन्ति । न्यायदर्शने आत्मशरीरेन्द्रियादयः द्वादश प्रमेयाः मन्यन्ते । वैशेषिके द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः, इति सप्त पदार्थाः मन्यन्ते । एतेषु अभावस्तु अस्मिन् दर्शने मूलतः न मतः, अपितु अनन्तरम् अस्य विकासप्रक्रियायाम् एव मतः । अपरम् च सः अभाव एव अस्ति, न तु कोऽपि भावरूपः पदार्थः । अवशिष्टेषु षट्सु भावरूपेषु पदार्थेषु द्रव्यपदार्थस्य एव प्राधान्यम् वर्तते । अन्ये पञ्च तु तदाश्रिताः सन्तः येन केन प्रकारेण प्रायः तस्य विशेषणरूपाः एव सन्ति । द्रव्याणि च पृथिव्यादीनि पञ्चभूतानि, दिक्, कालः आत्मा, मनः, इति नव वर्तन्ते । एतेषाम् न्यायदर्शनस्य प्रमेयैः यत्किञ्चिद्भेदेन सह प्रायः समन्वयः एव भवति । अनयोः द्वयोः अपि दर्शनयोः मूलरूपे, विकसितरूपे वा मान्यता अस्ति यत् जीवात्मनाम् अदृष्टवशात् महेश्वरस्य सिसृक्षावशात् वा पृथिव्यादीनाम् परमाणुषु क्रिया जायते, यत्फलस्वरूपम् तेषाम् परस्परम् संयोगः भवति येन द्व्यणुकादिक्रमेण जगदुत्पत्तिः भवति । तत्त्वज्ञानेन जीवात्मनः मुक्तिः भवति या च आत्यान्तिकदुःखनिवृत्तिरूपा अस्ति ।

**(इ) मीमांसा वेदान्तश्च**—मीमांसादर्शनम् प्रमुखतः कर्ममीमांसाप्रधानम् आचारमीमांसाप्रधानम् वा अस्ति । तत्र प्रमुखतः ब्राह्मणग्रन्थेषु प्रतिपादितानाम् विभिन्नानाम् कर्मणाम् मीमांसा अस्ति । इदम् दर्शनम् मूलतः ईश्वरसत्ताम्, जगतः सृष्टिप्रलयौ च स्वीकरोति । कालान्तरे कतिभिश्चित् मीमांसकैः ईश्वरस्य अपि सत्ता स्वीकृता, किन्तु जगतः सृष्टिप्रलयौ तु तदापि न स्वीकृतौ । अस्य दर्शनस्य अनुसारेण जगत् अनादिकालात् एवमेव निरन्तरम् प्रवहत् वर्तते,

भविष्यति च प्रवहत् वर्तिष्यते । अत्र जीवात्मनाम् सत्ता स्वीक्रियते । तेषाम् परमम् लक्ष्यम् च स्वर्गः मन्यते यश्च वेदविहितकर्मानुष्ठानसाध्यः वर्तते । वेदान्तदर्शनम् मूलतः तत् वर्तते यत् प्राचीनासु उपनिषत्सु प्रतिपादितम् अस्ति । अस्य उपनिषत्प्रतिपादितम् स्वरूपम् पूर्वम् प्रदर्शितम् ।[1] पुनः अस्य स्वरूपस्य मीमांसायाः परम्परा प्रवृत्ता अभवत् । अस्यामेव परम्परायाम् वर्तमानानि ब्रह्मसूत्राणि सन्ति । ब्रह्मसूत्रैः उपनिषदाम् समन्वयात्मिकाम् मीमांसाम् कृत्वा तत्प्रतिपादिताः दार्शनिकाः विचारधाराः एकस्य समन्वितस्य उपपन्नस्य च दर्शनस्य—वेदान्तदर्शनस्य—रूपे प्रस्तुताः । अत्र आगत्य वेदान्तदर्शनम् अपि मीसांसात्मकम् जातम्, मीमांसादर्शनेन च सह अस्मिन् रूपे समानतन्त्रम् अभवत् यत् उभयत्र अपि श्रुतिमीमांसा वर्तते । यत्र मीमांसादर्शने ब्राह्मणात्मकश्रुतिप्रतिपादितकर्मणः मीमांसा वर्तते, तत्र वेदान्तदर्शने उपनिषदात्मकश्रुतिप्रतिपादितब्रह्मणः मीमांसा वर्तते । ब्रह्मसूत्राणाम् अनुसारेण वेदान्तदर्शनस्य यत् स्वरूपम् प्रतीयते तत् प्रायः पूर्वप्रदर्शितेन औपनिषददर्शनस्य स्वरूपेण एव समानम् अस्ति । तेषाम् अपि अनुसारेण ब्रह्म जगतः अभिन्ननिमित्तोपादानकारणम् अस्ति, यतो हि तत् स्वम् जगद्रूपे परिणमयति । तत् एकम् नित्यम् व्यापकम्, स्वतन्त्रम्, स्वाभाविकरूपेण सगुणम् च चेतनम् तत्त्वम् अस्ति । प्रत्यक्षगोचरम् जगत् सत्यम् अस्ति । जीवाः ब्रह्मणः स्वरूपतः भिन्नाः अपि सन्तः तदात्मकाः, फलतश्च तदंशाः सन्ति । ब्रह्मप्राप्तिः जीवानाम् परमम् लक्ष्यम् अस्ति, यच्च ब्रह्मज्ञाने साध्यम् अस्ति । ब्रह्मसूत्रानन्तरम्, उपनिषदाम् ब्रह्मसूत्राणाम् च भाष्याणाम् परम्परा प्रवृत्ता । विभिन्नैः भाष्यकारैः उपनिषत्सु प्रतिपादितम् ब्रह्मसूत्रेषु च मीमांसितम् वेदान्तदर्शनम् विभिन्नरूपेषु प्रस्तुतम् । फलतः अस्य दर्शनस्य अद्वैत-विशिष्टाद्वैत-द्वैताद्वैत-द्वैत-शुद्धाद्वैत-अचिन्त्याद्वैतादयः विभिन्नाः वादाः जाताः, येषाम् दर्शनम् विभिन्नेषु उपनिषद्भाष्येषु ब्रह्मसूत्रभाष्येषु च अथ च तदाश्रितेषु प्रकरणग्रन्थेषु कर्तुम् शक्यते ।

**(ई) अवशिष्टानि दर्शनानि**—अवशिष्टेषु दर्शनेषु जैनदर्शनस्य मुख्यः सिद्धान्तः स्याद्वादः अस्ति यदनुसारेण वस्तु अनेकान्तम् अनेकात्मकम् वा अस्ति । वस्तु प्रमुखतः जीवाजीवभेदेन द्विविधम् अस्ति । जीवाः चेतनाः मध्यमपरिमाणयुक्ताः अर्थात् देहपरिमाणकाः सन्ति । अजीवेषु पुद्गलाः मुख्याः सन्ति, ये च द्विविधाः सन्ति—अणुरूपाः संघातरूपाश्च । इदम् जगत् मुख्यतः अणुरूपपुद्गलसंघातरूपम् एव अस्ति । प्रमुखतः सम्यग्दर्शन-सम्यग्ज्ञान-सम्यक्चारित्रेतिरत्नत्रयम् मोक्षसाधनम् अस्ति, सिद्धशिलाप्राप्तिः एव मुक्तिः अस्ति, यत्र परमा शान्तिः अनुभूयते । इदम् दर्शनम् मुख्यतः आचारमीमांसाप्रधानम् अस्ति ।

---

१—'औपनिषदम् दर्शनम्' इतिशीर्षके निबन्धे ।

बौद्धदर्शनम् अपि मूलतः आचारमीमांसाप्रधानम् आसीत्, किन्तु स्वविकसितरूपे तत् तत्त्वमीमांसाप्रधानम् अपि जातम्। इदम्, यथा च अत्रैव पूर्वम् उक्तम्, वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिकेतिचतुर्विधम् अस्ति। चतुर्विधस्य अपि अस्य संक्षिप्तः परिचयः अस्मिन् श्लोके अतीव सौष्ठवेन सह दत्तः वर्तते—

मुख्यो माध्यमिको विवर्तमखिलं शून्यस्य मेने जगत्,
योगाचारमते तु सन्ति मतयस्तासां विवर्तोऽखिलः।
अर्थोऽस्ति क्षणिकस्त्वसावनुमितो बुद्ध्येति सौत्रान्तिकः,
प्रत्यक्षं क्षणभङ्गुरं च सकलं वैभाषिको भाषते।

अर्थात् वैभाषिकः आन्तरम् बाह्यम् च वस्तु प्रत्यक्षम् क्षणिकम् च मन्यते, किन्तु सौत्रान्तिकः इदम् सकलम् क्षणिकम् मन्यमानः अपि प्रत्यक्षम् न मन्यते, अपि तु बुद्ध्या अनुमेयम् मन्यते। योगाचारः बाह्यम् वस्तु न मन्यते, अपि तु केवलम् क्षणिकम् विज्ञानम् एव सत् मन्यते, अन्यत् सर्वम् रज्जौ सर्पवत् तस्य विवर्तम् मन्यते। माध्यमिकस्तु सर्वम् शून्यस्य एव विवर्तम् मन्यते अर्थात् तदनुसारेण सर्वम् शून्यम् एव अस्ति।

एतेषु चतुर्विधेषु ये बाह्यार्थसत्ताम् मन्यन्ते ते ताम् परमाणूनाम् समुदायरूपाम् सङ्घातरूपाम् वा मन्यन्ते। बौद्धानाम् परमम् लक्ष्यम् निर्वाणम् अस्ति यच्च सम्यग्ज्ञानादिभिः साध्यम् अस्ति। अनात्मवादः नैरात्म्यवादः वा बौद्धदर्शनस्य प्रमुखः सिद्धान्तः अस्ति।

चार्वाकदर्शनम् तु बहोः कालात् प्रायः नष्टप्रचारम् एव जातम्। अस्य साहित्यम् अपि न उपलभ्यते। यत्र-कुत्रचित् ग्रन्थेषु अस्य यः कश्चन संकेतः प्राप्यते तदनुसारेण इदम् देहम् एव आत्मानम् मन्यते, कामम् विषयभोगम् वा एव पुरुषार्थम् मन्यते, मरणमेव च मोक्षम् मन्यते। यद्यपि अस्य दर्शनस्य एषाम् सिद्धान्तानाम् अप्रत्यक्षरूपेण अनुसरणम् तु अद्य बहुभिः क्रियते, किन्तु तथापि एकस्य दर्शनस्य रूपे तस्य प्रत्यक्षम् अनुसरणम् प्रायः क्रियमाणम न वर्तते।

आगामिकानि पाशुपतपाञ्चरात्रादीनि दर्शनानि प्रायः भक्तिप्रधानानि आचारप्रधानानि च सन्ति। पाशुपतदर्शने पशुपतिः सर्वोच्चः प्राप्यश्च अस्ति, पाञ्चरात्रदर्शने च भगवान् वासुदेवः परात्परः परमप्राप्यश्च अस्ति।

अस्तु! एवम् विभिन्नानि भारतीय र्शनानि स्वकीयैः विभिन्नैः सिद्धान्तैः विराजमानानि सन्ति सदैव जगत्कल्याणाय तत्पराणि वर्तन्ते।

२८

## भारतीयदर्शनसाहित्यम्

१—प्रास्ताविकम् विभाजनम् च—भारतीयदर्शनसाहित्यम् स्वरूपे अतीव व्यापकम् परिमाणे च अतीव विशालम् विपुलम् वा अस्ति। भारतस्य मनीषा अस्मिन् साहित्ये पूर्णतः अभिव्यक्ता वर्तते। भारतीयदर्शनसाहित्यस्य इदम् एकम् प्रमुखम् वैशिष्टयम् अस्ति यत् सुदूरात् प्राचीनकालात् आरभ्य अद्यावधि तस्य परम्परा विविधरूपेषु प्रवर्तमाना अविच्छिन्ना वर्तते। भारतीयदर्शनसाहित्यम् मुख्यतः द्विधा विभज्यमानम् अस्ति—वैदिकपरम्परानुयायि तदितरत् च। वैदिकपरम्परानुयायि दर्शनसाहित्यम् पुनः द्विविधम् अस्ति—मूलतः वैदिकपरम्परानुयायि, विकसितरूपे वैदिकपरम्परानुयायि च। किन्तु यतः वैदिकपरम्परानुयायिनि दर्शनसाहित्ये अनेकदा इदम् कथनम् अतीव कठिनम् भवति यत् अमुकम् दर्शनम् तत्साहित्यम् वा मूलतः वैदिकपरम्परानुयायि आसीत्, विकसितरूपे वा तादृशम् अभवत्, अतः यद्यपि इदम् विभाजनम् अधिकम् स्पष्टम् नास्ति, तथापि एतादृशः अपि विचारः यदा-कदाचित् दर्शनालोचकैः दर्शनसाहित्यसमालोचकैः वा क्रियते एव।

मूलतः वैदिकपरम्परानुयायि दर्शनसाहित्यम प्रकारान्तरेण पुनः अनेकधा विभक्तुम् शक्यते, यथा—श्रौतम् सहित्यम्, स्मार्तम् साहित्यम्, भाष्यात्मकम् व्याख्यात्मकम् वा साहित्यम्, प्रकरणग्रन्थात्मकम् च साहित्यम्। अत्र स्मार्तम् साहित्यम् द्विधा विभक्तुम् शक्यते—पद्यात्मकम् स्मार्तम् साहित्यम्, सूत्रात्मकम् स्मातम् साहित्यम् च। अत्रापि पद्यात्मकम् स्मार्तम् साहित्यम् द्विधा विभक्तुम् शक्यते—स्मृत्यात्मकम् पुराणोतिहासात्मकम् च।

विकसितरूपे वैदिकपरम्परानुयायि दर्शनसाहित्यम् मुख्यतः तान्त्रिकम् आगमिकम् वा अस्ति यत् बहुभिः विद्वद्भिः मूलतः वैदिकपरम्परानुयायि न मन्यते, अपितु स्वकीये विकसितरूपे तादृशम् जातम् मन्यते। इदम् आगमिकम् दर्शनसाहित्यम् सूत्रात्मकम् पद्यात्मकम् च वर्तते। वैदिकपरम्परानुयायिनः दर्शनसाहित्यात् इतरत् दर्शनसाहित्यम् मुख्यतः चार्वाकदर्शनसाहित्यम्, जैनदर्शनसाहित्यम्, बौद्धदर्शनसाहित्यम् च अस्ति।

एवम् भारतीयदर्शनसाहित्यम् विविधरूपम् व्यापकम् च वर्तते । अत्र निम्नरूपेण अस्य अतिसंक्षिप्त एव परिचयः दातुम् शक्यते—

२—**श्रौतम् दर्शनसाहित्यम्**—भारतीयदर्शनसाहित्ये इदम् प्राचीनतम् साहित्यम् अस्ति । इदम् मन्त्रब्राह्मणात्मके श्रुतिवाङ्मये, यस्मिन् मन्त्राः, ब्राह्मणानि, आरण्यकानि, उपनिषदश्च समाविशन्ति, इतस्ततः विविधरूपेषु विकीर्णम् अस्ति । अस्य साहित्यस्य प्राचीनतमाः अंशाः ऋग्वेदस्य विभिन्नानि नासदीयादीनि दार्शनिकानि सूक्तानि सन्ति । अस्य साहित्यस्य प्रमुखम् प्रतिनिधित्वम् विभिन्नाः प्राचीनाः उपनिषदः कुर्वन्ति, यत्र श्रौतीनाम् दार्शनिकविचारधाराणाम् अन्तिमम् विकसितम् रूपम् प्राप्यते । ईशकेन-कठ-प्रश्न - मुण्डक - माण्डूक्य-तैत्तिरीय - ऐतरेय-छान्दोग्य-बृहदारण्यक-कौषीतकि-मैत्रायणी-तैत्तिरीयनारायण-श्वेताश्वतरादयः उपनिषदः दार्शनिकदृष्ट्या प्रामाणिकत्वदृष्ट्या च प्रमुखाः मन्यन्ते ।

३—**स्मार्तम् पद्यात्मकम् दर्शनसाहित्यम्**—अस्य साहित्यस्य पद्यात्मकम् रूपम् विभिन्नासु स्मृतिषु, विभिन्नेषु पुराणषु महाभारते च बहुषु स्थलेषु विकीर्णम् वर्तते । अत्र विभिन्नानाम् दार्शनिकविचारधाराणाम् दर्शनम् भवति, यासाम् च समन्वय एव अस्य पद्यात्मकस्मार्तदर्शनसाहित्यस्य प्रमुखम् वैशिष्टयम् वर्तते । अस्य साहित्यस्य उज्ज्वलम् रत्नम् 'श्रीमद्भगवद्गीता' अस्ति या महाभारतस्य अष्टादशाध्यात्मकः अंशः अस्ति । महाभारते अन्यानि अपि एतादृशानि अनेकानि स्थलानि सन्ति, यत्र दार्शनिकविचारधाराः तरङ्गिताः सन्ति । 'श्रीमद्भागवतपुराणम्' अपि अनेकेषु स्थलेषु सरसायाम्, किन्तु सहैव गम्भीरायाम् शैल्याम् दार्शनिकान् सिद्धान्तान् प्रतिपादयति । महाभारते पुराणेषु च वैदिकपरम्परानुयायिनीभिः दार्शनिकविचारधाराभिः सह आगमिकीनाम् दार्शनिकविचारधाराणाम् समन्वयः अपि वर्तते । यदवधि स्मृतीनाम् सम्बन्धः अस्ति, तत्र प्रायः एतादृशः समन्वयः नास्ति, किन्तु तत्र पुराणेतिहासवत् एव सृष्टयादिप्रक्रियावर्णने सांख्यदर्शनस्य मान्यताः प्रामुख्येन परिगृहीताः वर्तन्ते । सांख्यदर्शनस्य च सम्बन्धे केषाञ्चित् विदुषाम् विचारः अस्ति यत् तत् मूलतः वैदिकपरम्परायाः बहिरेव उद्भूतम्, पश्चाच्च तस्य सम्बन्धः वैदिकपरम्परया जातः, केषाञ्चित् विदुषाम् मान्यता अस्ति यत् तत् ऋग्वेदीयनासदीयसूक्तादीनाम् 'नासदासीत् नो सदासीत्', 'आनीदवातं स्वधया तदेकम्', 'तम आसीत्तमसागूढमग्र इत्यादिवचनानि आधारीकृत्य अस्तित्वम् प्राप्नोत्, अन्येषाञ्च विदुषाम् मतम् अस्ति यत् तत् उपनिषद्भ्यः अनन्तरम् तासाम् एव काश्चन मान्यताः आधारीकृत्य उद्भूतम् स्वतन्त्ररूपेण च विकसितम् अभवत् । सांख्यस्य 'षष्टितन्त्रम्' अपि यत् कैश्चित् स्मृतिः अपि अमन्यत, स्मार्तदर्शनसाहित्यस्य अन्तः समायाति, किन्तु

तत् इदानीम् न उपलभ्यते, अतः निश्चितरूपेण कथयितुम् न शक्यते यत् तत् पद्यात्मकम् आसीत् सूत्रात्मकम् वा।

**४—स्मार्तम् सूत्रात्मकम् दर्शनसाहित्यम्**—स्मार्तस्य दर्शनसाहित्यस्य सूत्रात्मकम् रूपम् षड्दर्शनसूत्रेषु उपलभ्यते। एषु सूत्रेषु प्रतिपादितानि दर्शनानि स्वकीये व्यवस्थितरूपे उपस्थितानि भवन्ति। एषु उपलब्धानि षडध्यायात्मकानि सांख्यसूत्राणि महर्षिकपिलप्रणीतानि मन्यन्ते, किन्तु विद्वद्भ्यः तानि कापिलानि प्राचीनानि च न प्रतीयन्ते। सांख्यस्य द्वितीयः संक्षिप्तः सूत्रग्रन्थः 'तत्त्वसमासः' इति नाम्ना प्रसिद्धः अस्ति। चतुरध्यायात्मकानि योगसूत्राणि पातञ्जलानि मन्यन्ते। पञ्चाध्यायात्मकानि न्यायसूत्राणि महर्षिगौतमप्रणीतानि मन्यन्ते। दशाध्यायात्मकानि वैशेषिकसूत्राणि काणादानि सन्ति। द्वादशाध्यायात्मकानि पूर्वमीमांसासूत्राणि जैमिनीयानि सन्ति, चतुरध्यायात्मकम् संकर्षणकाण्डम् अपि पूर्वमीमांसया सम्वद्धम् अस्ति। चतुरध्यायात्मकानि उत्तरमीमांसासूत्राणि शारीरकमीमांसासूत्राणि वा बादरायणप्रणीतानि सन्ति। एतानि 'वेदान्तसूत्राणि' अपि उच्यन्ते, किन्तु एषाम् प्रमुखम् प्रसिद्धम् च अभिधानम् 'ब्रह्मसूत्राणि' इति अस्ति। ऐषाम् प्रणेता बादरायणः महाभारतकर्त्तुः वेदव्यासात् भिन्नः पुरुषः अस्ति।[1] सूत्रात्मके दर्शनसाहित्ये ब्रह्मसूत्राणि प्रमुखानि बहुलप्रचाराणि च सन्ति।

**५—भाष्यात्मकम् साहित्यम्**—भाष्यात्मकम् व्याख्यात्मकम् वा दर्शनसाहित्यम् मुख्यतः षड्दर्शनसूत्रभाष्यरूपम् अस्ति। भाष्यात्मके दर्शनसाहित्ये वैशेषिकसूत्राणाम् प्रशस्तपादभाष्यम्, वात्सायनप्रणीतम् न्यायसूत्रभाष्यम्, मीमांसासूत्राणाम् शाबरभाष्यम्, योगसूत्राणाम् व्यासभाष्यम्, इति भाष्याणि प्राचीनानि सन्ति। तदनु विभिन्नानि उपलब्धानि ब्रह्मसूत्रभाष्याणि आयान्ति। ब्रह्मसूत्राणाम् भाष्यसम्पत्तिः विपुला वर्तते। उपलब्धेषु ब्रह्मसूत्रभाष्येषु शाङ्करभाष्यम् प्राचीनतमम् अस्ति। विभिन्नेषु ब्रह्मसूत्रभाष्येषु शाङ्करभाष्यम् रामानुजभाष्यम् च प्रमुखे दार्शनिकदृष्टया महत्त्वपूर्णे च स्तः। सांख्यसूत्राणाम् विज्ञानभिक्षुप्रणीतम् भाष्यम् अस्ति यच्च अर्वाचीनम् एव अस्ति।

एतेषाम् विभिन्नानाम् भाष्याणाम् अनेकाः टीकाः अपि सन्ति यासु योगसूत्रव्यासभाष्यस्य वाचस्पतिप्रणीता 'तत्त्ववैशारदी', ब्रह्मसूत्रशाङ्करभाष्यस्य वाचस्पतिनैव प्रणीता 'भामती', ब्रह्मसूत्ररामानुजभाष्यस्य 'श्रुतिप्रकाशिका' च प्रमुखाः सन्ति। षड्दर्शनसूत्रेषु तद्भाष्येषु च विभिन्नाः वृत्तिवार्तिकग्रन्थाः सन्ति, येषु उद्योतकरस्य न्यायवार्तिकम्, कुमारिलभट्टस्य श्लोकवार्तिकम्

---

१—अस्मिन् विषये द्रष्टव्यः—'ब्रह्मसूत्रों के वैष्णवभाष्यों का तुलनात्मक अध्ययन' इतिनामकः ग्रन्थः (डा० रामकृष्ण आचार्य), पृ० १३-१७।

च प्रमुखे स्तः। बोधायनस्य प्रसिद्धा ब्रह्मसूत्रवृत्तिः केषुचित् ग्रन्थेषु चर्चिता उद्धृता च अपि इदानीम् न उपलभ्यते।

**६—प्रकरणग्रन्थात्मकम् दर्शनसाहित्यम्**—अस्मिन् साहित्ये दर्शन-सम्बन्धिनः असंख्याः प्रकरणग्रन्थाः सन्ति येषु सांख्यकारिका, तर्कभाषा, तर्कसंग्रहः, भाषापरिच्छेदः, अर्थसंग्रहः, वेदान्तपरिभाषा, पञ्चदशी, वेदान्त-सारः, यतीन्द्रमतदीपिका, इत्यादयः ग्रन्थाः बहुलप्रचाराः सन्ति।

**७—आगमिकम् दर्शनसाहित्यम्**—अस्मिन् साहित्ये विभिन्नाः शैवा-गमाः, वैष्णवागमाः, शाक्तागमाश्च आधारभूताः सन्ति येषाम् आधारे विभि-न्नानाम् ग्रन्थानाम् रचना जाता। आगमिकम् दर्शनसाहित्यम् अपि अतीव विपुलम् अस्ति।

**८—इतरत् दर्शनसाहित्यम्**—वेदपरम्परानुयायिनः दर्शनसाहित्यात् इतरस्मिन् दर्शनसाहित्ये चार्वाकदर्शनसम्बन्धि साहित्यम् तु लुप्तम् एव जातम्। तत्सम्बन्धीनि कतिचित् सूत्राणि एव इतस्ततः उद्धृतानि उपल-भ्यन्ते। जैनदर्शनसाहित्यम् बौद्धदर्शनसाहित्यम् च विपुलम् उपलभ्यते। जैनदर्शनस्य आधारभूताः ग्रन्थाः विभिन्नाः जैनागमाः सन्ति, ये प्रायः प्राकृतभाषायाम् निबद्धाः सन्ति। आगमानन्तरम्, येषाम् विभिन्नानाम् ग्रन्थानाम् रचना जाता तेषु उमास्वातिनः तत्त्वार्थसूत्रम्, कुन्दकुन्दाचार्यस्य नियमसारादयश्च ग्रन्थाः प्रमुखाः सन्ति। मल्लिषेणस्य 'स्याद्वादमञ्जरी' अपि प्रसिद्धा रचना अस्ति, या च हेमचन्द्रस्य 'अन्ययोगव्यवच्छेदद्वात्रिंशिका' ग्रन्थस्य टीका अस्ति।

बौद्धदर्शनस्य आधारभूताः ग्रन्थाः 'पिटक' इत्याख्यया प्रसिद्धाः सन्ति। एते संख्यायाम् त्रयः मन्यन्ते। एतदनन्तरम्, अनेकेषाम् ग्रन्थानाम् रचना अभवत्, येषु बहवः मूलरूपे रूपान्तरेऽपि वा उपलभ्यन्ते अपि नहि। उपल-ब्धेषु अनेकेषु ग्रन्थेषु असंगस्य महायानसूत्रालंकारः, वसुबन्धोः अभिधर्मकोशः, विज्ञप्तिमात्रतासिद्धिश्च, नागार्जुनस्य माध्यमिककारिका च, इत्यादयः ग्रन्थाः प्रमुखाः प्रसिद्धाश्च सन्ति।

अस्तु! एवम् विविधरूपासु विभिन्नासु धारासु प्रवहत् भारतीयदर्शन-साहित्यम् विश्वस्य विभिन्नरुचीन् मनीषिजनान् आनन्दयत् वर्तते, स्वप्रतिपाद्य-गौरवात् हेतोश्च भारतीयसाहित्ये एव नहि, अपि तु समग्रे विश्वसाहित्ये एकम् उच्चम् महत्त्वपूर्णम् च स्थानम् धत्ते। एतदेव कारणम् यत् अस्य भूयसः अंशस्य विश्वस्य विभिन्नासु भाषासु अनुवादः जातः, जायमानश्च वर्तते, येन अस्य गौरवपूर्णस्य साहित्यस्य तत्त्वम् भारतात् बहिरपि अनुभूतम् स्यात्।

वस्तुतः भारतीयदर्शनसाहित्यम् भारतीयमनीषायाः एकम् अप्रतिमम् प्रमाणपत्रम् अस्ति, येन सह भारतम् उन्नतमस्तकम् सत् विश्वस्य समक्षम् स्थातुम् शक्नोति।

## ३०

# ब्रह्मसूत्राणि

१—महत्त्वम्—भारतीयदर्शनसाहित्ये ब्रह्मसूत्राणाम् महत्त्वपूर्णम् स्थानम् अस्ति एतानि ब्रह्मसूत्राणि एव सन्ति यानि उपनिषत्प्रतिपादितम् वेदान्तम्, यस्य भारतीये दार्शनिकचिन्तने चिरकालात् एव प्रमुखम् स्थानम् वर्तते स्म, सहैव च यः सदैव भारतस्य राष्ट्रीयम् दर्शनम् मन्यते स्म, मीमांसितम् कृत्वा तम् एकस्य व्यवस्थितस्य उपपन्नस्य च दर्शनस्य रूपे उपस्थापितवन्ति। स्वकीयानाम् असाधारणीनाम् विशेषतानाम् वशात् एतानि यत्र स्वरचनाकालात् एव अध्ययनस्य, अध्यापनस्य, चर्चनस्य च विषयत्वम् आवहन्ति, तत्र एतानि भारतीयदर्शनसाहित्यस्य एकस्याः प्रमुखायाः धारायाः उपजीव्यानि मूलस्रोतांसि च अपि सन्ति। पूर्वाचार्यैः एतेषाम् उपरि वृत्तयः, वाक्यानि, वार्तिकानि, भाष्याणि च प्रस्तुतानि, येषाम् च उपरि पुनः अनेकानि व्याख्यानानि, अनुव्याख्यानानि, साररूपाः विविधाः प्रकरणग्रन्थाश्च प्रस्तुताः अभवन्, अद्यावधि च प्रस्तूयमानाः सन्ति। एतदतिरिक्तम्, स्वतन्त्ररूपेण अपि ब्रह्मसूत्राणाम् यत् अध्ययनम् आधुनिककाले जातम् अस्ति, तस्य फलस्वरूपम् अनेके ग्रन्थाः प्रस्तुताः सन्ति। इत्थम्, ब्रह्मसूत्ररूपात् मूलस्रोतसः दार्शनिकसाहित्यस्य या धारा प्रसूता अभवत् या च 'ब्रह्मसूत्रसाहित्य-धारा' इतिनाम्ना अभिहिता कर्तुम् शक्यते, सा भारतीयदर्शनसाहित्यस्य एकम् महीयांसम् भागम् व्याप्तम् कुर्वती वर्तते। अस्याः धारायाः अन्तर्गच्छत् साहित्यम्—ब्रह्मसूत्रसाहित्यम्—भारतीयदर्शनसाहित्ये स्वकीयम् एकम् स्वतन्त्रम् महत्त्वपूर्णम् स्थानम् धत्ते। अस्य साहित्यस्य सृष्टौ भारतस्य उच्चकोटिकाः मनीषिणः स्वम् योगम् दत्तवन्तः सन्ति। महामनीषिणः उच्चकोटिकाः दार्शनिकाश्च सन्तः अपि ते स्वकीयायाः प्रतिभायाः परिचयम् ब्रह्मसूत्रव्याख्यानरूपे दत्त्वा स्वान् कृतकृत्यान् मतवन्तः सन्ति। इदम् साहित्यम् स्वकीयया विविधतया गम्भीरतया, मनीषाप्रसूततया च स्वस्वरूपे तु स्वगम् महत्त्वपूर्णम् अस्ति एव, किन्तु सहैव स्वमूलस्रोतोभूतानाम् ब्रह्मसूत्राणाम् असाधारणम महत्त्वम्

व्यापकम् उपजीव्यत्वम् च सहैव च भारतीयदर्शनसाहित्ये तेषाम् गौरवपूर्णम् स्थानम् आञ्जस्येन एव अनुभूतम् कारयति।

२—**व्यापकमान्यता**—दार्शनिकम् जगत् अनेन तथ्येन पूर्णतया परिचितम् अस्ति यत् भारतस्य सर्वेषु श्रुतिपरम्परानुयायिषु मतेषु ब्रह्मसूत्राणाम् व्यापकमान्यता प्राप्ता अस्ति। एतानि मतानि स्वकीये स्वरूपे, कामम्, परस्परम् विभिन्नताम् विरोधम् वा रक्षेयुः, किन्तु यदवधि ब्रह्मसूत्राणाम् सम्बन्धः अस्ति, एषाम् प्रामाण्यम् सर्वेषाम् समानरूपेण मान्यम् अस्ति, एतानि सर्वैः स्वकीयानि उपजीव्यानि कृतानि सन्ति। केन अपि श्रुतिपरम्परावादिना मतेन, कामम्, तस्य केचन सिद्धान्ताः सूत्रप्रतिकूलाः स्युः, ब्रह्मसूत्राणि उपेक्षितुम् साहसम् न कृतम्, अपि तु सर्वैः एषाम् समक्षम् नतमस्तकैः सद्भिः परस्परप्रतियोगितापूर्वकम् इदम् प्रदर्शयितुम् यत्नः कृतः अस्ति यत् तेषाम् सिद्धान्ताः सर्वथा सूत्रानुकूलाः सन्ति, अथ च अन्यानि तदितराणि गतानि सूत्रप्रतिकूलानि सन्ति। ब्रह्मसूत्राणाम् रचनायाः अनन्तरम्, येन केनापि मतेन, कामम्, तत् मूलतः वैदिकम् स्यात् वैदिकेतरम् वा, श्रुतिपरम्परावादिनाम् भारतीयानाम् समक्षम् इदम् प्रदर्शयितुम् प्रयत्नः कृतः यत् तस्य सिद्धान्ताः सर्वथा श्रुत्यनुकूलाः सन्ति चेत् तेन स्वकीयाम् इमाम् श्रुत्यनुकूलताम् प्रमाणयितुम् स्वकीया सूत्रानुकूलता प्रायः अवश्यम् प्रदर्शिता। विभिन्नैः मतैः स्वम् सूत्रानुकूलम् प्रदर्शयितुम् ये प्रयत्नाः कृताः, ते विभिन्नानाम् ब्रह्मसूत्रभाष्याणाम् रूपे जनतायाः समक्षम् दृष्टिगोचराः अभवन्, अथ च स्वतन्त्रम् व्यक्तित्वम् रक्षितुम् इच्छुकेन प्रायः प्रत्येकम् मतेन कस्याञ्चित् अपि स्थितौ समागत्य स्वकीयम् एकम् ब्रह्मसूत्रभाष्यम् प्रस्तुतम्। यथा च पूर्वम् उक्तम्,[1] उपलब्धेषु ब्रह्मसूत्रभाष्येषु शाङ्करभाष्यम् प्राचीनतमम् अस्ति, अथ च विभिन्नेषु ब्रह्मसूत्रभाष्येषु शाङ्करभाष्यम् रामानुजभाष्यम् च प्रमुखे दार्शनिकदृष्ट्या महत्त्वपूर्णे च स्तः। अस्तु! एतेषाम् विभिन्नानाम् ब्रह्मसूत्रभाष्याणाम् रचनायाः उक्तया मूलभूतया प्रेरणया इदम् आञ्जस्येन एव अवगतम् भवति यत् श्रुतिपरम्परावादिषु भारतीयेषु ब्रह्मसूत्राणि प्रति कियान् श्रद्धाभावः सम्मानम् च वर्तते स्म, यद्वशात् विभिन्नानि मतानि स्वकीयाम् ब्रह्मसूत्रानुकूलताम् प्रदर्शयितुम् वाध्यानि अभवन्, अन्यथा स्वकीयाम् श्रुत्यनुकूलताम् प्रदर्शयितुम् तेषाम् कृते स्वस्वमतानुकूलानि श्रुतिभाष्याणि एव पर्याप्तानि भवितुम् अशक्नुवन्। किन्तु तादृशैः श्रुतिभाष्यैः संतुष्टानि न भूत्वा तानि यत् ब्रह्मसूत्राक्षरेषु न्यूनाधिकरूपे क्लिष्टकल्पनाम् कृत्वा ब्रह्मसूत्रभाष्यरचनायाः प्रयासम् कृतवन्ति सन्ति तेन इदमेव प्रतीयते यत् ब्रह्मसूत्राणाम् अस्तित्वम् प्राप्तवताम् सताम् तैः एतावत् सम्मानम् प्राप्तम्

---

१—पृष्ठ १२५।

यत् केवलम् ब्रह्मसूत्राणि एव श्रुतीनाम् वास्तविकसिद्धान्तानाम् प्रकाशकानि अमन्यन्त, फलतश्च एतेषाम् समर्थनस्य प्राप्त्या विना किमपि मतम् इमम् विश्वासम् कर्तुम् न अशक्नोत् यत् श्रुतिपरम्परावादो समाजः तत् श्रुत्यनुकूलम् मन्तुम् प्रस्तुतः भविष्यति। एतेन तथ्येन श्रुतिपरम्परावादिनि समाजे ब्रह्मसूत्राणाम् व्यापिका मान्यता पूर्णतया हृदयंगमा भवति।

३—रचयिता रचनाकालश्च—ब्रह्मसूत्राणाम् रचयिता सर्वसम्मत्या आचार्यः बादरायणः मन्यते, किन्तु अयम् बादरायणः कः, कदा कुत्र च अजनि, इतिप्रकारकः अस्य कोऽपि परिचयः प्राप्तः नास्ति। परम्परानुसारेण वेदव्यसनकर्त्ता महाभारतप्रणेता च वेदव्यासः कृष्णद्वैपायन एव ब्रह्मसूत्रकारः मन्यते, तस्य एव च एकम् अपरम् अभिधानम् 'बादरायणः' इति कथ्यते, किन्तु इदम् तथ्यानुकूलम् न प्रतीयते। फलतश्च आधुनिकानाम् दर्शनसाहित्यसमालोचकानाम् विदुषाम् बहुमतम् इदम् न मन्यमानम् सत् ब्रह्मसूत्रकारम् बादरायणम् वेदव्यासात् भिन्नम् पुरुषम् मन्यते।[1]

विभिन्नानाम् तथ्यानाम् आधारे ब्रह्मसूत्राणाम् रचनाकालः महाभाष्यकारात् पतञ्जलेः किञ्चित् अनन्तरम् ईसातः पूर्वस्याः द्वितीयशताब्द्याः अन्तिमे भागे प्रतीयते।[2]

४—स्वरूपम्—ब्रह्मसूत्राणाम् स्वरूपम् मुख्यतः मीमांसात्मकम् वर्तते। एतैः उपषिदाम् समन्वयात्मिकाम् सोपपत्तिकाम् च मीमांसाम् कृत्वा औपनिषदम् तत्त्वज्ञानम् एकस्य समन्वितस्य, व्यवस्थितस्य, उपपन्नस्य च दर्शनस्य रूपे प्रस्तुतम्। एतैः औपनिषदस्य जगन्मूलतत्त्वस्य 'ब्रह्मणः' स्वरूपम् मुख्यतः मीमांसितम्। ब्रह्मसूत्राणाम् अस्य मीमांसात्मकस्य स्वरूपस्य सूचना तृतीयचतुर्थाभ्याम् 'शास्त्रयोनित्वात्, तत्तु समन्वयात्' इत्याभ्याम् सूत्राभ्याम् एव प्राप्ता भवितुम् आरभते। मीमांसात्मकस्वरूपात् हेतोः ब्रह्मसूत्राणि 'उत्तरमीमांसासूत्राणि', 'शारीरकमीमांसासूत्राणि', 'ब्रह्ममीमांसासूत्राणि' इत्यपि च अभिधीयन्ते, एकस्य शास्त्रस्य रूपे स्वप्रतिपाद्याधारे वा च, संक्षेपतः सूत्रपदविरहितैः 'उत्तरमीमांसा', 'शारीरकमीमांसा', 'ब्रह्ममीमांसा' इत्यादिभिः अभिधानैः अपि अभिधीयन्ते, 'शारीरकमीमांसासूत्राणि' इत्यादिषु अभिधानेषु च समस्यमानेषु मध्यमपदलोपिनि समासे कृते 'मीमांसा' पदलोपे संक्षेपतः 'शारीरकसूत्राणि' 'ब्रह्मसूत्राणि', इत्यादिरूपे अपि अभिधीयन्ते।

---

१—अस्मिन् विषये द्रष्टव्यः—'ब्रह्मसूत्रों के वैष्णव भाष्यों का तुलनात्मक् अध्ययन' इतिनामकः ग्रन्थः (डा० रामकृष्ण आचार्य), पृष्ठ १३-१७।

२—द्रष्टव्यः—स एव (उक्तः ग्रन्थः), पृष्ठ १७-२१।

यतो हि ब्रह्मसूत्राणि औपनिषदस्य प्रतिपाद्यस्य मीमांसाम् कृत्वा, स्वदृष्ट्या निष्कृष्टम् तत्त्वम् प्रस्तूय, तत् स्वाभिः उपपत्तिभिः अपि समर्थयन्ति, अतः तेषाम् स्वरूपम् दर्शनात्मकम् अपि अस्ति।

५—**परिमाणम् प्रतिपाद्यविषयश्च**—ब्रह्मसूत्राणि चतुरध्यायात्मकानि सन्ति। तेषाम् प्रत्येकम् अध्याये पादचतुष्टयम् अस्ति। प्रत्येकम् पादे च विभिन्न-संख्याकानि अधिकरणानि सन्ति, अधिकरणेषु च विभिन्नसंख्याकानि सूत्राणि सन्ति। विभिन्नभाष्यकाराणाम् अनुसारेण अधिकरणानाम् सूत्राणाम् च संख्या समाना न सती परस्परभिन्ना अस्ति। पुनरपि अधिकरणानि न्यूना-धिकरूपेण प्रायः सार्द्धैकशतम् मन्यन्ते, सूत्राणि च प्रायः सार्द्धपञ्चशतानि मन्यन्ते।

ब्रह्मसूत्राणाम् प्रथमः अध्यायः 'समन्वयाध्यायः' इति उच्यते, यत्र विभिन्नानाम् उपनिषद्वाक्यानाम् समन्वयः कृतः वर्तते। द्वितीयः अध्यायः 'अविरोधाध्यायः' इति उच्यते, यत्र विभिन्नप्रकारकः अविरोधः प्रदर्शितः अस्ति, सहैव वेदान्तेतराणाम् मतानाम् समालोचनम् अपि अत्र अस्ति। तृतीयः अध्यायः 'साधनाध्यायः' इति कथ्यते, यत्र मुख्यतः मुक्तिसाधनस्य चर्चा अस्ति। चतुर्थश्च अध्यायः 'फलाध्यायः' इति अभिधीयते, यत्र मुक्तिरूपम् फलम् चर्चितम् अस्ति। ब्रह्मसूत्राणि 'अथातो ब्रह्मजिज्ञासा' इतिरूपे ब्रह्मणः ज्ञानाय प्रवृत्तानि भवन्ति, 'अनावृत्तिशशब्दादनावृत्तिशशब्दात्' इति रूपे ब्रह्मज्ञानस्य अनावृत्त्यपराभिधानमुक्तिरूपम् फलम् च प्रदर्श्य विरमन्ति।

६—**सिद्धान्ताः**—विभिन्नैः ब्रह्मसूत्रभाष्यकारैः आचार्यैः ब्रह्मसूत्राणाम् सिद्धान्ताः विभिन्नरूपेषु प्रदर्शिताः सन्ति। एतेषु रूपेषु परस्परभिन्नत्वम् एव नास्ति, अपि तु परस्परविरुद्धत्वम् अपि अस्ति। पुनरपि सर्वेषाम् अत्र ऐक-मत्यम् अस्ति यत् ब्रह्म एव स्वाभाविकरूपेण औपाधिकरूपेण वा तथ्यभूतस्य अतथ्यस्य वा जगतः अभिन्ननिमित्तोपादानकारणरूपम् केवलनिमित्तकारण-रूपम् अधिष्ठानरूपम् वा मूलम् अस्ति। स्वस्वरूपे स्वान्तर्यामिरूपे वा ब्रह्मणः प्राप्तिः—निरन्तरा निर्बाधा च साक्षात् अनुभूतिः—जीवस्य लक्ष्यम् अस्ति, साधनरूपम् ब्रह्मज्ञानम् एव च अस्य लक्ष्यस्य साधनम् अस्ति।

जगत् वस्तुतः अस्ति न वा, जगतः कारणम् ब्रह्म निर्गुणम् अस्ति सगुणम् वा, ब्रह्म स्वाभाविकरूपेण जगत्कारणम् अस्ति औपाधिकरूपेण वा, ब्रह्म जगतः केवलनिमित्तकारणम् अस्ति, अभिन्ननिमित्तोपादानकारणम् वा, अथवा अधिष्ठानरूपम् कारणम् आसी, जीवः ब्रह्मणः स्वरूपतः भिन्नः अस्ति न वा, निर्गुणब्रह्मज्ञानम् मोक्षसाधनम् अस्ति, सगुणब्रह्मज्ञानम् वा, मुक्तिः कैवल्यरूपा अस्ति, सायुज्यरूपा वा, इत्यादीनाम् अनेकेषाम् आधारभूतानाम् सिद्धान्तानाम् विषये भाष्यकारेषु वैमत्यम् वर्तते। किन्तु स्वतन्त्राय निरपेक्षाय

ब्रह्मसूत्राध्ययेऽत्रे तु अत्र विषये ब्रह्मसूत्राणाम् इदम् मतम् प्रतीयते यत् जगत् वस्तुत: अस्ति, जगत: कारणम् ब्रह्म सगुणम् अस्ति, ब्रह्म स्वाभाविकरूपेण जगत्कारणम् सत् जगत: अभिन्ननिमित्तोपादानकारणम् अस्ति। जीव: ब्रह्मण: स्वरूपत: भिन्न: अस्ति, किन्तु यत: स सर्वथा तदायत्त: तदन्तर्यामिकश्च अस्ति, अत: शास्त्रदृष्टया तदभिन्न: अस्ति। यत: ब्रह्म प्राकृतिकगुणराहित्य-दृष्टया निर्गुणम् सत् अपि ज्ञानानन्दादिस्वाभाविकगुणयुक्तत्वेन सगुणम् एव अस्ति, अत: सगुणब्रह्मज्ञानम् एव मोक्षसाधनम् अस्ति। मुक्तौ जीव: यस्माद् बन्धनभूतात् पदार्थात् विमुच्य केवल: भवति, तस्य दृष्टया एव मुक्ति: कैवल्य-रूपा कथयितुम् शक्यते, किन्तु तस्मात् विमुच्य यत् (ब्रह्म) प्राप्नोति तस्य दृष्टया सा स्वस्वरूपानुभवपूर्वकस्वान्तर्यामिब्रह्मानुभवरूपे सायुज्यरूपा एव अस्ति। सूत्राक्षरेषु अर्थसम्बन्धिन्या: स्वकल्पनाया: विमुक्तेषु कृतेषु, तानि स्वत एव एतान् अर्थान् प्रकाशयन्ति।[1]

अस्तु! किमपि ब्रह्मसूत्राणाम् अभिमतम् स्यात्, किन्तु यत: तानि सर्वै: अपि श्रुतिपरम्परावादिभि: आश्रीयन्ते, समानरूपेण च सम्मान्यते, अत: तेषाम् व्यापकम् महत्त्वम् तु स्वत एव प्रकाशितम् भवति, फलतश्च तेषाम् अध्ययनीयत्वम् मननीयत्वम् च अकथनेन एव स्पष्टतया सिद्धम् अस्ति।

---

१—अत्र विषये द्रष्टव्य:—'दी वेदान्त' (डा० वी० एस० घाटे), 'दी वेदान्त-सूत्रास् विद द कमैण्टरी आफ शंकर, प्रथम भाग, भूमिका (जार्ज थीबो), 'ब्रह्मसूत्रों के वैष्णव भाष्यों का तुलनात्मक अध्ययन' (डा० रामकृष्ण आचार्य) इत्यादिका: ग्रन्था:।

३१

# इतिहासपुराणम्

**१—प्रास्ताविकम्**—भारतीयवाङ्मये वैदिकवाङ्मयात् अनन्तरम् इतिहासपुराणात्मकम् वाङ्मयम् अपि अतीव सम्मान्यम् महत्त्वपूर्णम् च वाङ्मयम् अस्ति । यथा च 'इतिहासो वेदः[१]', 'पुराणोवेदः[२] एवमिमे सर्वे वेदा निर्मिताः.......सेतिहासाः सान्वाख्यानाः सपुराणा'[३], 'यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसीरिति'[४], 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम्'[५], 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः'[६] इत्यादिभिः स्वयम् वैदिकवाङ्मयस्य एव वचनैः ज्ञायते, इतिहासपुराणात्मकम् वाङ्मयम् अतीव प्राचीनम् वाङ्मयम् अस्ति । इतिहासः पुराणम् च वेदमन्त्रेषु ब्राह्मणग्रन्थेषु, आरण्यकेषु उपनिषत्सु च अपि उपलभ्येते, ब्राह्मणादीनाम् च वाक्यैः उक्तप्रकारेण निर्दिश्येते अपि । वैदिकवाङ्मये उपलभ्यमानम् निर्दिश्यमानम् च एतत् वैदिकम् इतिहासपुराणम् एव पश्चात् व्याख्यायमानम् पल्लवितीक्रियमाणम् च सत् शनैःशनैः सम्वर्धमानम् उपलब्धस्य विशालस्य इतिहासपुराणसाहित्यस्य रूपे समागतवत् अस्ति ।

**२—महत्त्वम्**—यतः उपलब्धम् इतिहासपुराणात्मकम् वाङ्मयम् वैदिकम् वाङ्मयम् आधारीकृत्य तद्व्याख्यानरूपे पल्लवितम् जातम्, अतः वेदार्थावगमाय अस्य वाङ्मयस्य महती उपयोगिता अस्ति । यथा च 'इति-

---

१-२—शतपथब्राह्मणम् १३।४।३ ।

३—गोपथब्राह्मणम् १।२६ ।

४—तैत्तिरीयारण्यकम् २।६ ।

५—छान्दोग्योपनिषत् ७।१।२ ।

६—बृहदारण्यकोपनिषत् २।४।१० ।

हासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति',
इत्यादिभिः वचनैः ज्ञायते, भारतीयपरम्परायाम् इतिहासपुराणयोः विषये
इयम् मान्यता स्वीकृता वर्तते यत् एताभ्याम् वेदानाम् उपबृंहणम् कृत्वा एव
तेषाम् अर्थः अधिगन्तव्यः, न तु स्वतन्त्ररूपेण तेषाम् अर्थः कल्पनीयः । य
अल्पश्रुतः अर्थात् अश्रुतधर्मशास्त्रेतिहासपुराणादिकः सन् धर्मशास्त्रेतिहास-
पुराणादिभिः वेदानाम् उपबृंहणम् अकृत्वा एव तेषाम् अर्थम् कल्पयति
तस्मात् वेदाः अस्मिन् रूपे बिभ्यति यत् सः तान् यस्मिन् कस्मिन् रूपे
व्याख्याय तान् प्रतरिष्यति अर्थात् यथातथरूपेण तेषाम् अर्थम् न प्रकाशयि-
ष्यति । अतः धर्मशास्त्रेतिहासपुराणादिभिः वेदानाम् उपबृंहणम् कार्यमेव ।
उपबृंहणम् च, यथा च ब्रह्मसूत्रभाष्यकारेण रामानुजाचार्येण उक्तम्
'विदितसकलवेदतदर्थानाम् स्वयोगमहिमसाक्षात्कृतवेदतत्त्वार्थानाम् वाक्यै
स्वावगतवेदवाक्यार्थव्यक्तीकरणम्'[1] भवति । एतेन विदितम् भवति यत
धर्मशास्त्रेतिहासपुराणवाक्यानि विदितसकलवेदतदर्थानाम् स्वयोगमहिमसा-
क्षात्कृतवेदतत्त्वार्थानाम् मनीषिणाम् ऋषीणाम् वाक्यानि सन्ति । एते
ऋषयः किञ्चित् वेदभाष्यम् न रचयित्वा धर्मशास्त्रेतिहासपुराणरूपे एव
वेदान् व्याख्यातवन्तः । उक्तरूपस्य उपबृंहणस्य अनिवार्यता अपि रामानुजा-
चार्येण अस्मिन् रूपे प्रतिपादिता यत् 'सकलशाखागतस्य वाक्यार्थस्याल्प-
भागश्रवणाद् दुरवगमत्वेन तेन विना निश्चयायोगाद् उपबृंहणम् हि
कार्यमेव' ।[2]

अस्तु ! इत्थम् यतः उक्तरूपेण उपबृंहणेन विना वेदार्थः याथातथ्येन
अधिगतः न भवति, अतः तदर्थम् इतिहासपुराणयोः महती उपयोगिता अस्ति,
सहैव यतः ताभ्याम् सामन्यतः समग्रस्य विश्वस्य सृष्टेः विशेषतश्च भारत-
वर्षस्य सर्वविधम् इतिहासपुराणम् अवगम्यते, अतः तदवगमाय अपि तयोः
महती उपयोगिता वर्तते । वस्तुतः भारतीयवाङ्मये तयोः महत्त्वपूर्णम्
स्थानम् अस्ति, अत एव च भारतीयपरम्परायाम् तयोः परमम् महत्त्वम
स्वीक्रियमाणम् अपि वर्तते ।

**३—स्वरूपपरिचयः**—इतिहासः पुराणम् च परस्परम् घनिष्ठरूपेण
सम्बद्धे तु वर्तेते एव, किन्तु वस्तुतस्तु ते एकस्य एव वस्तुनः रूपद्वयवत् वर्तेते ।
अनयोः द्वयोः अपि मूलम् स्वरूपम् वृत्तात्मकम् वृत्तवर्णनात्मकम् वा अस्ति,
किन्तु यत्र कालापेक्षया इतिहासः समीपवर्तिनि काले वृत्तायाः घटनायाः
वर्णनरूपः अस्ति, तत्र पुराणम् इतिहासापेक्षया दूरवर्तिनि काले वृत्तायाः
घटनायाः वर्णनरूपम् भवति । फलतः यत्र इतिहासः स्वस्य समीपवर्तिकाल-
वृत्तघटनावर्णनात्मकत्वात् यावत् यथार्थरूपेण प्रतीयते, तत्र पुराणम् स्वस्य

---

१-२—ब्रह्मसूत्ररामानुजभाष्यम् १।१।१।

दूरवर्तिकालवृत्तघटनावर्णनात्मकत्वात् तावत् यथार्थरूपेण न प्रतीयते। अपरतश्च यत्र इतिहासस्य समीपवर्तिकालसम्बद्धत्वात् तत्र काल्पनिकतत्त्व-संमिश्रणस्य अवसरः न्यूनः अस्ति, तत्र पुराणस्य दूरवर्तिकालसम्बद्धत्वात् तादृशः अवसरः अधिकः अस्ति। अत एव भारतीयपरम्परायाम् पुराणापेक्षया इतिहासस्य अभ्यर्हितत्वम् सम्यान्यतरत्वम् वा स्वीक्रियते। इत्थम् यत् वृत्तम् एकस्मिन् काले इतिहासः अस्ति, तदेव पर्याप्ते काले व्यतीते सति पुराणम् जायते। एतदतिरिक्तम्, यत्र इतिहासः मानववृत्तेन मुख्यतः सम्बद्धः भवति, तत्र पुराणम् मानववृत्तेन सह समग्रजागतिकपदार्थानाम् जगदतीततत्त्वानाम् च अपि वृत्तेन सम्बद्धम् भवति। यतः जगति इतिहासः निरन्तरम् अभिनव-रूपेण समागत्य व्यतीतः सन् पुराणम् भवति, अतः पुराणम् निरन्तरम् सम्वर्धमानम् भवति। यतः उक्तप्रकारेण इतिहासे पुराणे च केवलम् रूपगतम् अन्तरम् वर्तते, अतः स्वभावतः इतिहासे पुराणस्य मिश्रणम् अस्ति, पुराणे च इतिहासस्य मिश्रणम् उपलभ्यते, अथ च इदानीम् तु इतिहासस्य अपि अन्तः मन्यमानानाम् ग्रन्थानाम् दूरवर्तिकालसम्बद्धत्वस्य जातत्वाद् हेतोः पुराणत्वम् एव जातम् अस्ति।

पुराणम् च 'पुराणं पञ्चलक्षणम्' इत्यादिवाक्यानुसारेण पञ्चलक्षणम् मन्यते। पुराणस्य पञ्चलक्षणानि तु 'सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च। सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत्,'।[1] इत्यादिवाक्यानुसारेण सर्गः अर्थात् सृष्टिः, प्रतिसर्गः अर्थात् प्रलयः, वंशः अर्थात् देवादीनाम् वंशः, मन्व-न्तराणि अर्थात् विभिन्नानाम् मनूनाम् कालस्य वृत्तानि, वंशानुचरितम् अर्थात् राजवंशचरितम् च सन्ति। श्रीमद्भागवते 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः' (२।१०।१) इति रूपेण दश लक्षणानि मतानि यानि च प्रायः उक्तानाम् एव पञ्चानाम् लक्षणानाम् समासव्यासरूपाणि सन्ति, फलतः तेषु एव अन्तर्भवितुम् शक्नुवन्ति।

**४—साहित्यम्**—उपलब्धम् इतिहासपुराणात्मकम् साहित्यम् अतीव विशालपरिमाणम् सत् संस्कृतसाहित्यस्य महान्तम् भागम् व्याप्नुवत् वर्तते। भारतीयपरम्परानुसारेण इतिहासवाङ्मयस्य अन्तः रामायणम् महाभारतम् च मन्येते। अनयोः रामायणस्य कर्त्ता आदिकविः वाल्मीकिः, महाभारतस्य च कर्त्ता वेदव्यासः कृष्णद्वैपायनः मन्यते। पुराणवाङ्मयस्य च अन्तः 'महापुरा-णान्येतानि ह्यष्टादश महामुने। तथा चोपपुराणानि मुनिभिः कथितानि च।'[2] इत्यादिवाक्यानुसारेण ब्रह्मपुराणादीनि अष्टादश पुराणानि एतावन्ति एव च उपपुराणानि मन्यन्ते। पुराणानाम् अपि कर्त्ता वेदव्यासः कृष्णद्वैपायनः मन्यते।

---

१—विष्णुपुराणम् (षडंशम्) ३।६।२५।

२—विष्णुपुराणम् (षडंशम्) ३।६।२४-२५।

'एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः। तत्राष्टादशसाहस्रं श्रीभागवत-मिष्यते।'[1] इतिप्रकारेण केवलम् ब्रह्मपुराणादिमहापुराणवाङ्मयम् एव चतुर्लक्षश्लोकपरिमाणम् अस्ति, उपपुराणवाङ्मयम् च एतदतिरिक्तम् अस्ति। अष्टादशसु महापुराणेषु उक्तलक्षणानुसारेण विभिन्नानाम् विषयाणाम् वर्णनम् अस्ति, यत्र च वृत्तवर्णनम् मुख्यताम् धत्ते। यथा च अत्रैव पूर्वम् उक्तम्, इतिहासपुराणयोः सामान्यतः वेदोपबृंहणभूतत्वे अपि पुराणापेक्षया इतिहासस्य अधिकम् प्राबल्यम् प्रामाणिकत्वम् च भारतीयपरम्परायाम् स्वीकृतम् वर्तते। इतिहासस्य अन्तः समागच्छतोः रामायणमहाभारतयोः रामायणम् रामकालीनम् महाभारतम् च कृष्णकालीनम् भारतीयम् इतिहासम् वर्णयति। भारतीये इतिहासे रामकृष्णयोः महत्त्वपूर्णम् स्थानम् भारतीयसंस्कृतौ च अनयोः प्रभावः सुविदितः अस्ति। फलतश्च एताभ्याम् सम्बद्धयोः रामायण-महाभारतयोः ऐतिहासिकवाङ्मयरूपे सांस्कृतिकवाङ्मयरूपे च परमम् महत्त्वम् स्वत एव स्पष्टम् अस्ति।'

रामायणमहाभारतयोः रामायणम् चतुर्विंशतिसहस्रश्लोकात्मकम्, महाभारतम् च लक्षश्लोकात्मकम् अस्ति। महाभारतसमम् विशालपरिमाणम् ऐतिहासिकम् महाकाव्यम् भारते तु अस्ति एव नहि, अन्यत्र अपि कस्मिन् अपि देशे न श्रूयते। यद्यपि भारतीयपरम्परायाम् महाभारतापेक्षया रामायणम् अधिकम् सम्मान्यम् प्रामाणिकम् च स्वीक्रियते, तथापि एकस्य उक्त-परिमाणकस्य विशालस्य विश्वकोषस्य रूपे महाभारतस्य यद् वैशिष्ट्यम् अस्ति तत् न केवलम रामायणे, अपि तु इतिहासपुराणात्मके वाङ्मये कुत्रापि न उपलभ्यते। वस्तुतः स्वप्रतिपाद्यबाहुल्यदृष्ट्या तु महाभारतम् केवलम् स्वयम् एव स्वकीयम् उपमानम् अस्ति। इतिहासपुराणात्मकस्य साहित्यस्य इदम् स्वकीयम् असाधारणम् वैशिष्ट्यम् अस्ति यत् एतस्य प्रणेतृभिः सदैव विभिन्नेषु कालेषु विभिन्नानि रूपाणि धारयन्ती भारतीयसंस्कृतिः सूक्ष्म-दृष्ट्या समन्वयात्मिकया च भावनया अवलोकिता, तदनुरूपम् च तैः अस्मिन् साहित्ये तस्याः चित्रणम् कृत्वा सांस्कृतिकः समन्वयः स्थापितः।

अस्तु ! एवम् इतिहासपुराणात्मकम् वाङ्मयम् वेदोपबृंहणरूपे, सहैव च एकस्य विशालपरिमाणकस्य, धार्मिकस्य, ऐतिहासिकस्य, सांस्कृतिकस्य च वाङ्मयस्य रूपे संस्कृतवाङ्मये अतीव उच्चम् महत्त्वपूर्णम् च स्थानम् धत्ते। यतः एतत् वाङ्मयम् उपजीव्य बहोः कथाकाव्यनाटकाद्यात्मकस्य संस्कृत-साहित्यस्य सृष्टिः जाता अस्ति, अतः उपजीव्यरूपे अपि इदम् महत्त्वपूर्णम् वाङ्मयम् अस्ति। अस्य वाङ्मयस्य गरिमा अस्य अनुशीलनेन एव अनुभूतः कर्तुम् शक्यः, अतः इदम् मनोयोगेन सह अनुशीलनीयम् अस्ति।

---

१—श्रीमद्भागवतम् १२।१३।९।

## ३२

# आदिकविः वाल्मीकिः तस्य रामायणम् च

**१—वाल्मीकेः आदिकवित्वम्**—इतिहासमूर्द्धन्येन स्वकीयेन रामायणाख्येन सांस्कृतिकेन महाकाव्येन लौकिकसंस्कृतसाहित्यस्य आधारशिलाम् संस्थापयितुः प्राचेतसापराख्यस्य महर्षेः वाल्मीकेः समुज्ज्वलम् नाम सर्वथा एव श्रद्धासम्मानसहितस्मरणस्य वस्तु वर्तते। लौकिकसंस्कृतसाहित्यस्य आधारशिलायाःसंस्थापनात् हेतोः अयम् प्रातःस्मरणीयः मुनिः भारतीयपरम्परायाम् 'आदिकविः' इति प्रसिद्धः अस्ति। यद्यपि 'ऋक्षोऽभूद् भार्गवस्तस्माद् वाल्मीकिर्योऽभिधीयते'[1] इति वचनानुसारेण रामायणकर्त्ता अयम् विश्वविश्रुतः मुनिः महाभारतकर्त्तुः प्रसिद्धात् वेदव्यासात् कृष्णद्वैपायनात् अपि पूर्वम् जातेषु वेदव्यासेषु अन्यतमः मन्यते, किन्तु तस्य व्यासः इति 'वेदव्यासः' इति वा विरुदम् प्रसिद्धम् नास्ति, तस्य तु परम्परायाम् 'आदिकविः' इत्यनेनैव विरुदेन अलङ्कारः कृतः वर्तते, यतो हि अन्यसाधारणात् वेदव्यासेतिविरुदात् अनन्यसाधारणम् आदिकवीतिविरुदम् उत्कृष्टतरम् गौरवशालितरम् च वर्तते। इदम् सुविदितम् अस्ति यत् संस्कृतभाषायाम् निबद्धम् वाङ्मयम् प्रमुखतया भागद्वये विभक्तम् वर्तते। तयोः एकः भागः वैदिकम् वाङ्मयम्, अपरश्च लौकिकम् वाङ्मयम् अभिधीयते। वेदचतुष्टयात्मकम् वैदिकम् वाङ्मयम् केन प्रणीतम् इति तु विशिष्टतः अद्यापि न ज्ञायते, किन्तु लौकिकस्य वाङ्मयस्य प्रवर्त्तकः महर्षिः वाल्मीकिः एव वर्तते, इत्यत्र परम्परायाम् कोऽपि सन्देहः विवादः वा नास्ति। फलतश्च वाल्मीकिना प्रणीतम् रामायणाख्यम् काव्यम् आदिकाव्यम्, वाल्मीकिश्च स्वयम् संस्कृतसाहित्यस्य आदिकविः मन्यते। अत एव स्वयम् रामायणे अपि विलिखितम् वर्तते—

'आदिकाव्यमिदं चार्षं पुरा वाल्मीकिना कृतम्।'

भगवतः वाल्मीकेः पूर्वम् छन्दोबद्धम् वाङ्मयम् वेदरूपम् एव आसीत्,

---

१—विष्णुपुराणम् (षडंशम्) ३।३।१८।

ातिरिक्तम् किमपि छन्दोबद्धम् नासीत्। महर्षिणा वाल्मीकिना एव 'आम्ना-
ादन्यत्र नूतनश्चन्दसामवतारः', कृतः। वेदात्मके वाङ्मये वैदिकानि छन्दाँसि
युक्तानि सन्ति। महर्षिणा वाल्मीकिना वैदिकानि छन्दाँसि एव आधारम् कृत्वा
रिष्कृतरूपे लौकिकानाम् छन्दसाम् आविर्भावः कृतः। तेषाम् छन्दसाम्,
त्रापि च मुख्यतः अनुष्टुभः माध्यमेन महर्षिणा भारतीयसंस्कृतेः गौरवपूर्णम्
र्वप्रथमम् एव प्रवाहितम्, येन सः आदिकविरूपे सर्वेषाम् परवर्तिनाम्
ंगीतम् भारतीयानाम् कवीनाम् पथप्रदर्शकः गुरुः जातः, सहैव च भारती-
यायाः साधारणजनतायाः अपि सः श्रद्धेयः मुनिः अभवत्। अस्य महर्षेः
जीवनस्य विषये अधिकम् ज्ञातम् नास्ति। अस्य विषये अनेकाः जनश्रुतयः
प्रचलिताः वर्तन्ते, किन्तु तासाम् बह्व्यः प्रामाणिक्यः न प्रतीयन्ते। पौराणिक-
प्रसिद्ध्यनुसारेण अयम् रामकालीनः मन्यते, अस्य आश्रमः तमसातीरे आसीत्,
अनेन रामपुत्रयोः कुशलवयोः तयोः बाल्यकाले पालनम् कृतम्। सीतया
स्ववनवासकाले कंचित् कालम् तस्य आश्रमे निवासः अपि कृतः। संभवतः
अयम् कुलपतिः आसीत्। यथा च अस्य नाम्ना सूच्यते, अस्य जनकः
उत्पत्तिस्थानम् वा वल्मीकः मन्यते। वाल्मीकेः अपरम् अभिधानम् 'प्राचेतसः'
इति प्रसिद्धम् अस्ति। अयम् भृगुकुलोत्पन्नत्वात् 'भार्गवः' इत्यपि उक्तः
अस्ति।

२—आदिकाव्यस्य रामायणस्य आविर्भावः—भारतीयसाहित्यस्य
इतिहासे तत् गौरवपूर्णम् शुभम् दिनम् चिरस्मरणीयत्वेन स्थास्यति, यस्मिन्
दिने पवित्रसलिलायाः तमसायाः शुभे तटे तपस्यतः भगवतः वाल्मीकेः मुखात्
हृदयविदारकम् दृश्यम् दृष्ट्वा करुणामयी इयम् तेजस्वती दिव्या वाग्धारा
स्वत एव प्रस्फुटिता—

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥"

इमाम् वाग्धाराम् प्रवहन्तीम् निरीक्ष्य भगवतः वाल्मीकेः शिष्यास्तु
विस्मिताः बभूवुः एव, महर्षिः अपि स्वयम् विस्मितः बभूव। इयम् एव सूक्ष्मा
वाग्धारा सा विशाला पवित्रभावसलिला रामायणस्वरूपा सरिता जाता,
यस्याम् शीलशक्तिसौन्दर्याणाम् समन्वितम् दिव्यम् चित्रम् प्रतिबिम्बितम्
वर्तते। यतोहि पौराणिकप्रसिद्ध्यनुसारेण वाल्मीकिः रामकालीनः मन्यते,
अतः स्पष्टम् अस्ति यत् तद्द्वारा रामायणस्य आविर्भावः रामकाले जातः।
इत्थम् रामायणम् रामकालीनत्वात् कृष्णकालीनात् महाभारतात् प्राचीनतरम्
वर्तते। यतो हि महाभारते रामायणमाश्रित्य रामोपाख्यानम् वर्णितम् वर्तते,
अतोऽपि रामायणस्य महाभारतात् प्राचीनतरत्वम् सिद्ध्यति। किन्तु पुनरपि
इदम् निश्चयरूपेण कथयितुम् न शक्यते यत् वर्तमानरूपे उपलब्धस्य
चतुर्विंशतिसहस्रश्लोकात्मकस्य विशालस्य रामायणस्य कियान् अंशः

वाल्मीकिकर्तृकः फलतश्च महाभारतात् पूर्ववर्ती अस्ति। रामायणस्य रचना-कालस्य विषये आधुनिकानाम् विभिन्नानाम् विदुषाम् विभिन्नानि मतानि सन्ति यानि अत्र स्थानाभावात् समीक्षितुम् न शक्यन्ते। रामायणस्य त्रिचतुराणि संस्करणानि प्राप्यन्ते, येषु परस्परम् पाठभेदः अपि दृश्यते।

**३—रामायणस्य वैशिष्ट्यम्**—इदम् सुविदितम् अस्ति यत् उदात्तम् मङ्गलमयम् च रामचरितम् आश्रित्य भारतीयसंस्कृतेः यादृशम् समुज्ज्वलम् मनोहारि च च स्वाभाविकम् चित्रम् अस्मिन् वाल्मीकिमुनिविरचिते रामायणाख्ये सांस्कृतिके महाकाव्ये अङ्कितम् समुपलभ्यते, तादृशम् विश्वस्य कस्यचित् अपि देशस्य कस्मिन् अपि महाकाव्ये तत्रत्यायाः संस्कृतेः चित्रम् दुर्लभम् वर्तते। आदर्शभूतम् मानवचरित्रम् कीदृशम् भवति, इतिजिज्ञासाम् आदाय यदि विश्वस्य महाकाव्यानि निरीक्षितानि स्युश्चेत् इदम् रामायणम् ताम् जिज्ञासाम् यथा शान्ताम् तृप्ताम् च करिष्यति, न तथा अन्यत् किमपि महाकाव्यम् निखिलेऽपि विश्वे कर्त्तुम् शक्नोति। मानवजीवनस्य सत्यम् शिवम् सुन्दरम् यथा रामायणे स्फुटितम् वर्तते, तथा अन्यत्र दुर्लभम् एव।

भारतीयसमाजस्य भारतीयपरिवारस्य च विभिन्नानाम् सदस्यानाम् परस्परम् कीदृशः व्यवहारः आदर्शरूपे भवति, इदम् अत्र रामायणे स्पष्टतया प्रकाशितम् वर्तते। अस्मात् प्रेरणाम् आदाय जनाः मङ्गलमयम्, शान्तिमयम्, सर्वहितकरम् च जीवनम् यापयित्वा स्वस्य स्वपरिवारस्य, स्वसमाजस्य, स्वराष्ट्रस्य, निखिलस्य विश्वस्य च हितम् साधायितुम् शक्नुवन्ति। इत्थम्, सामान्यतः विश्वस्य दृष्ट्या विशेषतश्च भारतस्य दृष्ट्या रामायणम् एकम् जीवनादर्शप्रकाशकम् महामहिमशालि सांस्कृतिकम् महाकाव्यम् वर्तते।

वस्तुतः, उदात्तस्य वर्णनीयविषयस्य गौरवेण, विभिन्नानाम् पात्राणाम् सफलेन चित्रणेन घटनानाम् वैचित्र्यपूर्णेन विन्यासेन, भाषायाः सारल्यपूर्णेन प्रवाहान्वितेन च सौष्ठवेन, प्राञ्जलायाः रचनाशैल्याः सारल्यसहितेन माधुर्येण, प्राकृतिकदृश्यानाम् च भावपूर्णेन संश्लिष्टेन चित्रजातेन, विविधानाम् रसानाम् रसान्वितानाम् भावानाम् च स्पष्टेन मार्मिकेन च अभिव्यञ्जनेन, विचाराणाम् च गाम्भीर्येण, स्वाभाविकानाम् अलङ्काराणाम् सुविन्यासेन, परिष्कृतानाम् माधुर्ययुक्तानाम् च छन्दसाम् संगीतेन समन्वितम् इदम् आदिकाव्यम् न केवलम् भारतीये वाङ्मयेः अपि तु सकले अपि विश्ववाङ्मये समुज्ज्वलम् रत्नम् इव देदीप्यमानम् वर्तते।

**४—रामायणस्य व्यापकम् उपजीव्यत्वम्**—इदम् गौरवपूर्णम् महाकाव्यम् न केवलम् संस्कृतभाषायाः साहित्यस्य, अपि तु सर्वासाम् अपि भारतीयानाम् भाषाणाम् साहित्यस्य समुपजीव्यम् वर्तते। भारतीयपरम्परानुसारेण रामायणम् इतिहाससाहित्यस्य अन्तः मन्यते। अस्य साहित्यस्य अन्तः रामायणातिरिक्तम महाभारतम अपि मन्यते। इदम द्वयम अपि भारतीय-

साहित्यस्य उपजीव्यम् अस्ति, किन्तु यतो हि रामायणम् महाभारतात् प्राचीनतरम् सत् अनेकेषु अंशेषु अस्य अपि उपजीव्यम् अस्ति, अतः रामायणस्य उपजीव्यत्वदृष्ट्या सर्वप्रमुखम् स्थानम् अस्ति। संस्कृतभाषायाम् अनेकानि अद्भुतरामायणादीनि रामायणानि रघुवंशोत्तररामचरितादीनि काव्यनाटकादीनि च इदम् एव ऐतिहासिकम् आदिकाव्यम् आधारम् कृत्वा विरचितानि वर्तन्ते, अन्यासु च विभिन्नासु भारतीयासु भाषासु विरचितानि विभिन्नानि रामचरितमानसादीनि रामायणानि साकेतादीनि विभिन्नानि काव्यनाटकादीनि च इदम् एव मूलम् आश्रित्य अस्तित्ववन्ति वर्तन्ते। न केवलम् वैदिकपरम्परानुयायि साहित्यम्, अपितु बौद्धसाहित्यम् जैनसाहित्यम् च न्यूनाधिकरूपेण रामायणेन प्रभावितं वर्तते। वस्तुतः सर्वस्मिन् अपि भारतीये साहित्ये सर्वस्मिन् अपि च भारतीये लोकजीवने वाल्मीकीयरामायणस्य प्रभावः अतुलितरूपेण गम्भीरः विद्यते। अद्यापि च सः प्रभावः अक्षुण्ण एव विराजते। यथा च पूर्वम् उक्तम्,[1] भारतीयपरम्परायाम् सकले अपि इतिहासपुराणात्मके वाङ्मये रामायणम् सम्मान्यतमम् प्रमाणिकतमम् च स्वीक्रियते। इदम् अपि अस्य परमम् गौरवम् अस्ति।

वस्तुतः, रामायणवर्णितम् रामचरितम् श्रुत्वा जनाः रसप्लाविताः सन्तः आनन्दनिर्भराः भवन्ति, फलतश्च ते प्राचीनकालात् एव तत् न केवलम् श्रुतवन्तः, अपितु विविधेषु रूपेषु तत् गीतवन्तः अभिनीतवन्तश्च, येन रामायणोपजीव्यम् विपुलम् साहित्यम् अद्यावधि सृष्टम् जातम्, अथ च इदानीम् अपि सृज्यमानम् वर्तते। जने-जने यत् रामः रमन् वर्तते रामे वा यत् प्रत्येकम् जनः रमन् वर्तते, तत् रामायणहेतुकम् एव अस्ति।

रामायणे यद्यपि विविधानाम् रसानाम् धाराः प्रवहन्त्यः वर्तन्ते, किन्तु तत्र मुख्यतमा धारा करुणरसधारा वर्तते। यथा च ध्वन्यालोककारेण आनन्दवर्धनाचार्येण अपि उक्तम्—

> 'रामयणे हि करुणो रसः स्वयमादिकविना सूचितः
> 'शोकः श्लोकत्वमागतः' इत्येवंवादिना।
> निर्व्यूढश्च स एवं सीताऽत्यन्तवियोगपर्यन्तमेव
> स्वप्रबन्धमुपरचयता।'

रामायणे रामचरितप्रसंगेन अन्येषाम् अपि विविधानाम् विषयाणाम् प्रतिपादनम् वर्तते, येन भारतस्य प्राचीनेन इतिहासेन, तस्य प्राचीनाभिः स्थितिभिः परिस्थितिभिश्च सह भारतीयसंस्कृतेः धर्मदर्शनविज्ञानादयः विविधाः पक्षाः उद्घाटिताः भवन्ति। इदम् अपि रामायणस्य अतिरिक्तम् गौरवम् वितन्वत् वर्तते।

---

१—पृ० १३५

अस्तु ! एतादृशम् इतिहासमूर्धन्यम् अतिरमणीयम् उपजीव्यभूतम् च महामहिमशालि सांस्कृतिकम् आदिकाव्यम् रामायणम् सर्वदा अनुशीलनीयम् अस्ति, तस्य च प्रणेता भगवान् वाल्मीकिः अस्माकम् सर्वेषाम् भारतीयानाम् वन्दनीयः अस्ति—

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ।।
कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् ।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ।।
सदूषणापि निर्दोषा सखरापि सुकोमला ।
नमस्तस्मै कृता येन रम्या रामायणी कथा ।।

यतो हि रामायणे पूतं रामचरितम् वर्णितम् वर्तते, अतः तत्र स्वाभाविकरूपेण अमरकाव्यत्वम् चिरस्थायित्वम् वा वर्तते । अत एव ब्रह्मणा तद्विषये आशासितम्—

'यावत् स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ।।'

## ३३

# वेदव्यासः कृष्णद्वैपायनः

२—'वेदव्यासः' इतिविरुदस्य परिचयः—'वेदव्यासः' इति, संक्षेपतः 'व्यासः' इति वा कस्य अपि व्यक्तिविशेषस्य रूढम् अभिधानम् नाम वा नास्ति, अपि तु वेदानाम् व्यसनकारकाणाम् विभिन्नानाम् विशिष्टानाम् महर्षीणाम् मुनीनाम् वा एकम् सामान्यम् विरुदम् अस्ति। 'वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः। करोति बहुलं भूयो वेदव्यासस्वरूपधृक्। वेदाँस्तु द्वापरे व्यस्य'[१]। 'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने। वेदमेकं सुबहुधा कुरुते जगतो हितः॥'[२] इत्यादिरूपेण इतिहासपुराणादिषु अभिव्यक्तायाः परम्परागतायाः भारतीयमान्यतायाः अनुसारेण प्रत्येकम् द्वापरे युगे भगवदंशावतारः कोऽपि मुनिः महर्षिः वा एकम् वेदम् ऋगवेदादिरूपे चतुर्भेदं करोति। अस्मिन् रूपे च एकस्य समस्तस्य वेदस्य यः मुनिः महर्षिः वा व्यसनम् अर्थात् विभाजनम् विस्तारम् वा करोति, स एव 'वेदव्यासः' इत्यनेन, संक्षेपतः 'व्यासः' इत्यनेन वा विरुदेन विभूषितः भवति। एवम् कोऽपि एकः व्यक्तिविशेष एव 'वेदव्यासः' 'व्यासः' वा नास्ति, अपि तु अद्यावधि अनेके 'वेदव्यासाः' 'व्यासाः' वा भूतवन्तः सन्ति।

भारतीयपरम्परायाः अनुसारेण कालगणनाविधौ युगम् अपि एकम् कालपरिमाणम् मन्यते। सत्य-त्रेता-द्वापर-कलीतिचतुर्युगानि मन्यन्ते। एषु कलियुगम् द्वात्रिंशतसहस्रोत्तरचतुर्लक्षवर्षपरिमितम् मन्यते। अस्य द्विगुणपरिमाणम् द्वापरम्, त्रिगुणपरिमाणम् त्रेतायुगम्, चतुर्गुणपरिमाणम् च सत्ययुगम् मन्यते। चतुर्युगसहस्रपरिमाणम् सृष्टिकर्तुः ब्रह्मणः दिनम् मन्यते। ब्रह्मणः एकस्मिन् दिने चतुर्दश मन्वन्तराणि मन्यन्ते, इत्थम् च प्रत्येकम् मन्वन्तरे चतुर्युगानाम् साधिका एकसप्ततिः भवति। प्रत्येकम् चतुर्युगस्य

---

१—विष्णुपुराणम् (षडंशात्मकम्) ३।२।५७-५८।

२— ,, ,, ,, ३।३।५।

द्वापरे युगे भगवान् विष्णुः वेदव्यासरूपेण अवतीर्य वेदव्यसनम् करोति।[1] एवम्, एकस्मिन् ब्रह्मणः दिने सहस्रम्, एकस्मिन् मन्वन्तरे च एकसप्ततिः वेदव्यासाः भवन्ति। इदानीम् वर्तमाने ब्रह्मणः दिने सप्तमम् वैवस्वतम् मन्वन्तरम् वर्तते। अस्मिन् मन्वन्तरे च इदानीम् अष्टाविंशतितमम् कलियुगम् वर्तते। यतः कलियुगात् पूर्वम् द्वापरम् व्यतीतम् भवति, अतः अस्मिन् वर्तमाने मन्वन्तरे अष्टाविंशतिः द्वापराणि व्यतीतानि जातानि। एवम्, यथा च 'अष्टाविंशतिकृत्वो वै वेदो व्यस्तो महर्षिभिः। वैवस्वतेऽन्तरे तस्मिन् द्वापरेषु पुनःपुनः।'[2] इत्यादिरूपेण पुराणेषु कथितम् अस्ति यत् अस्मिन् वर्तमाने वैवस्वतमन्वन्तरे अपि अष्टाविंशतिः 'वेदव्यासाः' 'व्यासाः' वा जातवन्तः सन्ति, येषाञ्च नामानि पुराणेषु वर्णितानि सन्ति।[3] वर्तमानात् कलियुगात् पूर्वम् यत् द्वापरयुगम् व्यतीतम्, तस्मिन् कृष्णद्वैपायनः, यश्च अत्र चर्चणीयत्वेन अपेक्षितः अस्ति, 'वेदव्यासः' अभवत्। एवम् अयम् अस्मिन् मन्वन्तरे अष्टाविंशतितमः अद्यावधि च अन्तिमः 'वेदव्यासः' अस्ति, अतः इदानीम् केवलम् 'वेदव्यासः' इति कथनेन अपि अस्य एव व्यवहारः बोधश्च भवति। अस्मात् पूर्वम् अन्ये अपि वेदव्यासाः अभवन्। 'ऋक्षोऽभूद् भार्गवस्तस्माद् वाल्मीकिर्योऽभिधीयते'[4] इतिवचनानुसारेण रामायणकर्त्ता आदिकविः वाल्मीकिः अपि वेदव्यासात् कृष्णद्वैपायनात् पूर्वम् एकः वेदव्यासः मन्यते, किन्तु तस्य 'व्यासः' इति विरुदम् प्रसिद्धम् नास्ति, तस्य तु 'आदिकविः' इत्येव विरुदम् प्रसिद्धम् वर्तते।

२—**वेदव्यासस्य कृष्णद्वैपायनस्य परिचयः**—वेदव्यासः कृष्णद्वैपायनः, यश्च केवलम् 'व्यासः' इत्यनेन, 'वेदव्यासः' इत्यनेन वा नाम्ना अपि प्रसिद्धः अस्ति, भारतीयपरम्परायाम् अतीव श्रद्धया सम्मानेन च सह स्मृतः भवति। भारतीयवाङ्मयस्य इतिहासे च अयम् वेदव्यसनरूपे महाविशालकार्यकर्तृत्वाद् पुराणेतिहासप्रणयनरूपे महाविशालवाङ्मयप्रणेतृत्वाच्च हेतोः एकस्य पथिकृतः साहित्यकारस्य अतीव उच्चम् पूज्यम् च स्थानम् अधिकरोति। अयम् महानुभावः 'अवतीर्णो महायोगी सत्यवत्यां पराशरात्।', 'एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात्' इत्यादीनाम् पुराणेतिहासवचनानाम् अनुसारेण पराशरात् मुनेः सत्यवत्याम् जातः। अयम् 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्'[5] इत्यादीनाम् वचनानाम् अनुसारेण भगवदंशा-

---

१—विष्णुपुराणम् (षडंशात्मकम्) ३।२।५७; ३।३।५; ७।

२—,, ,, ,, ३।३।६।

३—,, ,, ,, ३-३।

४—विष्णुपुराणम् (षडंशम्) ३।३।१८।

५—,, ,, ३।४५।

वतारः मन्यते। वेदव्यासस्य पिता पराशरः मुनिः प्रसिद्धस्य वसिष्ठस्य मुनेः पौत्रः, शक्तेश्च पुत्रः आसीत्।[1] अस्य माता सत्यवती मत्स्यगर्भात् उत्पन्ना वसोः पुत्री आसीत्, अतः सा पुराणादिषु 'वासवी' इत्यपि अभिहिता अस्ति। सा एकेन मत्स्यजीविना धीवरेण पालिता आसीत्। पराशरेण सह तस्याः विवाहः न जातः, अपि तु यदा सा कुमारिका आसीत् तदा एव संयोगवशात् पराशरेण सह तस्या. सम्बन्धः जातः। इत्थम् व्यासः कन्यायाम् जातत्वात् कानीनः अस्ति।

व्यासस्य वर्णः कृष्णः आसीत्, अतः तस्य मूलम् अभिधानम् नाम वा 'कृष्णः' इति जातम्। यतः अयम् जातः सन् द्वीपे न्यस्तः, अतः अयम् 'न्यस्तो द्वीपे च यद्बालस्तस्माद् द्वैपायनः स्मृतः।' (म० भा०, आ० प० ६३।८६) इत्यनुसारेण 'द्वैपायनः' इति अभिधीयमानः जातः। एवम् 'कृष्ण-द्वैपायनः' इति अस्य मुख्यम् मूलम् वा नाम अस्ति। पराशरपुत्रत्वात् अयम् 'पाराशर्यः' इति, वासवीत्यपराभिधानसत्यवतीपुत्रत्वाच्च अयम् 'वासवेयः' इति, 'सात्यवतेयः' इति च कथ्यते। 'बादरायणः' इत्यपि अस्य अभिधानम् श्रीमद्भागवतादिषु पुराणेषु कथितम् अस्ति, किन्तु महाभारते अस्य अभिधानस्य चर्चनम् नास्ति, येन प्रतीयते यत् इदम् अभिधानम् अस्य अन्येषु अभिधानेषु पश्चात् संयोजितम् अस्ति। वेदव्यसनकर्तृत्वात् अयम् 'वेदव्यासः' इत्यनेन, संक्षेपतः 'व्यासः' इत्यनेन वा विरुदेन विभूषितः अस्ति। अस्य इदम् विरुदम् भारतीयपरम्परायाम् इयत् व्यापकम् प्रसिद्धम् वा अस्ति यत् इदम् अस्य अपरम् अभिधानम् इव जातम् अस्ति।

वेदव्यासस्य कृष्णद्वैपायनस्य मातुः सत्यवत्याः विवाहः कुरुकुले 'शन्तनुः' इति, शान्तनुः' इति वा नाम धारयित्रा राज्ञेन सह जातः, अतः एतेन कुलेन सह अस्य सम्पर्कः अतिष्ठत्।

**३–वेदव्यासत्वम्**—अयम् कृष्णद्वैपायनः मुनिः, यथा च अत्र एव पूर्वम् उक्तम्, वेदानाम् व्यसनकर्तृत्वात् हेतोः 'ब्रह्मणो ब्राह्मणानां च तथानुग्रह-काङ्क्षया। विव्यास वेदान् यस्मात्स तस्माद् व्यास इति स्मृतः।' (म० भा०, आ० प० ६३।८८) इत्यादीनाम् वचनानाम् अनुसारेण 'व्यासः' इति, 'वेद-'व्यासः' इति वा प्रसिद्धः अभवत्। अस्मात् पूर्वम् ऋगादयः मन्त्राः परस्परम् संकीर्णा एव आसन्, तान् विभज्य तेषाम् पृथक्-पृथक् ऋग्वेदादिरूपे संकलनम् अनेन कृतम्। इदमेव एकम् एतत्कृतम् वेदव्यसनम् अस्ति। अपरम् च एतत्कृतम् वेदव्यसनम् इदम् अस्ति यत् ऋगादिमन्त्रान् ऋग्वेदादिरूपे पृथक्-पृथक् संकलय्य अनेन चत्वारः वेदाः पृथक्-पृथक् स्वेभ्यः चतुर्भ्यः

---

१—वसिष्ठस्य सुतः शक्तिः शक्तिपुत्रः पराशरः। पराशरस्य दायादः कृष्ण-द्वैपायनो मुनिः (म० भा०, शा० प० ३४६।७)।

पैलादिभ्यः शिष्येभ्यः उपदिष्टाः, ये च पुनः स्वशिष्यान् तान् अध्यापयामासुः, येन वेदानाम् शाखाविस्ताररूपम् व्यसनम् जातम् । अस्य द्विविधस्य अपि वेदव्यसनस्य मूलम् कृष्णद्वैपायन एव आसीत्, अतः सः यथार्थत एव 'वेदव्यासः' 'व्यासः' वा आसीत् । वेदव्यासस्य कृष्णद्वैपायनस्य पितरम् पराशरम् यावत् वेदमन्त्राः प्रकाशनम् प्राप्तवन्तः, यतो हि केषाञ्चित् सूक्तानाम् कर्त्ता (परम्परानुसारेण द्रष्टा) ऋषिः पराशरः अपि मन्यते[1], वेदव्यासस्य कृष्णद्वैपायनस्य च माध्यमेन कोऽपि वेदमन्त्रः प्रकाशनम् न प्राप्तवान् । इत्थम् स्पष्टम् अस्ति यत् स्वपितृमाध्यमेन जातात् वेदमन्त्रप्रकाशनात् किञ्चिदेव अनन्तरम् वेदव्यासः उक्तरूपम् वेदव्यसनकार्यम् आरब्धवान् ।

४—**पुराणकर्तृत्वम्**—'अष्टादशपुराणानां कर्त्ता सत्यवतीसुतः' इत्यादीनाम् वचनानाम् अनुसारेण वेदव्यासः कृष्णद्वैपायनः अष्टादशानाम् पुराणानाम् कर्त्ता मन्यते । यथा च 'किञ्चित् पुराणमाचक्षीत' इत्यादिभिः ब्राह्मणवचनैः स्पष्टम् अस्ति, पुराणानि ब्राह्मणग्रन्थकाले अपि आसन् । एतेषाम् मूलानाम् पुराणानाम् संग्रहणम् कृत्वा तदाधारेण च तेषाम् पल्लवितीकरणम् वेदव्यासेन कृष्णद्वैपायनेन कृतम् स्यात्, यथा च 'आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः । पुराणसंहितां चक्रे पुराणार्थविशारदः ।'[2] इत्यादिभिः वचनैः अपि ज्ञायते । किन्तु पुनरपि इदम् निश्चप्रचरूपेण कथयितुम् न शक्यते यत् उपलब्धेषु पुराणेषु कियान् अंशः वेदव्यासकर्तृकः वर्तते ।

५—**महाभारतकर्तृत्वम्**—यथा च 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ।' इत्यादिभिः वचनैः ज्ञायते, वेदव्यासेन कृष्णद्वैपायनेन महाभारतस्य प्रणयनम् कृतम् । इदम् एकम् विशालम् वाङ्मयम् एव अस्ति । यतः कुरुकुलेन वेदव्यासस्य स्वमातृद्वारा सम्बन्धः आसीत्, अतः तेन कुरुकुलचरितम् महाभारतरूपे गीतम् स्यात् । अत्र कुरुकुलचरितेन सह अन्यद् अपि पुराणादिकम् बहु वर्तते । वर्तमानरूपे उपलब्धस्य विशालकायस्य महाभारतस्य कियान् अंशः वेदव्यासकर्तृकः अस्ति, इति निश्चितरूपेण कथयितुम् न शक्यते ।

६—**तथाकथितम् ब्रह्मसूत्रकर्तृत्वम्**—भारतीयपरम्परायाम् इयमपि प्रसिद्धिः वर्तते यत् वेदव्यासेन उपलब्धानाम् ब्रह्मसूत्राणाम् रचना अपि कृता अस्ति, किन्तु, यथा च ब्रह्मसूत्राणाम् अध्ययनेन ज्ञायते, इदम् तथ्यानुकूलम् न प्रतीयते । कामम्, अनेन केषाञ्चित् तेषाम् ब्रह्मसूत्राणाम् रचना कृता अपि

---

१—द्रष्टव्यः—ऋग्वेदः १।६५-७३ ।

२—विष्णुपुराणम् (षष्ठंशम्) ३।६।१५ ।

स्यात्, यानि इदानीम् न उपलभ्यन्ते, किन्तु उपलब्धानि ब्रह्मसूत्राणि एतद्-विरचितानि न प्रतीयन्ते ।[1]

अस्तु ! वेदव्यासेन कृष्णद्वैपायनेन वेदव्यसनस्य रूपे पुराणानाम् महाभारतस्य च प्रणयनस्य रूपे च भारतीयवाङ्मयस्य वैदिके लौकिके च क्षेत्रे अतिमानवम् विपुलम् कार्यम् सम्पादितम्, येन अयम् अस्माकम् सर्वेषाम् श्रद्धया, सम्मानेन, पूज्यभावेन च सह सर्वदा अस्मिन् रूपे वन्दनीयः अस्ति—

नमः सर्वविदे तस्मै व्यासाय कविवेधसे ।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ।।
श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः ।
तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे ।।

---

१—अस्मिन् विषये द्रष्टव्यः—'ब्रह्मसूत्रों के वैष्णव भाष्यों का तुलनात्मक अध्ययन' (डा० रामकृष्ण आचार्य) पृष्ठ १३-१७ ।

## ३४

# महाभारतम्

१—**महत्त्वम्**—इतिहासपुराणात्मके वाङ्मये महाभारतस्य महत्त्वपूर्णम् स्थानम् अस्ति। यथा च पूर्वम् उक्तम्[१], एकस्य विशालपरिमाणकस्य विश्वकोषस्य रूपे महाभारतस्य यद् वैशिष्टयम् वर्तते, तत् इतिहासपुराणात्मके वाङ्मये कुत्रापि न उपलभ्यते। स्वप्रतिपाद्यबाहुल्यदृष्टया महाभारतम् केवलम् स्वयम् एव स्वकीयम् उपमानम् अस्ति। महाभारतम् एतादृशः एकः विशालः विश्वकोषः अस्ति यस्मिन् भारतवर्षस्य व्यापकरूपेण राष्ट्रम् प्रभावितम् कुर्वता प्राचीनेन इतिहासेन सह धार्मिकाणाम् नैतिकानाम् च आदर्शानाम् दार्शनिकानाम् सिद्धान्तानाम् च अमूल्यः निधिः सुरक्षितः वर्तते, सहैव अन्यत् अपि बहु अत्र संगृहीतम् अस्ति। स्वस्मिन् प्रतिपाद्यबाहुल्यात् हेतोः अस्य घोषणा अस्ति यत् धर्मार्थकाममोक्षाणाम् पुरुषार्थानाम् विषये यत् अत्र प्राप्यते तत् एव अन्यत्र प्राप्तुम् शक्यते, किन्तु यत् अत्र नास्ति, तत् अन्यत्र कुत्रापि नास्ति—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥

यथा च महाभारतस्य दर्शनेन ज्ञायते, अस्य इयम् घोषणा वितथा नास्ति। वस्तुतः इदम् अस्माकम् भारतीयानाम्-कृते एकः महत्त्वपूर्णः सांस्कृतिकः विश्वकोष एव अस्ति।

२—**परिमाणम्**—यथा च महाभारतस्य प्रत्येकम् पर्वणः अन्ते दत्तया 'इति श्रीमन्महाभारते वैयासिक्यां शतसाहस्र्यां संहितायाम्' इत्यादिरूपया पुष्पिकया ज्ञायते, 'उपलब्धम् महाभारतम् शतसहस्रश्लोकपरिमाणकम् अस्ति। महाभारतसमपरिमाणकम् अर्थात् लक्षश्लोकात्मकम् ऐतिहासिकम् महाकाव्यम् भारते तु अस्ति एव नहि, अन्यत्र अपि कस्मिन् अपि देशे न श्रूयते।

---

१—पृ० १३५।

यथा च ४४२ ईसवीयवर्षस्य एकस्मिन् गुप्तकालीने लेखे कृतेन 'शतसाहस्र्यां संहितायाम्', इतिरूपेण महाभारतस्य उल्लेखेन ज्ञायते, महाभारतस्य इदम् वर्तमानम् परिमाणम् अद्यतनम् नास्ति, अपि तु उक्तात् ईसवीयात् वर्षात् पूर्वम् अपि आसीत्। एतदतिरिक्तम्, यथा च ५० ईसवीये वर्षे दक्षिणभारतस्य पाण्ड्यदेशे समागतस्य 'डायो क्रायसोस्टोम' नामकस्य एकस्य यवनदेशीय-लेखकस्य अनेन संस्मरणेन यत् भारते लक्षश्लोकानाम् 'इलियड' अस्ति, ज्ञायते, ५० ईसवीयात् वर्षात् पूर्वम् अपि महाभारतस्य लक्षश्लोकरूपम् परिमाणम् आसीत्।[1]

३—**रचयिता रचनाकालश्च**—यथा च 'त्रिभिर्वर्षैः सदोत्थायी कृष्ण-द्वैपायनो मुनिः। महाभारतमाख्यानं कृतवानिदमद्भुतम्'[2] इत्यादिवचनैः ज्ञायते, परम्परानुसारेण महाभारतस्य प्रणेता पराशरपुत्रः वेदव्यासः कृष्ण-द्वैपायनः मन्यते। यद्यपि, यथा च 'द्वापरे समनुप्राप्ते तृतीये युगपर्यये। जातः पराशराद् योगी वासव्यां कलया हरेः'[3] इत्यादिवचनैः ज्ञायते, वेदव्यासः सामान्यत एव भगवदंशावतारः मन्यते स्म, किन्तु तत्कृतम् महाभारतस्य प्रणयनम् एतादृशम् अद्भुतम् कार्यम् अमन्यत यत् तदाधारेण एव तस्य भग-वदवतारूपत्वस्य अस्मिन् रूपे पुष्टिः कृता वर्तते यत्—

> कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्।
> को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत्॥[4]

यतो हि, यथा च पूर्वम् उक्तम्[5], वेदव्यासस्य कृष्णद्वैपायनस्य पितरम् पराश-रम् यावत् वेदमन्त्राणाम् प्रकाशनम् सम्पाद्यमानम् आसीत्,[6] अथ च वेद-व्यासस्य प्रशिष्येण याज्ञवल्क्येन शुक्लयजूंषि प्रकाशितानि, अतःस्पष्टम् अस्ति यत् वेदव्यासस्य स्थितिकालः वेदमन्त्रप्रकाशकानाम् ऋषीणाम् समीप-वर्ती एव कालः अस्ति। तस्मिन् काले यदा तेन वेदानाम् व्यसनम् अर्थात् ऋगादिमन्त्रान् पृथक्-पृथक् कृत्वा तेषाम् ऋग्वेदादिरूपे संकलनम् कृतम्, तदा तदनन्तरम् वेदोपबृंहणार्थम् तेन महाभारतस्य पुराणानाम् च रचना कृता, येन सर्वसाधारणः अपि वेदार्थम् जानीयात्, यथा च उक्तम् अपि—

---

१—अत्र विषये द्रष्टव्यः—'महाभारतमीमांसा' नामकः ग्रन्थः (चिन्तामणि विनायक वैद्य)।

२—महाभारतम्, आ० प० ६२।५२।

३—श्रीमद्भागवतम् १।४।१४।

४—विष्णुपुराणम् (षष्ठांशम्) ३।४।५।

५—पृष्ठ १४४।

६—द्रष्टव्यः—ऋग्वेदः १।६५-७२।

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ।।[१]

अथ च—

भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।
दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ।।[२]

वैदिके वाङ्मये परस्परम् संघर्षम् कुर्वताम् कुरूणाम् पञ्चालानाम् च वर्णनम् अथ च कुरुवंशीयानाम् केषाञ्चित् जनानाम् नामतः निर्देशः अपि अस्ति, येन ज्ञायते यत् वैदिकवाङ्मयकाले अपि एते सर्वे ज्ञाताः आसन् । अतः मुख्यतः एतेषाम् कथानकस्य अथ च अन्येषाम् बहूनाम् वैदिकानानाम् आख्यानाम् महाभारते यत् स्पष्टीकरणम् पल्लवितीकरणम् वा अस्ति तत् वेदोपबृंहणम् एव अस्ति । यतः वेदव्यासस्य कृष्णद्वैपायनस्य मातुः सत्यवत्याः विवाहः कुरुकुले अभवत्, तद्धेतोश्च तस्य कुरुकुलेन सम्पर्कः आसीत्, अथ च भारत-राष्ट्रम् व्यापकरूपेण प्रभावितम् कुर्वत् महाभारतयुद्धम् घटनाचक्रम् कुरुकुले जातम् यस्मिन् कुरुकुलसम्बन्धिना लोकोत्तरचरितेन भगवता श्रीकृष्णेन अपि महत्त्वपूर्णः भागः गृहीतः, अतः तेन कुरुकुलवृत्तम् मुख्यतः विषयीकृत्य महाभारतस्य प्रणयनम् कृतम् ।

महाभारतस्य वेदव्यासप्रणीतत्वे अपि तस्य वर्तमानस्य समग्रस्य रूपस्य तल्लेखनीप्रसूतत्वस्वीकरणम् तथ्यानुकूलम् न प्रतीयते । यद्यपि अत्र कश्चन सन्देहः नास्ति यत् वेदव्यासेन महाभारतस्य प्रणयनम् अवश्यम् एव कृतम्, किन्तु सहैव अत्र अपि कश्चन सन्देहः नास्ति यत् तद्द्वारा प्रणीतम् महाभारतस्य मूलरूपम् समये-समये विभिन्नकर्तॄणाम् परम्परया परिवर्धितम् सत् एव वर्तमानम् विशालम् रूपम् प्राप्तुम् अशक्नोत् । यतः, यथा च स्वयम् महाभारतात् एव ज्ञायते, वेदव्यासेन स्वप्रणीतम् महाभारतम् स्वशिष्याय वैशम्पायनाय श्रावितम्, येन च पुनः तत् जन्मेजयाय श्रावितम्, पश्चात् तत् लोमहर्षणस्य सूतस्य पुत्रेण सौतिना शौनकादिभ्यः ऋषिभ्यः श्रावितम्, अतः स्पष्टम् अस्ति यत् ऐतेषाम् त्रयाणाम् वक्तृश्रोतृयुगलानाम् परस्परम् संवादस्य एव प्रसंगतः आगतैः विषयैः व्यासप्रणीते मूले महाभारते स्वाभाविकरूपेण सम्वर्द्धनम् जातम्, अथ च तस्य वर्तमानम् रूपम् तदा अस्तित्वम् प्राप्तवत्, यदा सौतिः अपि शौनकादिभ्यः महाभारतम् श्रावितवान् आसीत् । एतदतिरिक्तम्, यतः यथा च स्वयय् महाभारतस्य एव 'चतुर्विंशतिसाहस्रीं

---

१—श्रीमद्भागवतम् १।४।२५ ।
२—श्रीमद्भागवतम् १।४।२९ ।

चक्रे भारतसंहिताम्' इतिवचनेन ज्ञायते, पूर्वम् तु इदम् चतुर्विंशतिसहस्रश्लोकात्मकम् एव आसीत्, अतः तस्य पश्चात्कालीनम् सम्वर्धनम् स्पष्टम् अस्ति। सहैव यतः महाभारते केषाञ्चित् एतादृशाम् विभिन्नमतादीनाम् तथ्यानाम् वर्णनम् अस्ति येषाम् अस्तित्वम् वेदव्यासकाले न संभाव्यते, अथ च तस्य भाषाभावदृष्ट्या अपि एककर्तृकत्वम् न प्रतीयते, अतः अत्र सन्देहः नास्ति यत् महाभारतस्य वर्तमानम् रूपम् वेदव्यासप्रणीतम् नास्ति, अपि तु तस्य प्रणयने समये-समये बहूनाम् सहयोगः अभवत्, किन्तु पुनरपि इदम् निश्चितरूपेण कथयितुम् न शक्यते यत् कैः कैः महानुभावैः कस्मिन्-कस्मिन् समये कस्य-कस्य अंशस्य प्रणयनम् कृतम्। इदमेव कथयितुम् शक्यते यत्, यथा च अत्रैव पूर्वम् दृष्टम्, ५० ईसवीयात् वर्षात् पूर्वम् एव महाभारतस्य वर्तमानम् लक्षश्लोकात्मकम् रूपम् अस्तित्वम् प्राप्नोत्।

४—विषयः—बहुलप्रतिपाद्यविषयकस्य महाभारतस्य वर्णनीयाः विषयाः वर्गत्रये विभक्तुम् शक्यन्ते, येषु एकस्मिन् वर्गे कुरुकुलवृत्तसम्बन्धिनी मुख्या कथा समायाति यत्र महाभारतयुद्धवर्णनम् प्रामुख्यम् धत्ते, द्वितीये वर्गे विभिन्नानि प्रासङ्गिकानि आख्यानानि समायान्ति, तृतीये वर्गे च अन्ये विभिन्नाः धार्मिकाः दार्शनिकाः नीतिसम्बन्धिनश्चेत्यादयः विषयाः समायान्ति। प्रथमद्वितीयवर्गान्तर्गतविषयवर्णने यथार्थचित्रणपरेण, रोमाञ्चकरेण, मनोहारिणा च इतिवृत्तेन सह स्वाभाविकी अकृत्रिमा वा विविधरसाभिव्यक्तिः आनन्दम् वितरति। अस्याम् विविधरसाभिव्यक्तौ वीररसाभिव्यक्तिः प्रमुखताम् भजते। तृतीयवर्गान्तर्गताश्च विषयाः स्वकीयया धार्मिक्या, नैतिक्या, दार्शनिक्या च गरिम्णा प्रभावयन्ति। श्रीमद्भगवद्गीता अपि यस्याश्च चर्चा अग्रिमे निबन्धे करिष्यते, अस्मिन् एव वर्गे समायाति।

५—सांस्कृतिकः समन्वयः—यथा च महाभारतस्य 'सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा। आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः।' (शान्तिप० ३५०।६३)[१] इत्यादिभिः वचनैः ज्ञायते, अत्र सांस्कृतिकसमन्वयस्य भावना अतीव प्रबला वर्तते, अत एव अस्मिन् श्लोके यथा वेदाः हेतुभिः अहन्तव्याः मताः, तथैव सांख्ययोगपञ्चरात्रपाशुपतागमाः अपि मताः। वस्तुतः भारतीयसंस्कृतौ वैदिकक्षेत्राधारकाः वैदिकेतरक्षेत्राधारकाः वा ये ये विकासाः समये-समये जाताः, तेषाम् सर्वेषाम् सम्मानम् सामाजिकस्य सांस्कृतिकस्य वा समन्वयस्य दृष्ट्या अत्र कृतम् वर्तते। यद्यपि, यथा च महाभारतस्य तदन्तर्गतायाश्च गीतायाः सूक्ष्मेण अध्ययनेन ज्ञायते, अत्र भगवता कृष्णेन प्रवर्तितस्य प्रचारितस्य वा भागवतधर्मस्य गरिमा सर्वाधिकरूपेण प्रकाशितः

---

१—ब्रह्मसूत्ररामानुजभाष्ये (सू० २।२।४२) उद्धृतः श्लोकः।

भवति, तथापि अत्र सर्वेभ्यः अपि वर्णनसमकालीनेभ्यः मतेभ्यः समुचितम् सम्मानम् दत्तम् वर्तते येन सांस्कृतिकः समन्वयः यथावत् तिष्ठेत् ।

अस्तु ! इत्थम् महाभारतम् वेदोपबृंहणस्य, अथ च भारतस्य राजनैतिकस्य, सांस्कृतिकस्य च प्राचीनस्य इतिहासस्य, अपि च धार्मिकाणाम् नीतिसम्बन्धिनाम् दार्शनिकानाम् च सिद्धान्तानाम् प्रतिपादनस्य दृष्टचा न केवलम् इतिहासपुराणात्मके वाङ्मये, अपि तु समग्रे अपि भारतीयवाङ्मये समुत्कृष्टम् महत्त्वपूर्णम् च स्थानम् अधिकरोति । एतदेव कारणम् यत् इदम् न केवलम् स्वोत्तरवर्तिनः संस्कृतसाहित्यस्य, अपि तु समग्रभारतीयभाषासाहित्यस्य भूयसः भागस्य उपजीव्यरूपे अवर्तत, इदानीम् च निरन्तरम् वर्तमानम् अस्ति । एतादृशम् महामहिमान्वितम् महाभारतम् अवश्यम् एव अस्मिन् रूपे वन्दनीयम् अस्ति यत्—

व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे ।
भूषणतयैव संज्ञां यदङ्किता भारती वहति ॥

अस्य च प्रणेता वेदव्यासः कृष्णद्वैपायनः अपि अस्मिन् रूपे वन्दनीयः अस्ति यत्—

नमः सर्वविदे तस्मै व्यासाय कविवेधसे ।
चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥
श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः ।
तमहमरागमतृष्णं कृष्णद्वैपायनं वन्दे ॥

३५

# भगवान् श्रीकृष्णः तदुपदिष्टः धर्मश्च

१—**भगवतः श्रीकृष्णस्य ऐतिहासिकम् व्यक्तित्वम्**—स्वाविर्भावेन भारतभुवम् अलंकुर्वन् भगवान् श्रीकृष्णः एतादृशः एकः ऐतिहासिकः महापुरुषः अस्ति येन भारतस्य इतिहासः संस्कृतिश्च व्यापकरूपेण प्रभाविते कृते। अयम् महानुभावः महाभारतकाले मथुरायाम् यदुकुले वसुदेवात् देवक्याम् जातः। वसुदेवपुत्रत्वात् अयम् 'वासुदेवः' इत्यपि अभिधीयते। महाभारतकालः परम्परानुसारेण पञ्चसहस्राधिकेभ्यः अब्देभ्यः प्राक् मन्यते, किन्तु आधुनिकानाम् ऐतिहासिकानुसन्धानपराणाम् विदुषाम् अनुसारेण सः ईसातः प्रायः चतुर्दशशताब्देभ्यः प्राक् स्वीक्रियते।

वासुदेवः भगवान् श्रीकृष्णः बाल्यकालात् एव अतीव पराक्रमी आसीत्। तस्य बाल्यकालीनस्य पराक्रमस्य अद्भुतानि कार्याणि पुराणादिषु गीतानि परम्परायाम् च प्रसिद्धानि सन्ति। बाल्यकालात् पश्चात् तेन स्वपराक्रमेण अनेके स्वविरोधिनः जनपीडकाश्च बलशालिनः दुष्टाः राजानः निषूदिताः पराजिताः वा। भारतराष्ट्रस्य इतिहासम् व्यापकरूपेण प्रभावितम् कुर्वति महाभारतयुद्धे सः अतीव प्रमुखम् भागम् गृहीतवान्। तस्मिन् युद्धे एकस्य पक्षस्य—पाण्डवपक्षस्य—तु सः पूर्णतया नेतृत्वम् एव कृतवान्, यद्वशाच्च सः पक्षः तत्र विजेता अभवत्।

महाभारतपुराणादीनाम् अनुसारेण भगवान् श्रीकृष्णः यत्र सौम्येन सुन्दरेण च रूपेण युक्तः सन् अनुपमशक्तिशाली पराक्रमी वीरः, रणनीतिनिपुणः योद्धा, राजनीतिज्ञः नेता, शासनकुशलः शासकः, विविधकलाभिज्ञश्च आसीत्, तत्र सः विविधविद्यानिष्णातः मेधावी विद्वान्, चिन्तनपरायणः महामनीषी, ज्ञानविज्ञानयोः प्रत्येकम् क्षेत्रे गतिमान् तत्त्ववेत्ता योगेश्वरश्च आसीत्। एतादृशः परमपूर्णव्यक्तित्वसम्पन्नः पुरुषः, न केवलम् भारते, अपि तु समग्रे अपि विश्वे दुर्लभ एव अस्ति।

२—**भगवतः श्रीकृष्णस्य धर्मप्रवर्तकाचार्यत्वम्**—स्वकीयव्यक्तित्वस्य परमपूर्णत्वात् हेतोः वासुदेवः श्रीकृष्णः परम्परायाम् 'भगवान्' इति विशेषणेन

विरुदेन वा विभूषितः अभवत्। फलतः तेन दार्शनिकानाम् धार्मिकाणाम् च सिद्धान्तानाम् रूपे या स्वकीया 'उपनिषत्' गीता, सा भगवता गीतत्वात् 'भगवद्गीता' इति प्रसिद्धा अभवत्, तस्याम् च वर्णितः धर्मः भगवता उपदिष्टत्वात् भगवता एव च तत्प्राप्तिहेतुत्वादिभिः विविधरूपैः सम्बद्धत्वात् भागवतधर्मः' इति नाम्ना प्रसिद्धः अभवत्'। इत्थम् भगवान् वासुदेवः एकः धर्मप्रवर्तकः धर्मोपदेष्टा वा आचार्यः अपि अस्ति, यदुपदिष्टः धर्मः—भागवतधर्मः—भगवद्गीतायाम् प्रतिपादितः वर्तते।[2]

किम् बहुना, महाभारतपुराणादिषु परम्पराग्रन्थेषु भगवान् श्रीकृष्णः जगदीश्वरस्य एव एकः अवतारः वर्णितः अस्ति, तथैव च सः परम्परायाम् निष्ठया सह मन्यमानः उपास्यमानश्च वर्तते।

**३—भगवता श्रीकृष्णेन उपदिष्टः भागवतधर्मः**—भगवता वासुदेवेन श्रीकृष्णेन उपदिष्टः भागवतधर्मः निश्चितरूपेण महात्मनः गौतमबुद्धात् पूर्ववर्ती अस्ति। गौतमबुद्धेन वैदिकयज्ञेषु क्रियमाणायाः हिंसायाः विरोधे घोषणाम् कृत्वा या क्रान्तिः कृता, सा कापि नवीना क्रान्तिः न आसीत् अपितु तस्याः सूत्रपातः पूर्वम् भागवतधर्मेण एव कृतः आसीत्[3]। भागवतधर्मः बौद्धधर्म इव वैदिकयज्ञेषु क्रियमाणायाः हिंसायाः, विरोधम् कुर्वन् अपि, तद्विपरीतम् वेदप्रामाण्यम् यथावत् मत्वा वैदिकम् तत्त्वज्ञानम् धर्मम् च अपेक्षितवान्, फलतः सः बौद्धधर्म इव वैदिकपरम्परया न उपेक्षितः, अपि तु श्रद्धया सम्मानितः परिगृहीतश्च।

भागवतधर्मस्य एका प्रमुखा असाधारणी विशेषता इयम् वर्तते यत् अनेन स्वकाले प्रचलितानाम् दार्शनिकानाम् धार्मिकाणाम् च विभिन्नानाम् सिद्धान्तानाम् प्रवृत्तीनाम् च अपूर्वः समन्वयः प्रस्तुतः, येन सः स्वभावतः अतीव लोकप्रियः अभवत्। तत्र उपनिषदाम् सांख्यस्य च सिद्धान्तेषु एवंविधः समन्वयः कृतः वर्तते यत् सांख्याभिमते द्वे मूलतत्त्वे–प्रकृतिः पुरुषश्च–नित्ययोः मूलतत्त्वयोः रूपे स्वीकरणीये अपि सती स्वतन्त्रे न स्तः, अपि तु औपनिषदस्य परतत्त्वस्य ब्रह्मणः एव अपरा परा चेतिप्रकृतिद्वयरूपे स्तः, फलतश्च औपनिषदम् ब्रह्म एव वास्तविकम् परतत्त्वम् सत् जगज्जन्मादिकारणम् अस्ति।[4] तत्र पूर्वपरम्परागतस्य वैदिकस्य देववादस्य पुरुषवादस्य च, यत्र विकास-क्रमेण क्रमशः 'विष्णोः' रूपे सर्वोच्चः परात्परः वा देवः, 'नारायणस्य' रूपे च जग-

---

१, २—अस्मिन् विषये द्रष्टव्यः—'गीतारहस्य' नामकः ग्रन्थः (बालगंगाधर तिलक). पृ० ५४८।

३—गीता १८।२५, २७ आदि।

४—गी० ७।४-६; ९।१० आदि।

दन्तरात्मा जगत्कारणपुरुषश्च विकसितः आसीत्, औपनिषदेन तत्त्ववादेन सह, देववादीये विष्णौ, पुरुषवादीये नारायणे, तत्त्ववादीये च परब्रह्मणि तात्त्विकम् एक्यम् अनुभूय एवंविधः समन्वयः कृतः वर्तते यत् यद्यपि परतत्त्वम् ब्रह्म स्वकीयेन आत्मस्वरूपेण व्यक्तित्वविहीनम् अनन्तम् परमात्मतत्त्वम् अस्ति, तथापि तत् एकस्य विशिष्टदिव्यव्यक्तित्वसम्पन्नस्य सर्वोच्चस्य परात्परस्य वा देवाधिदेवस्य दिव्यस्य परमपुरुषस्य वा रूपे अपि अस्ति ।[1]

तत्र सांख्यसम्मते औपनिषदे ज्ञानसाधने निवृत्त्यात्मके मार्गे अथ च पूर्वपरम्परागते सर्वसाधारणस्वीकृते च सकामयज्ञादिकर्मसाधने प्रवृत्त्यात्मके मार्गे एवंविधः समन्वयः कृतः वर्तते यत् विहितानाम् कर्मणाम् अनुष्ठानम् अवश्यम् एव कर्त्तव्यम्,[2] किन्तु तत् सङ्गम् फलम् च त्यक्त्वा उक्तम् परात्परम् दिव्यम् परमपुरुषम् प्रति भक्तिभावेन तस्य अर्चनस्य रूपे कर्तव्यम्[3], येन कर्मणाम् बन्धनहेतुत्वम् दूरीभूय परमपुरुषप्राप्तिहेतुत्वम् मुक्तिहेतुत्वम् वा सम्पत्स्यते[4] । परमपुरुषप्राप्तिरूपा मुक्तिः यथा ज्ञानेन प्राप्यते, तथैव सा उक्तरूपेण अनुष्ठीयमानेन कर्मणा अपि प्राप्तुम् शक्यते ।[5]

भागवतधर्मे उक्तेन प्रकारेण परस्परम् समन्वितयोः अपि कर्मज्ञानयोः 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहूना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' (मु० उ० ३।२।३) इत्यादिप्रकारेण उपनिषद्वाक्येषु अभिव्यक्तम् भक्तिबीजम् आश्रित्य स्वेन विकासितेन प्रतिपादितेन च भक्तिमार्गेण सह एवंविधः समन्वयः कृतः वर्तते यत् एतादृशे जगदतीते नित्ये धाम्नि, यत्र गताः न निवर्तन्ते, परमप्राप्यस्य परमपुरुषस्य प्राप्तिः एव मुक्तिः अस्ति, तस्याश्च परमप्रमुखम् साधनम् शरणागतिपर्यवसाना परा भक्तिः अस्ति, यस्याश्च उक्तरूपेण क्रियमाणम् फलाभिसन्धिरहितम्[6] कर्म ज्ञानम् च अस्मिन् रूपे अङ्गे स्तः यत् कर्म भक्त्या भजनीयस्य परमपुरुषस्य अर्चनम् अस्ति, ज्ञानम् च भक्तस्य स्वस्वरूपस्य ज्ञानेन सह तेन भजनीयस्य तत्प्राप्यस्य च परमपुरुषस्य स्वरूपस्य एतादृशम् ज्ञानम् अस्ति यत् प्रीतिरूपापन्नम् सत् भक्तिः एव जायते[7], इयम् भक्तिश्च पुनः भगव-

---

१—गी० ८-८-१०; ६।२६; ११।१७ आदि ।

२—गी० ३।८, १८।५, ७, ११, ६० आदि ।

३—गी० २।३६-५०; ६।२७; १८।६, ४६ आदि ।

४—गी० २।५१, ३।१६; ४।१६,२४; ६।२५-२८, ३४ आदि ।

५—गी० २।५१, ३।३; ५;१६ ६।२७-२८; १५।५-७, १०,, १८।५६-५७ आदि ।

६—गी० ८।१५-१५, २१; १५।४-६ आदि ।

७—गी० ७।१७-१८; १५।१६; १८।५४ आदि ।

तत्स्वरूपम् उत्तरोत्तरम् अधिकम् अवगमयति।[1] एवम् परमपुरुषस्य उद्देश्येन भक्तिभावेन क्रियमाणानि यज्ञादीनि पत्रपुष्पसमर्पणादीनि च कर्मरूपाणि बाह्यानि साधनानि, चिन्तनध्यानभावनानुसन्धानादीनि ज्ञानरूपाणि आन्तराणि साधनानि भक्तेः एव अन्तर्गतानि तदङ्गभूतानि च सन्ति। अतोऽपि अग्रे गत्वा अत्र विषये उपरि उद्धृतेन 'नायमात्मा प्रवचनेन लभ्यः' इति वाक्येन सदृशेषु उपनिषद्वाक्येषु एव बीजरूपेण सङ्केतितः अथ च स्वेन विकासितः प्रतिपादितश्च भागवतधर्मस्य सिद्धान्तः अस्ति यत् कर्मज्ञानभक्त्यादिषु किम् अपि परमपुरुषप्राप्तिसाधनरूपे न मत्वा 'स्वयम् परमपुरुष एव स्वप्राप्तिसाधनम् अस्ति इति रूपे तस्य शरणवरणम् कृत्वा यथाशक्ति क्रियमाणम् कर्मज्ञानभक्त्यादिकम् सर्वम् अपि तदुद्देश्येन तत्प्रीत्यर्थम् सम्पाद्यम्, स एव सर्वम् साधयिष्यति—

तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥

(गी० १८।६२)

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु॥
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥

(गी० १८।६५-६६)

भागवतधर्मेण परतत्त्वस्य विषये एकः प्रायः पूर्णतया मौलिकः सिद्धान्तः अपि 'अवतारवादस्य' रूपे दत्तः अस्ति। 'अवतारवादः' भागवतधर्मस्य परमप्रमुखः मौलिकः सिद्धान्तः अस्ति। यदि अस्य वादस्य अपि बीजम् 'अजायमानो बहुधा विजायते' इत्यादिषु वैदिकेषु वाक्येषु मन्यते चेत्, तदापि अस्य मौलिकरूपेण स्पष्टः विकासः अनेन धर्मेण एव कृतः वर्तते। अस्य वादस्य अनुसारेण परमपुरुषः परात्परः भगवान् भक्तानुग्रहार्थम्, दुष्टविनाशार्थम्, धर्मसंस्थापनार्थम् च अस्मिन् जगति विशिष्टव्यक्तित्वेन सह अवतीर्णः अपि भवति, यथा च सः स्वयम् भागवतधर्मस्य उपदेष्टुः भगवतः वासुदेवस्य श्रीकृष्णस्य रूपे अवतीर्णः अस्ति।[2] तस्य अन्येऽपि अनेके अवतारा जाताः सन्ति, येषु परम्परानुसारेण भगवान् दाशरथिः रामः अपि अन्यतमः मन्यते।

**४—भागवतधर्मस्य विकासः**—कालक्रमेण स्वकीयायाम् विकासप्रक्रियायाम् श्रीकृष्णेन उपदिष्टः उक्तरूपः भागवतधर्मः स्वोपास्यस्य परम-

---

१—गी० १०।१०-११; १८।५५ आदि।

२—गी० ४।५-६ आदि।

पुरुषस्य भगवतः विष्णोः उपासनार्थम् अर्चनार्थम् वा उक्तायाम् मूलायाम् आचारमीमांसायाम् एव आधारिताम् एकाम् विशिष्टाम् आचारपद्धतिम् विकसितवान् । इयम् पद्धतिः महाभारते 'सात्त्वतविधिः' इति नाम्ना अभिहिता सती, 'ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः । सात्त्वतं विधिमास्थाय गीतः संकर्षणेन यः' ।[१] इत्यादिप्रकारेण उपादेयरूपे प्रशंसिता वर्तते । अस्याः प्रतिपादकम् शास्त्रम् च 'पञ्चरात्रम्, इतिनाम्ना प्रसिद्धम् अस्ति यच्च एकः प्रमुखः आगमः मन्यते । अस्य महाभारते 'इदं महोपनिषदं चतुर्वेदसमन्वितम् । सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् । पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम् ।' इत्यादिप्रकारेण सम्मानपूर्वकम् चर्चा कृता वर्तते ।[२]

भागवतधर्मेण अस्याः विशिष्टायाः सात्त्वत्याः पाञ्चरात्रिक्याः वा पद्धतेः अनुसारेण उपास्यत्वात् वैदिकः 'विष्णुः' स्वकीये भागवतधर्मस्वीकृते विशिष्टे रूपे अनन्यतया सह एकमात्रम् अस्य धर्मस्य एव उपास्यः देवः अभवत्, तत्फलस्वरूपम् च पश्चात् अयम् धर्मः 'वैष्णवधर्मः' इत्यपि प्रसिद्धः अभवत्, अथ च अस्य अनुयायिनः 'भागवताः' इत्यनेन सह 'वैष्णवाः' इत्यपि अभिहिताः भवितुम् आरब्धवन्तः ।

भागवतानाम् वैष्णानाम् वा 'विष्णुः परात्परः सर्वव्यापकश्च सन् स्वकीयेन दिव्यरूपेण सह अप्राकृते दिव्यलोके–वैकुण्ठलोके–स्वकीयेन नित्यपरिकरेण मुक्तैश्च जीवैः सेव्यः अस्ति । तस्य अनेकेषु नामसु 'वासुदेवः' इति, 'परवासुदेवः' इति वा अपि मुख्यम् नाम अस्ति, यच्च यद्यपि भागवतधर्मस्य प्रवर्तकस्य वासुदेवस्य नाम्नः आधारे संभाव्यते, किन्तु अयम् धर्मः इदम् न मत्वा इदम् मन्यते यत् 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ।' इतिप्रकारेण मूलतः एव परतत्त्वस्य 'वासुदेवः' इति नाम अस्ति । अयम् धर्मः अन्यधर्मसाधारणप्रवृत्त्या स्वकीयम् अनादिकालीनत्वम् अधिकतरम् प्राचीनत्वम् वा प्रकाशयितुम् वासुदेवम् श्रीकृष्णम् स्वसंस्थापकम् अपि न स्वीकरोति, अपि तु स्वम् वासुदेवात् श्रीकृष्णात् पूर्वम् एव परवासुदेवेन नारायणेन प्रवृत्तम् मन्यते, वासुदेवम् श्रीकृष्णम् च, यथा च अत्रैव पूर्वम् उक्तम्, विभिन्नेषु अवतारेषु अन्यतमम् अवतारम् मन्यते । किन्तु एतेन भगवतः श्रीकृष्णस्य भागवतधर्मोपदेशकत्वे किञ्चिदपि अन्तरम् न आयाति, यतो हि तेन स्वयमेव उक्तम् यत् स एव पूर्वम् अपि इमम् योगम् विवस्वते उपदिष्टवान्, यः महता कालेन

---

१—महाभा०, भीष्म प० ६६।३९-४०

२— ,, ,, शा० प० ३३५-३५० इत्यादिषु ।

हेतुना नष्टः, अतः सः पुनः इमम् उपदिशति ।[1] भागवतधर्मस्य मूलम् सामान्यम् स्मार्तम् वा सर्वजनीनम् रूपम् महाभारते तदन्तर्गतायाम् च श्रीमद्भगवद्गीतायाम् प्रतिपादितम् अस्ति, तदाधारे विकसितम् विशिष्टम् तान्त्रिकम् रूपम् पञ्चरात्रादिषु वैष्णवेषु आगमेषु प्रतिपादितम् वर्तते, एतयोः मध्यवर्ति सामान्यविशिष्टात्मकम् पौराणिकम् रूपम् श्रीमद्भागवतादिषु वैष्णवेषु पुराणेषु समुपलभ्यते ।

अस्तु ! भगवता श्रीकृष्णेन उपदिष्टस्य भागवतधर्मस्य मूलरूपे तदाधारिते च विकसिते रूपे याः प्रमुखाः मान्यताः सन्ति, ताः अत्र संक्षेपतः प्रदर्शिताः । यतो हि एताः मान्यताः बहोः कालात् वैदिकपरम्परायाम् मन्यमानाः सत्यः वद्धमूला जाताः सन्ति, अतः स्पष्टम् अस्ति यत् भागवतधर्मस्य अत्र व्यापकः गम्भीरश्च प्रभावः पतितः अस्ति । मूलस्य वैदिकधर्मस्य वर्तमाने हिन्दुधर्मे यत् संस्करणम् जातम् अस्ति तत्र अनयोः धर्मयोः मध्यवर्तिनः भागवतधर्मस्य प्रमुखम् प्रभावपूर्णम् च योगदानम् अस्ति । वस्तुतः भगवता श्रीकृष्णेन तदुपदिष्टेन च भागवतधर्मेण भारतीयसंस्कृतिः व्यापकरूपेण प्रभाविता कृता अस्ति । फलतः जनाः प्रतिवर्षम् यत् तस्य जन्मदिने जन्माष्टमीमहोत्सवरूपे तस्य श्रद्धया स्मरणम् कृत्वा तम् प्रति स्वकृतज्ञताम् प्रदर्शयन्ति, तत् समुचितम् एव वर्तते ।

वस्तुतः जगद्गुरुः भगवान् श्रीकृष्णः अस्माकम् सर्वेषाम् अस्मिन् रूपे सदैव वन्दनीयः अस्ति यत्—

वसुदेवसुतं देवं कसचाणूरमर्दनम् ।
देवकीपरमानन्दं कृष्णं वन्दे जगद्गुरुम् ।।

---

१—गी० ४।१-३ ।

३६

# श्रीमद्भगवद्गीता

१—**महत्त्वम्**—श्रीमद्भगवद्गीता संस्कृतसाहित्यगगनस्य अतीव उच्च-स्थाने राजमानम् एतादृशम् एकम् अत्यन्तम् भास्वरम् नक्षत्रम् तार-कम् वा अस्ति यत् यस्य ज्ञानविज्ञानप्रकाशकारिणा अथ च सहैव हृदयाह्लाद-केन परमेण ज्योतिषा सर्वः अपि लोकः द्योतितः वर्तते। सांस्कृतिकविश्वकोषस्य महाभारतस्य तु अनेकेषु बहुमूल्येषु स्थलरत्नेषु इयम् सर्वोत्कृष्टतया द्योत-मानम् रत्नम् अस्ति एव। अष्टादशाध्यायात्मिका इयम् महाभारतस्य अंश-भूता अपि सती इयदवधि एकस्य स्वतन्त्रस्य ग्रन्थस्य रूपे मन्यमाना वर्तते यत् अस्याः पारायणपरायणेषु जनेषु बहवः इदम् अपि न जानन्ति यत् इयम् महाभारतांशभूता अस्ति, अथ च इदम् जानन्तः अपि सन्तः इमाम् पठन्तः अपि अस्याः आकरभूतम् महाभारतम् अवलोकितुम् कदापि न अपेक्षन्ते। इदम् तथ्यम् अस्याः स्वतन्त्रम् परमम् गौरवम् प्रकाशयति।

भारतीयदर्शनसाहित्ये अस्याः यत् महत्त्वपूर्णम् स्थानम् अस्ति तत् सर्वविदितम् वर्तते। भारतस्य राष्ट्रीयदर्शनस्य वेदान्तस्य तु आधारभूता एव या प्रस्थानत्रयी मन्यते तस्याम् इयम् एकम् प्रस्थानम् एव मन्यते, अन्यत् प्रस्थानद्वयम् च उपनिषदः ब्रह्मसूत्राणि च सन्ति। इदम् अस्याः परमम् गौरवम् अस्ति यत् अस्याः अध्ययनेन विना सामान्यतः भारतीयदर्शनस्य विशेषतश्च वेदान्तदर्शनस्य अध्ययनम् एव पूर्णम् न मन्यते। अस्याः दार्शनिक-महत्त्वात् हेतोः अस्याः यावन्ति भाष्याणि व्याख्यानानि वा वर्तन्ते तावन्ति संभवतया अन्यस्य कस्यचित् ग्रन्थस्य न सन्ति। सहैव च यावतीषु भारती-यासु भारतीयेतरासु च भाषासु अस्याः विविधरूपः अनुवादः जातः, तावतीसु भाषासु संभवतया निखिले अपि विश्वे अन्यस्य कस्यचित् ग्रन्थस्य न जातः। एतदतिरिक्तम्, इमाम् आधारीकृत्य अनेकेषाम् स्वतन्त्राणाम् ग्रन्थानाम् अपि रचना विभिन्नासु भाषासु जातास्ति। इत्थम् गीतारूपात् मूलस्रोतसः प्रसूय-मानम् साहित्यम्—गीतासाहित्यम्—अपि अतीव विपुलम् वर्तते। इदम् साहि-

त्यम् स्वकीये स्वरूपे तु महत्त्वपूर्णम् अस्ति एव, किन्तु सहैव इदम् स्वोपजीव्यायाः गीतायाः व्यापकम् महत्त्वम् दार्शनिकसाहित्ये च तस्याः गौरवपूर्णम् स्थानम् अपि आञ्जस्येन एव द्योतयति ।

गीतायाः भाषा इयती सरला सुबोधा च अस्ति यत् साधारणसंस्कृतज्ञः अपि सरलतया अस्याः प्रतिपाद्यम् अवबुध्यते । गीतायाः प्रतिपाद्येषु एतादृशी सार्वभौमता सर्वसाधारणोपयोगिता च वर्तते यत् कोऽपि तत्र स्वमतप्रतिकूलतागन्धम् न जिघ्रति । फलतः विश्वस्य विभिन्नेषु देशेषु, न जाने, कियन्तः पुरुषाः गीतायाः अध्ययनम् तत्सिद्धान्तानुसरणम् च कृत्वा तिलकगांध्यादिवत् महापुरुषाः अभवन्, कियन्तश्च इदानीम् अपि स्वजीवनोन्नयनपरायणाः वर्तन्ते । एवम्, गीतायाः प्रभावक्षेत्रम् अतीव व्यापकम् अस्ति ।

अस्याः स्वयम् 'श्रीमद्भगवद्गीता' इति नाम एव केवलम् अस्याः महत्त्वद्योतनाय अलम् वर्तते । 'भगवता गीता' 'भगवद्गीता' इति रूपे इदम् नाम तस्य वस्तुनः संज्ञारूपम् नाम न सत्, विशेषणमात्रम् सिध्यति यत् भगवता गीतत्वात् अनेन विशेषणेन विशेषणीयम् विशेष्यम् अस्ति । अस्य विशेषणस्य विशेष्यम् किमस्ति इति तु अस्याः प्रत्येकम् अध्यायस्य अन्ते दत्तया 'इति श्रीमद्भगवद्गीतासूपनिषत्सु' इत्यादिरूपया पुष्पिकया एव अस्मिन् रूपे स्पष्टतः ज्ञातुम् शक्यते यत् तत् 'उपनिषत्' इति अस्ति । एवम् इयम् भगवता गीता एतादृशी उपनिषद् वर्तते यस्याः 'भगवद्गीता' इति विशेषणम् एव रूढम् अभिधानम् जातमस्ति । इदम् एकम् एव तथ्यम् यत् परम्परया इयम् 'उपनिषत्' मता, अस्याः महत्त्वप्रकाशनाय पर्याप्तम् अस्ति । आध्यात्मिकज्ञानसरोवररूपाम् इमाम् दृष्ट्वा परम्परया इदम् सिद्धान्तितम् यत् इयम् पूर्ववर्तिनीनाम् उपनिषदाम् सारेण सङ्कुटितस्वरूपा एका उपनिषत् एव अस्ति । अत एव तया घोषितम् यत्—

सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतम् महत् ।।

अस्तु ! एवम् गीतायाः परमम् महत्त्वम् परम्परायाम् स्वीकृतम् वर्तते ।

२—**उद्भवः**—यतः गीता वेदव्यासकृष्णद्वैपायनप्रणीतस्य महाभारतस्य एव एकः अष्टादशाध्यायात्मकः अंशः अस्ति, अतः इदम् तु अकथनेन एव स्पष्टम् अस्ति यत् तस्याः वाङ्मयम् स्वरूपम् वेदाव्यासात् उद्भूतम् अस्ति । किन्तु पुनरपि इयती वार्ता अवश्यम् अस्ति यत् यतः, यथा च 'महाभारतम्' इतिशीर्षके निबन्धे उक्तम्, वर्तमानरूपे उपलब्धम् समग्रम् अपि महाभारतम् व्यासप्रणीतम् न प्रतीयते, अतः इदम् अपि संभवम् अस्ति यत् तदंशभूता गीता अपि स्वकीये वर्तमाने समग्रे रूपे वेदव्यासप्रणीता न स्यात्, अपि तु तस्याः केचन अंशाः वेदव्यासात् पश्चात् तस्याम् संनिवेशिताः

स्युः। उदाहरणार्थम् यथा, 'ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' (१३।४) इतिश्लोक एव तत्र पश्चात् प्रक्षिप्तः प्रतीयते। अत्र 'हेतुमद्भिः' इति विशेषणेन सह 'ब्रह्मसूत्रपदैः' इति साक्षात्-शब्देन हेतुना वर्तमानानाम् ब्रह्मसूत्राणाम् एव निर्देशः मन्तुम् उचितः अस्ति, किन्तु, यथा च पूर्वम् उक्तम्[1], ब्रह्मसूत्राणाम् वेदव्यासप्रणीतत्वासंभवेन तत्काले तेषाम् अस्तित्वम् असंभवम् अस्ति। एतदतिरिक्तम्, अस्य श्लोकस्य स्वपूर्ववर्तिनः श्लोकस्य (१३।३), यस्मिन् प्रतिपादयिष्यमाणस्य विषयस्य प्रतिपादनाय प्रतिज्ञा कृता वर्तते, अथ च स्वपरवर्तिनः श्लोकस्य (१३।५), यस्मिन् पूर्वप्रतिज्ञातविषयस्य प्रतिपादनस्य प्रस्तावनम् कृतम् वर्तते, मध्ये स्थितिः अस्वाभाविकी एव प्रतीयते। अस्य इयम् स्थितिः न केवलम् अस्वाभाविकी, अपि तु एतत्प्रकरणप्रतिपाद्येन असंगता अपि अस्ति, यतो हि 'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च' (१३।५) इत्यादिरूपे अत्र वर्णितेषु क्षेत्रीयतत्त्वेषु ययोः सांख्यप्रसिद्धयोः अव्यक्ताहंकारयोः तत्त्वयोः वर्णनम् अस्ति, तयोः ब्रह्मसूत्राणि न केवलम् समर्थनम् न कुर्वन्ति, अपि तु तद्विपरीतम् तयोः निराकरणम् एव कुर्वन्ति (ब्र० सू० १।४।१-७)। एतदतिरिक्तम्, अन्यत्र अपि यत्र गीता सांख्याभिमतानि प्रतिपाद्यानि तत्त्वानि वा मसम्मानम् गृह्णाति, तत्र ब्रह्मसूत्राणि स्पष्टतः तानि निराकुर्वन्ति। अस्तु ! इत्थम्, उक्तः श्लोकः गीतायाः मूलरूपस्य अंशः न प्रतीयते। एवमेव यदि अन्येऽपि केचन अंशाः गीतायाः मूलरूपे पश्चात् संनिवेशिताः स्युश्चेत् किञ्चित् आश्चर्यम् नास्ति। इत्थम् गीतायाः मूलतः ब्रह्मसूत्रपूर्ववर्तिनि काले वेदव्यासप्रणीतत्वे अपि तस्याः उपलब्धस्य वर्तमानरूपस्य पूर्णता ब्रह्मसूत्रानन्तरम् एव संभाव्यते।

यदवधि गीतायाः सैद्धान्तिकरूपस्य अर्थात् तत्प्रतिपाद्यस्य सम्बन्धः अस्ति, तस्य विषये इदम् प्रसिद्धम् एव अस्ति यत् तस्य उपदेशः यदुकुले आविर्भूतेन वासुदेवेन भगवता श्रीकृष्णेन अर्जुनाय महाभारतयुद्धस्थले एतद्-युद्धप्रारम्भकाले दत्तः। एवम् गीतायाः सैद्धान्तिकम् स्वरूपम् भगवतः श्रीकृष्णात् उद्भूतम् अस्ति। इयम् अन्या वार्ता यत् यतः पूर्वोक्तप्रकारेण तस्याः वाङ्मयस्वरूपे कश्चन प्रक्षिप्तः अंशः अपि संभाव्यते, अतः तदनुरूपम् स्वभावत एव तस्याः सैद्धान्तिकस्वरूपे अपि कश्चन अंशः प्रक्षिप्तः स्यात्।

३—**गीतादर्शनम्**—यद्यपि : विभिन्नै गीभाष्यकारैः गीतादर्शनम् विभिन्नेषु रूपेषु प्रस्तुतम्, किन्तु गीताक्षरानुसारेण तु इदम् एव प्रतीयते यत्, यथा च विगते निबन्धे उक्तम्, गीतायाम् मूलतः भागवतधर्मः प्रतिपादितः अस्ति, अथ च एवम् गीतादर्शनम् भागवतधर्मस्य एव आचारमीमांसाप्रधा-

---

१—पृष्ठ १२९. १४४-१४५।

**अपि तु ईश्वरस्य** अपरायाः प्रकृतेः रूपे तदाधारितस्वरूपा परतन्त्रा सती ईश्वराधिष्ठितरूपेण जगत्प्रसवित्री अस्ति[1], पूर्णतया सांख्याभिमतरूपेण जडा, त्रिगुणा, विकारजननी च मता अस्ति।[2] पुरुषः स्वकीयनित्यत्वादि-विषये सांख्याभिमतरूपेण स्वीकृतः सन् अपि तस्मात् विशिष्टरूपे एतादृशः स्वीकृतः अस्ति यत् तस्य ज्ञानम् ज्ञत्वम् वा प्रकृतिजन्यबुद्ध्युपाधिकम् नास्ति, अपि तु स्वाभाविकम् अस्ति[3], अथ च तस्य कर्तृत्वे प्रकृतेः-सहयोगे अपि तत् पूर्णतः प्रकृत्युपाधिकम् नास्ति[4], सहैव सः स्वतन्त्रः न सन् ईश्वरस्य परायाः प्रकृतेः, तस्य अंशस्य च रूपे तदाधारितस्वरूपः अस्ति[5]। एवम् गीताभिमते पुरुषे सांख्याभिमतानाम् उपनिषदभिमतानाम् च विशेषतानाम् प्रायः समन्वयः अस्ति। एतयोः प्रकृतिपुरुषयोः तत्त्वयोः आधारभूतः ईश्वरः अस्य जगतः अभिन्ननिमित्तोपादानकारणम् अस्ति[6], फलतः सर्वस्य 'वासुदेव' पद-वाच्यस्य ईश्वरस्य एव रूपत्वात् 'वासुदेवः सर्वम्'[7] इति सिद्धान्तः अत्र स्वीकृतः अस्ति। यश्च भागवतधर्मे विशिष्टरूपेण परतत्त्वस्य अभिधानरूपे स्वीकृतेन 'वासुदेवः' इत्यभिधानविशेषेण सह 'पुरुष एवेदं सर्वम्', 'सर्वं खल्विदं ब्रह्म' इत्यादिरूपे स्वीकृतः पूर्वपरम्परागतः वैदिकः औपनिषदश्च एव सिद्धान्तः अस्ति।[8]

गीतादर्शनस्य एकस्य धर्मस्य दर्शनत्वात् तस्य तत्त्वमीमांसायाः क्षेत्रे, यथा च पूर्वम् उक्तम्[8], वैदिकस्य देववादस्य औपनिषदस्य तत्त्ववादस्य च समन्वयस्य फलस्वरूपम् विकसितः सिद्धान्तः अस्ति यत् ईश्वरः यद्यपि स्वकीयेन आत्मस्वरूपेण औपनिषदम् परतत्त्वम् ब्रह्म सन् ज्ञानानन्दस्वरूपः ज्ञानानन्दादिगुणयुक्तः, व्यक्तित्वविहीनः अनन्तः सर्वव्यापकः वा जगदन्तरात्मा परमात्मा अस्ति, तथापि सः विशिष्टव्यक्तित्वसम्पन्नः सर्वोच्चः परात्परः वा दिव्यः परमपुरुषः देवाधिदेवः वा अपि अस्ति[9]। अस्य सिद्धान्तस्य किञ्चित् बीजम् कासुचित् उपनिषत्सु अपि प्राप्यते।[10] अत्र विषये गीतादर्शनस्य

---

१—गी० ७।४-५; ९।१० आदि।
२—,, १३।१९, १४।५ आदि।
३—,, १३।१, ३३ आदि।
४—,, ३।२७; १३।२९; १८।१४-१६ आदि।
५—,, ७।५; १५।७ आदि।
६—,, ७।६, ९; ९।४-१०, १४।३-४ आदि।
७—,, ७।१९।
८—पृ० १५३।
९—गी० ८।८-१०, ९।२६, ११।१७ आदि।
१०—छा० उ० १।६।६-७ आदि।

स्वीयाम् तत्त्वमीमांसाम् आचारमीमांसाम् च व्याप्नुवन् एकः मौलिकः सिद्धान्तः अपि अस्ति यत् उक्तरूपः ईश्वरः अजः अपि सन् जगत्कल्याणाय विशिष्टव्यक्तित्वेन सह जगति अवतीर्णः अपि भवति ।[1]

**(अ) आचारमीमांसा**–गीतादर्शनम् प्रामुख्येन आचारमीमांसाप्रधानम् अस्ति । आचारमीमांसायाः क्षेत्रे अस्य स्वकीयम् विशिष्टम् मौलिकम् च योगदानम् अस्ति यस्य च कश्चन परिचयः पूर्वम् अपि दत्तः वर्तते ।[2] आचारमीमांसायाः क्षेत्रे गीतादर्शनस्य सर्वप्रमुखम् विशिष्टम् योगदानम् इदम् अस्ति यत् अनेन अकर्मण्यत्वस्य निष्क्रियत्वस्य वा विरोधम् कृत्वा, कर्मणः अनिवार्यत्वम् प्रदर्श्य, तस्य सर्वेषु क्षेत्रेषु समन्वयम् च प्रदर्श्य सर्वेषाम् जनानाम् कृते तस्य उपादेयत्वम् प्रदर्शितम् । यथा च गीतादर्शनस्य उद्भवस्य इतिहासेन ज्ञायते, अर्जुनः स्वकीयात् लौकिकाद् प्रत्यक्षफलकात् नियतात् कर्मणः–युद्धात्–तज्जन्यम् कश्मलम् विचार्य उपरतः अभवत्, अपि च, यथा च गीतायाः 'त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः' (१८।३) इत्यादिभिः वचनैः ज्ञायते, गीतादर्शनस्य उद्भवकाले साधनाक्षेत्रे अपि कैश्चित् कर्म दोषवत् त्याज्यम् मन्यते स्म, यच्च सांख्यसम्मतायाम् 'प्लवाः ह्येते अदृढा यज्ञरूपाः····एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यु ते पुनरेवापियन्ति' (मु० उ० १।२।७), इत्यादिषु औपनिषदेषु वचनेषु अभिव्यक्तायाम् 'कर्म बन्धनहेतुः भवति, न तु मोक्षहेतुः, इत्यस्याम् मान्यतायाम् आधारितम् संभाव्यते । एवम् कर्मलोपसंभावनायाम् उपस्थितायाम् सत्याम्, पूर्णतः कर्मलोपे निष्क्रियत्वे वा जाते च लोकनाशस्य एव संभावनायाम् उपस्थितायाम् सत्याम् गीतादर्शनेन समन्वयात्मिकया दृष्ट्या सर्वेषु क्षेत्रेषु कर्मणः समन्वयम् प्रदर्श्य विनाशात् लोकस्य संरक्षणस्य रूपे महत् जगत्कल्याणम् कृतम् ।

यथार्थे अथ च 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।' इत्यादिषु औपनिषदेषु वाक्येषु प्रतिपादिते सिद्धान्ते आधारिता गीतादर्शनस्य कर्मसम्बन्धिनी मान्यता अस्ति यत् सर्वेषाम् देहधारिणाम् प्रकृतिजन्यशरीरधारित्वेन प्रकृतिनियन्त्रणे स्थितत्वात्, प्रकृतेश्च स्वभावतः कर्मणि प्रवर्तकत्वात् कः अपि कर्मकरणेन विना क्षणमात्रम् अपि स्थातुम् एव न शक्नोति, अपि तु प्रकृतिपराधीनतया अवशः कर्म करिष्यति एव ।[3] एतदतिरिक्तम्, निष्क्रियस्य स्वयम् शरीरयात्रा जीवन-यात्रा वा एव न भवितुम् शक्नोति[4] । एवम्, कर्मणः अनिवार्यत्वे सति, केवलम् इदम् एव विचारणीयम् अवशिष्यते यत्

---

१—गी० ४।५-६ आदि ।

२—पृ० १५१-५२ ।

३—गी० ३।५; १८।५९-६० आदि ।

४—,, ३।८आदि ।

कर्मजन्यम् कश्मलम् बन्धनम् वा कथम् न प्राप्तम् स्यात् । अत्र एव गीतादर्शनस्य स्वकीयम् मौलिकम् योगदानम् ददाति । तस्य मान्यता अस्ति यत् कश्मलम् बन्धनम् वा मूलतः कर्मजन्यम् नास्ति, अपितु तदनुष्टानप्रकारजन्यम् अस्ति । 'योगः कर्मसु कौशलम्' इति वाक्यानुसारेण कर्मसु कर्मानुष्ठानेषु वा कौशलम् अपेक्षितम् वर्तते, यतो हि कर्मसु कौशलम् एव योगः कर्मयोगः वा अस्ति, अतः यदि कर्मसु कौशलम् प्रयुक्तम् स्यात् अर्थात् यदि कर्मानुष्ठानस्य अस्मिन् प्रचलिते प्रकारे यत् कर्म आसक्त्या फलाभिसन्धिना च सह क्रियते, इदम् परिवर्तनम् कृतम् स्यात् यत् तत् 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' (गी० २।४७) इत्यादिवाक्यानुसारेण निःसङ्गतया असक्ततया वा फलाभिसन्धिम् विना एव समभावेन क्रियताम् चेत् तदेव कर्मानुष्ठानम् योगः भविष्यति, पुनश्च कर्मजन्यम् कश्मलम् बन्धनम् वा किञ्चिन्मात्रम् अपि न भविष्यति, अपि तु तद्विपरीतम्, कर्म कश्मलजनकम् न सत् प्रसादजनकम् भविष्यति । अथ च तत् बन्धनहेतुः न सत् मोक्षहेतुः भविष्यति ।[1] उक्तप्रकारककर्मानुष्ठाने ज्ञानस्य समावेशेन कर्म पवित्रम् सत् बन्धनहेतुः न भवति । ज्ञानम् हि 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति वाक्यानुसारेण पवित्रम् वर्तते, अतः तत् स्वसंपृक्तम् कर्म अपि पवित्रम् करोति ।

उक्तेन विशिष्टेन प्रकारेण सह कृतम् कर्म सर्वेषु एव क्षेत्रेषु पूर्णतया समन्वितम् भवति । सर्वजनीने लौकिके क्षेत्रे तत् एवम् समन्वितम् भवति यत् तत् वैयक्तिकरूपेण आत्मनः देहातिरिक्तत्वम् नित्यत्वम् च जानतः जनस्य कर्मसाफल्यवैफल्यजन्यम् रागद्वेषात्मकम् सुखदुःखरूपम् च कश्मलम् अपहाय चित्तम् प्रसादयति[2], सार्वजनिकरूपेण च उक्तप्रकारेण जनेन स्वार्थम् विहाय कर्तव्यबुद्ध्या कृतत्वेन लोककल्याणसाधकम् भवति ।[3] साधनाक्षेत्रेषु ज्ञानमार्गे तत् चित्तस्य नैर्मल्यसम्पादनद्वारा ज्ञानमार्गोपयुक्ताम् योग्यताम् जनयति वर्धयति च[4], सहैव च तस्य एव अनामयपदप्राप्तिरूपस्य लक्ष्यस्य साधनम् भवति यत् केवलेन ज्ञानेन प्राप्तुम् अभीष्टम् अस्ति[5] । भक्तिमार्गे तत् भगवदर्पणबुद्ध्या कृतत्वेन तदर्चनरूपम् सत् तत्प्रीतिजननद्वारा तत्प्राप्तिरूपायाः मुक्तेः साधकम् भवति ।[6] भक्तिचरमरूपायाः शरणागतेः मार्गे तु तत् लक्ष्यभूतम् भगवदर्चनम् भगवत्कैङ्कर्यम् वा एव अस्ति ।[7] एवम् असक्ततया फला-

---

१—गी० २।३८-५१; ३।७,९,१९ आदि ।
२—„ २।३८,४८-५३ आदि ।
३—„ ३।२०-२६ आदि ।
४—„ २।६४-७२आदि ।
५—„ २।५१; ३।३,१९; ५।५ आदि ।
६—९।२७,२८ आदि ।
७—„ १८।६५-६६ आदि ।

भिसन्धिम् विना कृतम् कर्म सर्वेषु एव क्षेत्रेषु परमोपयोगितया समन्वितम् भवति । कर्मणः एतस्य अपूर्वस्य व्यापकस्य च समन्वयस्य कृते गीतादर्शनाय एव श्रेयः गच्छति ।

यथा च पूर्वम् उक्तम्[1], गीतादर्शनस्य आचारमीमांसायाः अनुसारेण परमनिःश्रेयसम् जगदतीते नित्ये धाम्नि परमपुरुषस्य भगवतः प्राप्तिः अस्ति[2], इयम् एव मुक्तिः अस्ति[3], यतो हि तत्र तम् प्राप्य पुनः जन्ममरण-चक्ररूपे संसारे आवृत्तिः न भवति । एतस्य परमनिःश्रेयसस्य कर्मयोगः अर्थात् उक्तरूपेण कृतम् कर्म, ज्ञानयोगः अर्थात् स्वस्वरूपज्ञानेन सह परमपुरुषस्व-रूपावगतिः भक्तियोगश्च अर्थात् भगवत्स्वरूपस्य प्रीतिपूर्वकम् अनुसन्धानम् इत्यादीनि साधनानि सन्ति[4], किन्तु एषु भक्तेः प्रामुख्यम् अस्ति[5], कर्म ज्ञानम् च तस्या एव अङ्गे स्तः । पुनश्च अस्मिन् विषये गीतादर्शनस्य आचारमीमां-सायाः चरमः सिद्धान्तः अस्ति यत् स्वयम् भगवन्तम् एव तत्प्राप्तिसाधनम् मत्वा तस्य एव शरणवरणम् कर्तव्यम्, कर्मज्ञानभक्त्यादीनि च सर्वाणि तत्प्रीत्यर्थम् एव यथाशक्ति सम्पाद्यानि ।[6]

अस्तु ! अत्र गीतादर्शनस्य तत्त्वमीमांसासम्वन्धिनाम् आचारमीमांसा-सम्वन्धिनाम् च यः संक्षिप्तः परिचयः दत्तः वर्तते तेन स्पष्टम् अस्ति यत् अस्य समन्वयात्मिका दृष्टिः कियती उदारा व्यापिका च अस्ति । अस्य एव फलम् यत् अनेन दर्शनेन एतदाधारितेन धर्मेण च वैदिकपरम्परानुयायी भारतीयसमाजः इयद्गम्भीररूपेण प्रभावितः कृतः अस्ति यत् सः बहोः कालात् प्रत्यक्षरूपेण अप्रत्यक्षरूपेण वा अस्य मान्यतानाम् संस्कारम् स्वचित्ते रक्षन्, तदनुकूलम् च आचरन् वर्तते ।

---

१—पृ० १५१ ।

२—गी० ८।२१-२२; १५।४-६ आदि ।

३—,, ८।१६,२०;१५।४-६ आदि ।

४—,, ८।८-११,२८;९।२५,३४; १०।१०-११; १२।३-११ आदि ।

५—गी० ८।२२; ११।५४-५५; १२।१४-२०;१८।५५ आदि ।

६—,, १८।६१-६६ आदि ।

३८

# श्रीमद्भागवतम्

१—महत्त्वम्—विशाले पुराणात्मके वाङ्मये श्रीमद्भागवतम् स्वप्रतिपाद्यगौरवेण मूर्धन्यताम् भजते। अष्टादशानाम् अपि पुराणानाम् सारः अत्र संगृहीतः वर्तते। एतदेव कारणम् यत् श्रीमद्भागवतपुराणस्य यावान् प्रचारः भारतीयजनतायाम् वर्तते, तावान् प्रचारः कस्य अपि अन्यस्य पुराणस्य नास्ति। वस्तुतः इदम् पुराणम् अतीव लोकप्रियम् अस्ति। ग्रामे-ग्रामे, नगरे-नगरे, कृषकाणाम् क्षेत्रकुटीरेषु, श्रेष्ठिनाम् भवनेषु, साधूनाम् आश्रमेषु, तीर्थेषु, मन्दिरेषु च सर्वत्र एव अस्य कथा पौराणिकैः वाचकैः वाच्यमाना भक्तैः श्रोतृभिश्च श्रूयमाणा वर्तते। यत्फलस्वरूपम् सर्वसाधारणः भारतीयः अस्य कथया सुपरिचितः अस्ति।

सर्वसाधारणेन वाचकेन वाच्यमानम्, सर्वसाधारणेन पाठकेन पठ्यमानम्, सर्वसाधारणेन च श्रोत्रा श्रूयमाणम् अपि इदम् पुराणम् इयत् विद्वत्तापूर्णम् अस्ति यत् अस्य बहुषु स्थलेषु ज्ञानविज्ञानवताम् विदुषाम् अपि बुद्धिः भ्राम्यति, अत एव अस्य विषये 'विद्यावतां भागवते परीक्षा' इति उक्तिः प्रथिता अस्ति। अस्य विद्वत्तापूर्णस्य गूढस्य पुराणस्य अनेकाः टीकाः जाताः सन्ति याः अस्य अर्थप्रकाशने प्रयतमानाः सत्यः अस्य गौरवम् वितन्वन्ति। अस्य विद्वत्तापूर्णत्वे अपि अस्य सरसता मधुरता च अपि एतादृशी विलक्षणा अस्ति यत् साहित्यरसिकाः भक्ताः अस्य पठने श्रवणे च पूर्णतः रसनिर्भराः जायन्ते, यतो हि अत्र भक्तिज्ञानविरागाणाम् काव्यमयी धारा अजस्ररूपेण प्रवहन्ती सती तान् निरन्तरम् आनन्दितान् करोति।

अस्य पुराणस्य उक्तासु विशेषतासु दृष्टासु सतीसु स्वयम् अस्य एव इयम् उक्तिः तथ्यपूर्णा प्रतीयते यत्—

एवं पुराणसन्दोहश्चतुर्लक्षसमन्वितः।
तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते॥....'

राजन्ते तावदन्यानि पुराणानि सतां गणे ।
यावन्न दृश्यते साक्षात् श्रीमद्भागवतं परम् ।।
सर्ववेदान्तसारं हि श्रीभागवतमिष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद् रतिः क्वचित् ।।[1]

'श्रीमद्भागवतं पुराणतिलकं यद् वैष्णवानाम् धनम्' (भा० माहा० ६।८२) इत्यादिवचनानुसारेण वैष्णवानाम् तु इदम् अमूल्यम् धनम् एव वर्तते। फलतः वैष्णवेषु अस्य अतीव सम्मानम् अस्ति। वल्लभसम्प्रदायनाम्नि वैष्णवसम्प्रदाये तु उपनिषदाम् ब्रह्मसूत्राणाम् गीतायाश्च प्रस्थानत्रय्याः स्थाने प्रस्थानचतुष्टयम् प्रस्थानचतुष्टयी वा मन्यते, अथ च तत्र श्रीमद्भागववतम् चतुर्थप्रस्थानरूपे स्वीक्रियते। चैतन्यसम्प्रदाये च इदम् न केवलम् चतुर्थप्रस्थानरूपे मन्यते, अपि तु ब्रह्मसूत्राणाम् अकृत्रिमम् भाष्यम् एव मन्यते ।

अस्तु ! इत्थम् श्रीमद्भावतस्य भारत व्यापकम् महत्त्वम् अस्ति ।

२—उद्भवः—स्वयम् श्रीमद्भागवतस्य 'इदं भागवतं नाम यन्मे भगवतोदितम्'[2] इत्यादिवचनानुसारेण अस्य उद्भवः स्वयम् भगवतः जातः। मूलतः भगवता कथित्वात, विविधरूपैश्च तेन सम्बद्धत्वात् अस्य 'भागवतम्' इति नाम अस्ति। अस्य सम्प्रदानस्य परम्परा श्रीमद्भागवतस्य विभिन्नेषु स्थलेषु एवम् वर्णिता अस्ति यत् सर्वप्रथमम् अस्य मूलेन भगवता इदम् ब्रह्मणे दत्तम्, ब्रह्मणा पुनः नारदाय दत्तम्, नारदेन च पुनः वेदव्यासाय कृष्णद्वैपायनाय दत्तम्, वेदव्यासेन पुनः इदम् स्वपुत्राय शुकाय दत्तम्, शुकेन च इदम् राज्ञे परीक्षिते श्रावितम्। तत्पश्चात् व्यासशिष्येण सूतेन इदम् शौनकादिभ्यः ऋषिभ्यः श्रावितम्। परीक्षित्पर्यन्ता इयम् परम्परा अस्मिन् रूपे वर्णिता अस्ति यत्—

कस्मै[3] येन[4] विभासितोऽयमतुलः ज्ञानप्रदीपः पुरा,
तद्रूपेण च नारदाय मुनये कृष्णाय[5] तद्रूपिणा ।
योगीन्द्राय[6] तदात्मनाथ भगवद्राताय[7] कारुण्यतस्-
तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ।।[8]

---

१—श्रीमद्भागवतम् १२।१३।६-१५ ।
२—भाग० २।७।५१ ।
३—ब्रह्मणे ।
४—परेण सत्येन भगवता ।
५—वेदव्यासाय कृष्णद्वैपायनाय ।
६—शुकाय ।
७—परीक्षिते ।
८—भाग० १२।१३।१९ ।

श्रीमद्भागवतानुसारेण भगवता चतुःश्लोकात्मकम् भागवतम् ब्रह्मणे दत्तम्, पुनः उक्तया परम्परया अस्य क्रमिके विकासे जाते तस्य वर्तमानम् रूपम् जातम्। अस्याम् परम्परायाम् वेदव्यासेन अस्य सर्वाधिकः विकासः कृतः, अतः स अस्य रचयिता मन्यते, यथाहि—

स संहितां भागवतीं कृत्वानुक्रम्य चात्मजम्।
शुकमध्यापयामास निवृत्तिनिरतं मुनिः ॥[1]

यतः द्वितीयस्कन्धात् शुकः स्वपितुः वेदव्यासात् अधीतम् भागवतम् परीक्षिते अभिधातुम् उपक्रमते, द्वादशस्कन्धस्य चतुर्थाध्यायस्य समाप्त्या सह च तत् समापयति, अतः स्पष्टम् अस्ति यत् अस्य वर्तमाने रूपे सम्पूर्णः प्रथमस्कन्धः द्वादशस्कन्धस्य च अन्तिमाः नव अध्यायाः व्यासप्रणीताः न सन्ति। एवमेव अवशिष्टे वर्तमाने रूपेऽपि कथाश्रवणप्रसङ्गेन परीक्षिता कृताः प्रश्नाः तेषाम् शुकदत्तानि उत्तराणि चेत्यादिकम् अन्यत् अपि प्रसङ्गागतम् च वस्तु व्यासप्रणीतम् न भवितुम् शक्नोति। फलतः, भागवतम् स्वकीये वर्तमाने पूर्णे रूपे तु व्यासप्रणीतम् मन्तुम् एव न शक्यते, अथ च सहैव इदम् अपि कथयितुम् अतीव कठिनम् अस्ति यत् अस्य कः कियान् च अंशः व्यासप्रणीतः अस्ति। अस्य वर्तमाने रूपे सम्पादनम् संस्करणम् वा वेदव्यासात् पश्चात् जातम्, इत्यत्र तु कश्चन संदेह एव नास्ति। भागवतस्य वर्तमाने रूपे द्वादश स्कन्धाः, पञ्चत्रिंशदुत्तरशतत्रयम् च अध्यायाः सन्ति। अत्र श्लोकाः अष्टादश सहस्राणि मन्यन्ते, यद्यपि सामान्यगणनानुसारेण तावन्तः न उपलभ्यन्ते।

**३—रचनायाः उद्देश्यम्**—श्रीमद्भागवते अस्य रचनायाः उद्देश्यम् इदम् वर्णितम् अस्ति यत् वेदानाम् व्यसने महाभारतस्य च प्रणयने कृते अपि यदा वेदव्यासस्य हृदये शान्तिः न आसीत्, तदा तेन 'किं वा भागवता धर्माः न प्रायेण निरूपिताः। प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः' इतिप्रकारेण विचारितम् यत् यतः तेन भागवताः धर्माः प्रायः न निरूपिताः, अतः तस्य हृदये शान्तिः नास्ति। तदैव समागतेन नारदेन अपि एतत् समर्थितम् भगवच्चरितवर्णनाय च तस्मै प्रेरणा दत्ता। फलतः तेन भागवतधर्माणाम् निरूपणाय भगवच्चरितानाम् च वर्णनाय भागवतम् प्रणीतम्।

**४—विषयः**—उक्तेन उद्देश्येन अस्य प्रतिपाद्यः विषयः अपि अस्मिन् रूपे स्पष्टः भवति यत् इदम् पुराणम् एकस्य भागवतधर्मस्य ग्रन्थस्य रूपे तस्य सिद्धान्तानाम् तदनुसारिणाम् च अन्येषाम् विषयाणाम् वर्णनम् करोति। भागवतधर्मस्य प्रमुखग्रन्थत्वात् आध्यात्मिकवितयबहुलत्वाच्च हेतोः अस्मिन् पुराणे 'पुराणं पञ्चलक्षणम्' इतिवाक्यानुसारेण पुराणेषु प्रतिपाद्यमानेभ्यः

---

१—भाग० १।७।८।

सर्गप्रतिसर्गादिभ्यः पूर्वोक्तेभ्यः[1] विषयेभ्यः अतिरेकरूपेण अन्येऽपि भक्तिज्ञानसम्बन्धिनः विषयाः प्रमुखतया प्रतिपाद्यत्वेन परिगृहीताः सन्ति, अथ च तत्फलस्वरूपम् इदम् पुराणम् स्वम् 'पञ्चलक्षणम्' इत्यस्य स्थाने 'तस्मा इदं भागवतं पुराणं दशलक्षणम्[2] इतिप्रकारेण 'दशलक्षणम्' कथयति। एवम् स्वयम् श्रीमद्भागवतस्य अनुसारेण अत्र दश विषयाः वर्णिताः सन्ति।

अत्र वर्णिताः एते दश विषयाः 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो 'मुक्तिराश्रयः[3]' इतिवचनानुसारेण सर्गः, विसर्गः, स्थानम्, पोषणम्, ऊतयः, मन्वन्तराणि, ईशानुकथाः, निरोधः, आश्रयश्च सन्ति। एतेषाम् विषयाणाम् स्वरूपस्य परिचयः अत्र एवम् दत्तः वर्तते—

भूतमात्रेन्द्रियधियां जन्म सर्ग उदाहृतः।
ब्रह्मणे गुणवैषम्याद् विसर्गः पौरुषः स्मृतः॥
स्थितिर्वैकुण्ठविजयः पोषणं तदनुग्रहः।
मन्वन्तराणि सद्धर्मं ऊतयः कर्मवासनाः॥
अवतारानुचरितं हरेश्चास्यानुवर्तिनाम्।
सतामीशकथाः प्रोक्ताः नानाख्यानोपबृंहिताः॥
निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः।
मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थितिः॥
आभासश्च निरोधश्च यतश्चाध्यवसीयते।
स आश्रयः परं ब्रह्म परमात्मेति शब्दयते॥

एतेषु दशसु लक्षणेषु विषयेषु वा दृष्टिपातेन ज्ञातम् भवति यत् अत्र सामान्यरूपेण सर्वपुराणसाधारणरूपेण वा स्वीकृतेषु सर्गप्रतिसर्गादिषु पञ्चसु लक्षणेषु सर्गमन्वन्तरे तु शब्दश एव गृहीते वर्तेते, प्रतिसर्गश्च 'निरोध' शब्देन गृहीतः वर्तते। अवशिष्टे वंश-वंशानुचरिते च अत्र स्वतन्त्रे न मते, अपितु अत्र भगवद्भागवतचरितरूपम् 'ईशानुकथा' नामकम् यत् स्वतन्त्रम् लक्षणम् मतम् अस्ति, तस्मिन् एव तयोः भगवद्भागवतचरितरूपे तदुपबृंहणभूताख्यानरूपे वा समावेशः कृतः अस्ति। श्रीमद्भागवते भागवतधर्मस्य प्रतिपाद्यत्वेन मुख्यत्वात्, तदनुसारेण अत्र मुख्यतया वर्णितस्य भगवद्भागवतचरितरूपस्य 'ईशानुकथा' नामकस्य लक्षणस्य स्वतन्त्रलक्षणत्वम् मतम् वर्तते। एतस्मात् हेतोः अथ च भागवतपुराणस्य आध्यात्मिकविषयबहुलत्वात् अत्र

---

१—पृ० १३४।
२—भाग० २।६।४३।
३— „ २।१०।१।
४— „ २।१०।३-७।

उक्तस्वरूपाणि स्थानम् स्थितिः वा, पोषणम्, ऊतयः, मुक्तिः, आश्रयश्च इत्येतानि स्वतन्त्राणि, लक्षणानि मतानि सन्ति। अत्र स्वतन्त्रलक्षणत्वेन स्वीकृतम् अपि 'विसर्ग' नामकम् लक्षणम् केवलम् सर्गस्य एव विस्ताररूपम विकासरूपम् वा एव अस्ति।

संक्षेपतः, श्रीमद्भागवते अत्र मुख्यत्वेन प्रतिपादितस्य भागवतधर्मस्य प्रमुखस्य सिद्धान्तस्य–अवतारवादस्य–अनुसारेण तद्व्याख्यारूपे विभिन्नानाम् भगवदवताराणाम् चरितानि एव स्वभावतः मुख्यतया वर्णितानि सन्ति। विभिन्नेषु अवतारेषु 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।'[1] इति-वचनानुसारेण अत्र भगवान् वासुदेवः श्रीकृष्णः प्रमुखतमः पूर्णश्च अवतारः मतः अस्ति, फलतश्च अत्र कृष्णावतारस्य कथा अपि प्रामुख्येन अधिकविस्तारेण च सह वर्णिता अस्ति। मुख्यतः भगवदवतारप्रसङ्गेन एव अत्र भागवतानाम् अर्थात् भगवद्भक्तानाम् चरितानि वर्णितानि सन्ति। भगवद्भागवतचरितोप-बृंहणरूपे च अत्र अनेकानि आख्यानानि वर्णितानि सन्ति। एतदतिरिक्तम्, अत्र भागवतधर्मानुकूलाः कर्मज्ञानभक्तिसम्बन्धिनः विभिन्नाः धार्मिकाः दार्शनिकाश्च विषयाः वर्णिताः सन्ति।

अस्तु! एवम् यतः श्रीमद्भागवते मुख्यतः भक्तिरसेन सह काव्य-रसधारा अजस्रम् प्रवहति, अतः इदम् स्वभावत एव रसिकान् स्वरसपानाय अस्मिन् रूपे आमन्त्रयति यत्—

> निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
> पिबत भागवतं रसमालयं मुहरहो रसिका भुवि भावुकाः॥
>
> (१।१।३)

---

१—भाग० १।३।२८।

## ३९

# श्रीमद्भागवतस्य सिद्धान्ताः

१—प्रास्ताविकम्—भगवता वासुदेवेन कृष्णेन गीतावर्णितानाम् सिद्धान्तानाम् रूपे यस्य भागवतधर्मस्य उपदेशः दत्तः, तस्य एव विस्तारः सोदाहरणम् व्याख्यानम् वा श्रीमद्भागवते समुपलभ्यते। गीताप्रतिपादिते भागवतधर्मे ये सिद्धान्ताः मूलरूपे दृष्टिगोचराः भवन्ति, तेषाम् एव अत्र विकासः कृतः दृश्यते, येन ते सुतराम् स्पष्टतया भासन्ते। एतदतिरिक्तम्, अत्र उद्धवाय उपदेशम् ददता भगवता वासुदेवेन श्रीकृष्णेन तस्मै उपदिश्यमानस्य एकस्य विषयस्य सम्बन्धे इदम् स्पष्टम् एव उक्तम् यत् अयम् एव विषयः तेन पूर्वम् अर्जुनाय उपदिष्टः।[1]

२—परतत्त्वम् भगवान्—श्रीमद्भागवते अपि गीतावत् परतत्त्वम् आत्मस्वरूपेण व्यक्तित्वविहीनम् अनन्तम् परमात्मतत्त्वम् मन्यमानम् सत् सर्वोच्चस्य परात्परस्य वा देवाधिदेवस्य भगवतः वासुदेवस्य रूपे विशिष्ट-व्यक्तित्वसम्पन्नम् अपि मतम् अस्ति। यतः विशिष्टदिव्यव्यक्तित्वसम्पन्नरूपे इदम् परतत्त्वम् अत्र प्रायः 'भगवान्' इति कथितम् अस्ति, अतः आत्मस्व-रूपेण व्यक्तित्वविहीने व्यक्तित्वयुक्ते च परतत्त्वे ऐक्यबोधनाय अत्र इदम् कथितम् अस्ति यत्—

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते॥
(२।१।११)

एतदतिरिक्तम्, अत्र स्पष्टरूपेण अपि 'सञ्चिन्तयेद्भगवतश्चरणार-विन्दम्' (३।२८।२१) इत्यादिप्रकारेण अनेकशः भगवतः दिव्यस्य रूपस्य निर्देशः कृतः वर्तते। वस्तुतः, अत्र परतत्त्वस्य भगवत्त्वम् अर्थात् ज्ञानाद्यन-

---

१—भाग० ११।१६।६-८।

न्तगुणयुक्तत्वे सति दिव्यमङ्गलविग्रहयुक्तत्वम् अधिकम् प्रकाशितम् अस्ति। भगवतः नित्यस्य धाम्नः अपि अत्र अनेकशः निर्देशः अस्ति।[1]

भागवतधर्मस्य एकस्य प्रमुखस्य सिद्धान्तस्य—अवतारवादस्य—तु इदम् पुराणम् एकम् विशिष्टम् व्याख्यानम् एव अस्ति। 'अवताराः ह्यसंख्येया: हरेः सत्त्वनिधेर्द्विजा:'[2] इत्यादिप्रकारेण भगवदवताराणाम् असंख्येयत्वम् प्रतिपाद्य सर्वत्र अपि प्रायः अवताराणाम् चरितानि एव मुख्यतया वर्णितानि सन्ति।

गीतावत् अत्र अपि प्रकृतिपुरुषयोः भगवदाधारकत्वम् तत्परतन्त्रत्वम् च मत्वा भगवान् वासुदेव एव 'वासुदेवात्परो ब्रह्मन् न चान्योऽर्थोऽस्ति तत्त्वतः' (२।५।१४) इत्यादिप्रकारेण परात्परः परमप्राप्यश्च मतः अस्ति, सर्वेषाम् च वेदयज्ञादीनाम् 'वासुदेवपरा वेदा वासुदेवपरा मखाः' (१।२।२८) इत्यादिरूपेण वासुदेवपरत्वम् एव स्थापितम् अस्ति।

३–भगवद्भक्तिः—'अहमात्माऽत्मनां धातः प्रेष्ठः सन् प्रेयसामपि। अतो मयि रतिं कुर्याद् देहादिर्यत्कृते प्रियः'[3] इत्यादिप्रकारेण वस्तुतः भगवतः सर्वेषाम् आत्मनाम् आत्मत्वेन तेन सर्वेषाम् प्रेष्ठेन फलतः ईप्सितेन च भाव्यम्, किन्तु अज्ञानवशात् जीवः इदम् न जानाति, अतः तस्मिन् रतिम् न करोति। अतः सर्वप्रथमम् एतादृशेन ज्ञानेन भाव्यम्। एतादृशस्य ज्ञानस्य प्रमुखम् साधनम् 'वासुदेवे भगवति भक्तियोगः प्रयोजितः। जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम्'[4] इत्यादिप्रकारेण भक्तियोगः अस्ति। फलतः स एव सदाचरणसत्सङ्गसेवनादिकः धर्मः पन्थाः वा सर्वोत्तमः अस्ति येन वासुदेवे भगवति भक्तिः स्यात्—'स वैः पुंसां परो धर्मः यतो भक्तिरधोक्षजे'[5], न 'ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह। वासुदेवे भगवति भक्तियोगो यतो भवेत्'[6]। भक्तियोगेन अन्येन केन अपि साधनेन वा जाते उक्तरूपे ज्ञाने अपि भक्तेः सहभावः परमावश्यकः अस्ति। भक्तिम् विना ज्ञानम् शुष्कम् अशोभनीयम् च अस्ति—'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्'[7]। भक्तियोगः ज्ञानमार्गस्य अपि अनुकूलः अस्ति—'नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः'[8], कैवल्यसंमतपथस्त्वथ भक्तियोगः' (२।२।१२)। भक्तिमार्गे च केवलम्

---

१—भाग० २।२।१७-३१; ३।१५; ६।२।४४-४६ आदि।
२—„ १।३।२६।
३—„ ३।६।४२।
४—„ १।२।७।
५— „ १।२।६।
६— „ २।२।३३।
७— „ १।५।१२।
८— „ २।१।७।

भगवान् एव प्रेष्ठः प्राप्यः अस्ति, मुक्तिश्च आनुषङ्गिकी भगवत्प्राप्त्यन्तर्भूता वा एव वर्तते। अतः उक्तप्रकारके ज्ञाने जाते अत्र लोके परत्र च परमप्रेष्ठस्य प्रीणनार्थम् एव कर्मज्ञानभक्त्यादिकम् सर्वम् कर्तव्यम्[1]। सामान्यतः भगवत्प्रीणनार्थम् कृतेन सर्वेण अपि कर्मज्ञानभक्त्यादिना भगवान् प्रीतः भवति, किन्तु भक्त्या एव सर्वाधिकरूपेण प्रीतः भवति—'प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता। न दानं न तपो नेज्या न शौचं न व्रतानि च। प्रीयतेऽमलया भक्त्या हरिरन्यद् विडम्बनम्,' (७।७।५१-५२)। एवम् कर्मज्ञानादिकम् भक्तेः अङ्गमात्रम् अस्ति, केवलम् भक्तिः एव भगवतः प्रीणनस्य प्रमुखम् साधनम् अस्ति।

भक्तेः चरमम् रूपम्, 'श्रवणं कीर्तनं विष्णोः स्मरनं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।'[2] इत्यादिप्रकारेण सर्वात्मभावेन भगवते आत्मनिवेदनरूपम् तस्य शरणवरणम् अस्ति। भगवदर्पितात्मनाम् सर्वात्मभावेन कृतया शरणागतिरूपया भक्त्या प्रीतः सन् भगवान् अस्वतन्त्र इव तदधीनः भवति–'अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विजः' (९।४।६३), अथ च 'हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे।' (९।४।६५) इत्यादिप्रकारेण तान् कथमपि त्युक्तम् न उत्सहते। यद्यपि एतादृशाः एकान्तिनः भगवद्भक्ताः 'मामेष्यसि मुक्तबन्धः' (७।१०।१३) इत्यादिरूपेण स्वभावतः संसारवन्धनमुक्ताः सन्त एव भगवतः नित्यम् धाम गत्वा[3] तत्र तम् प्राप्नुवन्ति, किन्तु ते मूलतः मुक्तिम् न वाञ्छन्ति, अपि तु भगवतः, परमप्रेष्ठत्वात् अत्र परत्र वा केवलम् भगवन्तम्, तद्विषयिणीम् रतिम् तदनुकूलम् च तस्य भजनम् सेवनम् वा एव वाञ्छन्ति।[4]

अत्र आगत्य भगवत्प्राप्तिसाधनभूता भक्तिः साधनरूपा न सती अहैतुक्याः स्वाभाविक्याः वा परायाः भक्तेः भगवद्रतेः वा रूपे परमम् साध्यम् भवति। यतः एतादृशाः अन्यनिरपेक्षाः अनन्याः वा भक्ताः भगवतः प्रियतमाः भवन्ति, अतः सः सर्वदा अत्र परत्र च तेषाम् प्रेमपराधीनः तिष्ठति।[5]

एवम्, यथा च उक्तेन संक्षिप्तेन विवेचनेन स्पष्टम् अस्ति, भगवता श्रीकृष्णेन उपदिष्टस्य गीताप्रतिपादितस्य भागवतधर्मस्य एव सिद्धान्ताः श्रीमद्भागवते स्पष्टतया व्याख्याताः सन्ति। अस्य भागवतधर्मस्य भगवदर्चा-

---

१—भाग० १।२।६,१३,२९; ११।२।३६ आदि।

२— ,, ७।५।२३।

३— ,, ६।२।४४-४९ आदि।

४— ,, ३।२९।१३; ६।११।२५;९।४।६७;११।२।५३;;११।१४।१४ आदि।

५— ,, ९।४।६३-६८;१०।३२।२०-२२;११।१४।१५-१६ आदि।

सन्बन्धि यत् पञ्चरात्रादिषु वैष्णवागमेषु प्रतिपादितम् विशिष्टम् तान्त्रिकम् रूपम् विकसितम्, तत् अपि अत्र संक्षेपतः वर्णितम् उपलभ्यते ।[१]

अस्तु ! एवम् यतः भागवतानाम् वैष्णवानाम् वा उक्तरूपः जगत्कल्याणकरः भगवत्प्रियश्च परमः धर्मः श्रीमद्भागवते वर्णितः अस्ति, अतः अनेन अस्मिन् रूपे कृता स्वस्य विज्ञप्तिः पूर्णतः अवितथा एव अस्ति यत्—

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्,
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः,
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥

(१२।१३।१८)

---

१—भाग० १।५।३७-३८; ६।१६।१८; ११।२७ आदि ।

४०

## शास्त्रम् काव्यम् च

**१—वाङ्मयस्य द्वैविध्यम्**—आधुनिककाले वाङ्मयम् प्रायः द्विधा विभज्यते—ज्ञानवाङ्मयम्, भाववाङ्मयम् च। ज्ञानवाङ्मयम् केवलम् ज्ञानम् ददाति, फलतश्च केवलम् मस्तिष्केन सम्बद्धम् भवति। भाववाङ्मयम् यद्यपि प्रायः अन्यस्रोतोभ्यः प्राप्तम् ज्ञानम् अपि ददाति, किन्तु तस्य मुख्यम् कार्यम् भावोन्मेषः अस्ति, फलतश्च तत् मस्तिष्केन सम्बन्धम् रक्षत् अपि विशिष्टरूपेण हृदयेन सम्बद्धम् भवति। ज्ञानवाङ्मयस्य अन्तः विज्ञानम् दर्शनम् च इत्यादिभिः विषयैः सम्बद्धम् वाङ्मयम् समायाति, भाववाङ्मयस्य च अन्तः काव्यम् नाटकम्, कथा च इत्याद्यात्मकम् वाङ्मयम् समायाति। भारतीयपरम्परानुसारेण यद्यपि, यथा च पूर्वम् अनेकशः उक्तम्, वाङ्मयम् वैदिकम् लौकिकम् च इति द्विधा विभज्यते, किन्तु पुनरपि ज्ञानवाङ्मय-भाववाङ्मयरूपे कृतस्य उक्तस्य विभाजनस्य प्रतिनिधिभूतम् विभाजनम् अत्र प्रायः शास्त्रम् काव्यम् च इति रूपे उपलभ्यते। अस्मिन् विभाजने शास्त्रम् ज्ञानवाङ्मयस्य प्रतिनिधिभूतम् अस्ति, काव्यम् च भाववाङ्मयस्य प्रतिनिधिभूतम् अस्ति। यद्यपि आधुनिकस्य साहित्यशास्त्रस्य अनुसारेण काव्यम् भाववाङ्मयस्य काव्यनाटक-कथादिषु विभिन्नेषु भेदेषु एकः भेदः मन्यते, किन्तु यतः, यथा च इदम् सुविदितम् अस्ति, संस्कृतसाहित्यशास्त्रस्य अनुसारेण काव्यनाटककथादयः सर्वे अपि भाववाङ्मयस्य भेदाः काव्यम् एव मन्यन्ते, अतः भारतीयपरम्परानुसारेण काव्यम् सम्पूर्णस्य अपि भाववाङ्मयस्य प्रतिनिधिभूतम् अस्ति।

उक्तप्रकारेण शास्त्रस्य काव्यस्य च क्रमशः ज्ञानवाङ्मयभाववाङ्मययोः प्रतिनिधित्वेन यत्र शास्त्रम् अज्ञातम् तथ्यम् ज्ञापयति, तत्र काव्यम् प्रायः अन्यस्रोतोभ्यः ज्ञातम् तथ्यम् ज्ञापयति अथ च तत् एतादृशे अभिनवे रमणीये च रूपे प्रस्तौति यत् तत् अभिनवतया सृज्यमानरूपे प्रतीयमानम् सत्

हृदयम् आन्दोलयत् तत् भावोन्मेषयुक्तम् चमत्कृतम् वा करोति। इत्थम् यत्र शास्त्रम् पूर्वतः स्थितमेव तथ्यम् केवलम् ज्ञापयति, तत्र काव्यम् तथ्यस्य नवीनरूपे सृष्टिम् इव अपि करोति।

२—**विज्ञानम् शास्त्रम् च**—यद्यपि यतः विज्ञानम् शास्त्रस्य प्रतिपाद्यम् भवति, अतः विज्ञाने शास्त्रे च केवलम् इयत् एव अन्तरम् अस्ति यत् यदा विज्ञानम् शास्त्रस्य प्रतिपाद्यविषयः अस्ति, तदा शास्त्रम् विज्ञानस्य प्रतिपादकम् अस्ति। उदाहरणार्थम्, यथा ज्योतिषाम् ज्ञानम् ज्योतिर्विज्ञानम् अस्ति, अथ च तस्य वाङ्मयम् 'ज्योतिःशास्त्रम्' अस्ति। एवमेव प्रतिपाद्यविषयभूतेषु भौतिकविज्ञानादिषु तत्प्रतिपादकेषु च भौतिकशास्त्रादिषु विज्ञेयम्। फलतश्च यदि विज्ञानप्रतिपादकम् वाङ्मयम् अपि 'विज्ञानम्' उच्येत चेत् एकस्य वाङ्मयस्य रूपे विज्ञाने शास्त्रे च किञ्चित् अपि अन्तरम् नास्ति, किन्तु पुनरपि अधुना कैश्चित् विद्वद्भिः विज्ञानस्य शास्त्रस्य च एकस्य वाङ्मयस्य रूपे ज्ञानकाङ्मयस्य अन्तः मन्यमानत्वे अपि तत्र इदम् अन्तरम् मन्यते यत् यत्र विज्ञानस्य विषयः केवलम् विज्ञानम् अर्थात् अनुभवैः प्रयोगैः वा परीक्षितम् निश्चयात्मकम् प्रत्यक्षम् ज्ञानम् भवति, तत्र शास्त्रस्य विषयः केवलम् एतादृशम् ज्ञानम् एव न भवति, अपितु तत् अतिरिच्य विज्ञानाधारिततर्कैः प्राप्तम्, किन्तु प्रयोगैः अपरीक्षितम्, फलतश्च अनिश्चयात्मकम् अप्रत्यक्षम् ज्ञानम् अपि भवति। एतदतिरिक्तम्, यत्र विज्ञानम् केवलम् तथ्यज्ञापनम् करोति, तत्र शास्त्रम् तथ्यस्य सम्बन्धे व्यवहारोपयोगि शासनम् अर्थात् उपदेशम् अपि करोति। एवम् एतेषाम् विदुषाम् अनुसारेण शास्त्ररूपे प्रसिद्धानि दर्शनशास्त्रधर्मशास्त्रव्याकरणशास्त्रादीनि शास्त्राणि सन्ति, विज्ञानानि न सन्ति।

३—**काव्यस्य विज्ञानात् शास्त्राच्च अतिरिक्तत्वम्**—उक्तप्रकारेण विज्ञानम् शास्त्रम् च परस्परम् अभिन्ने मन्येताम् भिन्ने वा, किन्तु काव्यम् तु निश्चितरूपेण एतद्भिन्नम् एव अस्ति। काव्यम् न तु विज्ञानवत् केवलम् तथ्यस्य ज्ञापनम् कृत्वा विरमति, न च शास्त्रवत् तथ्यस्य ज्ञापनम् कुर्वत् तस्य सम्बन्धे व्यवहारोपयोगि शासनम् कृत्वा विरमति, अपितु अतोऽपि अग्रे गत्वा तथ्यम् अभिनवरूपे प्रस्तौति। यद्यपि काव्यम् तथ्यस्य ज्ञापनम् अपि करोति, किन्तु तेन कृतम् इदम् ज्ञापनम् मौलिकम् न भवति, यतो हि तत् अन्यैः एव एतादृशैः स्रोतोभिः पूर्वम् एव मौलिकरूपेण कृतम् भवति येषाम् च मुख्यम् कार्यम् एव मौलिकरूपेण तथ्यज्ञापनम् अस्ति। एवमेव यद्यपि काव्यम् व्यवहारोपयोगिनम् उपदेशम् अपि करोति, किन्तु इदम् अपि कार्यम् तस्य मौलिकम् फलतश्च मुख्यम् नास्ति, यतो हि इदम् अन्यैः एव एतादृशैः स्रोतोभिः पूर्वत एव कृतम् भवति येषाम् च मुख्यम् कार्यम् एव

शासनम् उपदेश: वा अस्ति। काव्यस्य तु मुख्यम् मौलिकम् च कार्यम् स्वोद्देश्यानुसारेण केवलम् तथ्यस्य स्वकीये मौलिके रूपे प्रस्तावनम् अस्ति। यदि कदाचित् काव्यस्य उद्देश्यम् केवलम् तथ्यज्ञापनम् भवति, तदा तत् ज्ञापनीयम् तथ्यम् विज्ञानवत् शास्त्रवत् वा मुख्यरूपेण न ज्ञापयति, अपितु एतादृशे रूपे ज्ञापयति येन तथ्यम् अवाच्यम् सत् अपि व्यङ्ग्यरूपेण प्रकाशितम् भवति। एवमेव यदि कदाचित् काव्यस्य उद्देश्यम् केवलम् शासनम् उपदेश: वा भवति, तदा तत् शास्त्रवत् मुख्यरूपेण शासनम् उपदेशम् वा न करोति, अपि तु एतादृशे रूपे करोति येन तस्य अवाच्यत्वे अपि अभिव्यक्ति: भवति। वस्तुतस्तु, यथा च इदानीम् एव पूर्वम् उक्तम्, तथ्यज्ञापनम् शासनम् वा काव्यस्य मुख्यम् कार्यम् एव नास्ति। यदि किमपि काव्यम् मुख्यरूपेण इदम् एव कार्यम् अङ्गीकरोति चेत् तत् काव्यरूपे अथवा न्यूनातिन्यूनम् उत्तमकाव्यरूपे सम्मानितम् न भवति। काव्यस्य तु मुख्यम् कार्यम्, यथा च अत्रैव पूर्वम् उक्तम्, इदम् एव अस्ति यत् तत् तथ्यम् एतादृशे अभिनवे रमणीये च रूपे प्रस्तौति यत् तत् तथ्यम् अभिनवतया सृज्यमानरूपे प्रतीयमानम् सत् हृदयम् आन्दोलयत् तत् भावोन्मेषयुक्तम् चमत्कृतम् वा करोति। कदाचित् तु काव्येन तथ्यम् एतादृशे रूपे प्रस्तूयते यत् तत् हृदये भावोन्मेषम् करोति, कदाचित् एतादृशे रूपे प्रस्तूयते यत् तत् हृदये भावोन्मेषम् न कुर्वत् अपि तत् स्वेन रूपेण चमत्कृतम् करोति।

४—**संस्कृतवाङ्मयस्य शास्त्रकाव्यरूपे विभाजनम्**—संस्कृतवाङ्मयस्य शास्त्रस्य काव्यस्य च रूपे प्राय: एवम् विभाजनम् मन्यते यत् समग्रम् अपि वैदिकम् वाङ्मयम् मुख्यतया शास्त्रस्य अन्त: मन्यते, यद्यपि केषुचित् वैदिकेषु मन्त्रेषु, विशेषत: ऋग्वेदीयेषु बहुषु मन्त्रेषु काव्यत्वम् अपि उपलभ्यते। वैदिकेवाङ्मये वेदाङ्गानि अपि सन्ति यानि च विशुद्धरूपेण विभिन्नानि शास्त्राणि एव सन्ति। धर्मसूत्राणि स्मृतयश्च धर्मशास्त्ररूपे शास्त्रस्य एव अन्त: सन्ति, विभिन्नानि दर्शनानि दर्शनशास्त्ररूपे शास्त्रम् एव मन्यन्ते। इतिहासपुराणानि शास्त्रस्य काव्यस्य च मिश्रितरूपाणि सन्ति। यथा च इतिहासमूर्द्धन्यस्य वाल्मीकीयरामायणस्य आदिकाव्यरूपे मान्यतया एव स्पष्टम् अस्ति यत् तस्य काव्यत्वम् अस्ति, अथ च सहैव तस्य वचनानाम् परम्परायाम् शास्त्रवचनरूपे अपि मान्यता अस्ति। एवमेव महाभारतम् स्वस्य एव 'कृतं मयेदं भगवन् काव्यं परमपूजितम्' इत्यादिवचनानाम् अनुसारेण काव्यम् अस्ति, अथ च तस्य वचनानि शास्त्रवचनरूपे अपि परम्परायाम् सम्मान्यानि सन्ति। एतादृशी एव स्थिति: विभिन्नानाम् पुराणानाम् वर्तते। उदाहरणार्थम्, श्रीमद्भागवते बहुषु स्थलेषु काव्यत्वम् उत्कृष्टरूपेण स्फुरत् वर्तते, अथ च तस्य, यथा च 'शुकशास्त्रकथा न पीता' इत्यादिवचनै: स्पष्टम् अस्ति, परम्परायाम् शास्त्ररूपे अपि मान्यता अस्ति।

शास्त्रवाङ्मयस्य अन्तः समागच्छद्भ्यः उक्तेभ्यः मुख्येभ्यः वाङ्मयेभ्यः ग्रन्थेभ्यश्च अतिरिक्तम् यत् काव्यनाटककथाख्यायिकाद्यात्मकम् भाववाङ्मयम् वर्तते तत्, यथा च अत्रैव पूर्वम् उक्तम्, संस्कृतसाहित्यशास्त्रस्य अनुसारेण काव्यवाङ्मयम् अस्ति ।

**५—संस्कृतसाहित्यशास्त्रानुसारेण काव्यस्य विधाः**—संस्कृतसाहित्यशास्त्रस्य अनुसारेण काव्यवाङ्मयम् मुख्यतः वर्गद्वये विभक्तम् मन्यते—दृश्यकाव्यम् श्रव्यकाव्यम् च । तत्र दृश्यम् अभिनेयम् भवति । इदम् रूपकम् अपि उच्यते । दृश्यकाव्यस्य रूपकस्य वा नाटकादीनि दश रूपकाणि नाटिकादीनि च अष्टादश उपरूपकाणि इति अष्टाविंशतिः भेदाः मन्यन्ते, येषु नाटकम् प्रमुखम् अस्ति येन प्रायः सर्वेपि रूपकभेदाः 'नाटक' शब्देन एव अभिधीयन्ते । यद्यपि आधुनिकम् समीक्षाशास्त्रम् नाटकम् काव्यात् पृथक् एकाम् विधाम् मन्यते, किन्तु संस्कृते निबद्धम् प्राचीनम् भारतीयम् समीक्षाशास्त्रम् तु तत् उक्तप्रकारेण दृश्यकाव्यस्य रूपे काव्यस्य एव एकम् भेदम् रूपम् वा मन्यते । अस्य कारणम् इदम् अस्ति यत् यत्र आधुनिकम् समीक्षाशास्त्रम् नाटकस्य मुख्यतत्त्वेषु काव्यस्य मुख्यम् तत्त्वम्–रसन् भावम् वा–न मन्यते, तत्र प्राचीनम् भारतीयम् समीक्षाशास्त्रम् 'वस्तु नेता रसस्तेषां भेदकः' इत्यादिरूपे रसम् रूपकस्य, यस्य च नाटकम् उक्तप्रकारेण एकः मुख्यः भेदः अस्ति, मुख्यम् तत्त्वम् मन्यते । अस्य समीक्षाशास्त्रस्य अनुसारेण रूपकम् रसविहीनम् भवितुम् न शक्नोति, फलतश्च तत् काव्यस्य परिधेः बहिर्गन्तुम् न शक्नोति, अत एव च तत्र पद्यानाम् अपि प्रयोगः बाहुल्येन भवति, यतो हि रसाभिव्यञ्जने पद्यम् गद्यस्य अपेक्षया अधिकम् सहायकम् भवति । रूपकस्य नाटकस्य वा काव्यस्य एव रम्यरूपत्वात् 'काव्येषु नाटकं रम्यम्, इत्यादिकम् उच्यते ।

संस्कृते कालिदासभवभूत्यादीनाम् कवीनाम् अभिज्ञानशाकुन्तलोत्तररामचरितादीनि रूपकाणि नाटकानि वा प्रसिद्धानि सन्ति, यानि च दृश्यकाव्यस्य प्रतिनिधिभूतानि सन्ति ।

श्रव्यकाव्यम्, यच्च पाठ्यकाव्यम् अपि वक्तुम् शक्यते, श्रोतव्यमात्रम् भवति । यदा च- दृश्यकाव्यम् श्रोतव्यम् पाठ्यम् वा सत् अभिनेयतया दृश्यम् अपि भवति ।

श्रव्यकाव्यम् प्रथमतः पद्यमयम्, गद्यमयम्, गद्यपद्यमयम् च इतिरूपे त्रिधा भवति । पद्यमयम् श्रव्यकाव्यम् पुनः प्रबन्धकाव्यम् मुक्तककाव्यम् च इतिरूपे द्विविधम् भवति । तत्र शृङ्खलाबद्धस्य इतिवृत्तस्य रसात्मकम् वर्णनम् कृत्वा अखण्डरसधारायाम् स्नानम् कारयत् काव्यम् प्रबन्धकाव्यम् भवति । अस्य,मुख्यतः द्वौ भेदौ भवतः—महाकाव्यम् खण्डकाव्यम् च । अत्र महा-

काव्यम् अपेक्षाकृतरूपेण व्यापकस्य पूर्णस्य च इतिवृत्तस्य रसात्मकम् वर्णनम् कृत्वा जातीयस्य जीवनस्य दर्शनम् कारयत् काव्यम् भवति, यथा—वाल्मीकीयरामायणम्, महाभारतम्, रघुवंशम्, कुमारसम्भवम्, किरातार्जुनीयम् चेत्यादीनि काव्यानि। संस्कृतसाहित्यशास्त्रे 'सर्गवन्धो महाकाव्यं तत्रैको नायकः सुरः' इत्यादिरूपे महाकाव्यस्य विस्तृतम् लक्षणम् वर्णितम् अस्ति। खण्डकाव्यम् अपेक्षाकृतरूपेण एकाङ्गिनः अपूर्णस्य च इतिवृत्तस्य रसात्मकम् वर्णनम् कृत्वा व्यक्तिगतस्य जीवनस्य आभासनम् कारयत् काव्यं भवति, यथा मेघदूतादीनि काव्यानि। सेतिवृत्तानि गीतिकाव्यानि अपि प्रायः खण्डकाव्यस्य एव अन्तर्गतानि सन्ति। मुक्तककाव्यम् इतिवृत्तात्मकशृङ्खलाविहीनस्य स्वतन्त्रस्य विषयस्य वर्णनम् कृत्वा रसविन्दुवर्षकम् विलक्षणया अभिव्यक्त्या चमत्कारकम् वा काव्यम् भवति, यथा अमरुकशतकादीनि। आत्माभिव्यञ्जकानि गीतानि अपि प्रायः मुक्तककाव्यस्य एव अन्तः सन्ति। सूक्तिकाव्यम्, यस्मिन् रसाभिव्यञ्जनेन विना एव केवलम् उक्तिवैचित्र्येण सह कस्य अपि तथ्यस्य व्यञ्जना क्रियते, मुक्तककाव्यस्य एव एकम् रूपम् अस्ति। नीतिपद्यानि च, यदि तेषु काव्यत्वम् अस्ति, मुक्तककाव्यान्तर्गतानि एव वर्तन्ते।

गद्यमयम् काव्यम् गद्यकाव्यम् वा मुख्यतः द्विविधम् भवति—कथा आख्यायिका च। अनयोः उभयोः अपि गद्येन सरसवस्तुवर्णनम् भवति, किन्तु यत्र कथायाम् इतिवृत्तम् प्रायः काल्पनिकम् भवति, तत्र आख्यायिकायाम् तत् प्रायः तथ्यभूतम् ऐतिहासिकम् वा भवति। इत्थम् कादम्बर्यादयः कथाः सन्ति, हर्षचरितादयश्च आख्यायिकाः सन्ति।

गद्यपद्यमयम् काव्यम् 'चम्पूः' इत्युच्यते। नलचम्प्वादीनि प्रसिद्धानि चम्पूकाव्यानि सन्ति। गद्यपद्यमयी राजस्तुतिः 'विरुदम्' उच्यते। शिलालेखेषु विरुदानि उपलभ्यन्ते, अन्यत्र चापि तेषाम् दर्शनम् कर्तुम् शक्यते।

अस्तु! उक्तरीत्या भारतीयपरम्परानुसारेण वाङ्मयम् मुख्यतया शास्त्रम् काव्यम् चेति वर्गद्वये विभज्यते। अथ च अस्मिन् वर्गद्वये विभक्तम् संस्कृत-वाङ्मयम् स्वरूपे अतीव व्यापकम् परिमाणे च अतीव विशालम् सत् विश्ववाङ्मये स्वकीयम् महत्त्वपूर्णम् स्थानम् दधत् विराजते।

४१

## काव्यस्वरूपम्

१—**काव्यस्वरूपस्य व्यापकत्वम्**—इदम् सुविदितम् अस्ति यत् काव्यस्वरूपस्य परिचयम् दातुम् प्राचीनकालात् आरभ्य अद्यावधि विद्वद्भिः काव्यस्य इयन्ति परिभाषापराभिधानानि लक्षणानि विरचितानि यत् तेषाम् विवेचनम् तु दूरे, यदि कः अपि तानि संगृह्य लिखेत् चेत् एकः पर्याप्तपरिमाणः ग्रन्थः प्रस्तुतः भवितुम् शक्नोति। एतेषाम् असंख्यानाम् काव्यलक्षणानाम् विरचने सर्वैः अपि लक्षणकारैः स्वकीयायाः विद्वत्तायाः विवेकबुद्धेश्च परिचयः दत्तः अस्ति, फलतः एषाम् अयम् प्रयत्नः श्लाघनीय एव अस्ति। किन्तु अत्र विषये प्रश्नस्तु अयम् उपस्थितः भवति यत् विभिन्नैः विद्वद्भिः काव्यस्य विभिन्नानि लक्षणानि कथम् विरचितानि, कथम् वा तेषु काव्यलक्षणविषये ऐकमत्यम् न अतिष्ठत्। अस्य प्रश्नस्य उत्तरम् इदमेव प्रतिभाति यत् यद्यपि काव्यस्वरूपस्य अस्मिन् रूपे अभिज्ञानम् विदुषाम् एव किम्, सर्वसाधारणनाम् जनानाम् अपि प्रायः अस्ति यत् ते काम् अपि काव्य-कृतिम् दृष्ट्वा श्रुत्वा वा झटिति एव इदम् अभिजानन्ति यत् सा एका काव्य-कृतिः अस्ति, अत एव च ते रामायणरघुवंशादीन् काव्यग्रन्थान् काव्यरूपे मन्यन्ते, किन्तु पुनरपि काव्यस्य स्वरूपम् इयत् व्यापकम् अस्ति यत् तस्य विषये न तु इदम् कथयितुम् शक्यते यत् तत् ईदृक् एव अस्ति, यतो हि तत् निरन्तरम् नवाम् नवाम् दशाम् अवस्थाम् वा धारयत् सत् नवम्-नवम् सम्पद्य-मानम् तिष्ठति, न च कस्याम् अपि तदीयायाम् अवस्थायाम् इदमेव कथयितुम् शक्यते यत् तत् इयत् एव अस्ति, इयतः अधिकम् नास्ति, यतो हि तत् सर्वदा विविधरूपाणि व्याप्नुवत् सत् प्रायः अपरिमिततया तिष्ठति। काव्यस्वरूपस्य अस्याः व्यापकतायाः हेतोः तस्य परिचायकम् किमपि लक्षणम् तत् समग्र-रूपेण व्याप्तुम् परिभाषितुम् वा स्वभावत एव शक्तम् न भवति, किन्तु यतः एतदर्थम् प्रयत्नास्तु क्रियमाणा एव आसन्, अतः एतेषाम् प्रयत्नानाम् फल-स्वरूपम् एव असंख्यानि विभिन्नानि काव्यलक्षणानि अस्तित्वम् प्राप्नुवन्। काव्यस्वरूपस्य ईदृक्तया इयत्तया च अनवधारणीयत्वात् महाकवेः

कालिदासस्य अन्यविषयसम्बन्धे कथिता इयम् उक्तिः काव्यस्य सम्बन्धे अपि यथार्थरूपेण प्रयोक्तुम् शक्यते यत्—'विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा। (रघु० १३।५)।

काव्यस्वरूपस्य व्यापकत्वात् हेतोः तस्य विद्यमानेषु असंख्येषु लक्षणेषु कस्य अपि विषये इदम् कथयितुम् न शक्यते यत् तत् काव्यस्वरूपम् समग्ररूपेण व्याप्नोति। यद्यपि सर्वाणि काव्यलक्षणानि काव्यस्वरूपस्य याम् काञ्चित् विशेषताम् एव न्यूनाधिकरूपेण द्योतयन्ति, फलतश्च तानि काव्यस्वरूपस्य यस्य कस्यचित् अंशस्य उद्‌घाटनात् हेतोः तस्य अंशस्य सम्बन्धे अवितथानि एव सन्ति, किन्तु यदि तेषु कस्यचित् विषये इयम् घोषणा क्रियते चेत् यत् तेन सम्पूर्णम् काव्यस्वरूपम् व्याप्तम् चेत् इयम् घोषणा सत्यात् अपेता एव स्थास्यति। उक्तप्रकारेण यद्यपि विभिन्नानि काव्यलक्षणानि समग्ररूपेण काव्यस्वरूपम् व्याप्तुम् असमर्थानि सन्ति, किन्तु अत्र तेषाम् दोषः नास्ति, अपि तु काव्यस्य एव इदम् गौरवम् अस्ति यत् तस्य स्वरूपम् एव इयत् व्यापकम् वर्तते यत् तत् कथमपि व्याप्तुम् न पार्यते।

२—**काव्यलक्षणानाम् सार्थकत्वम्**—समग्ररूपेण काव्यस्वरूपम् व्याप्तुम् असमर्थानि अपि सन्ति विभिन्नानि काव्यलक्षणानि निरर्थकानि न सन्ति, यतो हि तानि काव्यस्वरूपस्य विभिन्नानाम् विशेषतानाम् उद्‌घाटनेन तस्य यथाशक्यम् परिचयम् दातुम् प्रयतन्ते, येन काव्यस्वरूपस्य विश्लेषणे साहाय्यम् उपलभ्यते। उदाहरणार्थम् यथा, भारतीयेषु काव्यलक्षणेषु यत्र 'शब्दार्थौ काव्यम्' अथवा 'शब्दार्थौ सहितौ काव्यम्' इतिसदृशैः साधारणैः लक्षणैः इदम् ज्ञातम् भवति यत् काव्यस्वरूपस्य सङ्घटनम् शब्दार्थाभ्याम् भवति, अथ च काव्यस्वरूपसङ्घटकौ शब्दार्थौ सहितौ अर्थात् हितेन सहितौ परस्परम् समञ्जसौ वा भवतः, तत्र 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इतिसदृशैः किञ्चिद्विशिष्टैः लक्षणैः इदम् ज्ञातम् भवति यत् केवलम् साधारणौ सहितौ वा शब्दार्थौ काव्यम् न स्तः, अपितु दोषरहितौ, गुणसहितौ, प्रायः अलङ्कारयुक्तौ च तौ काव्यम् भवतः। एवमेव अन्यैः अपि विभिन्नैः काव्यलक्षणैः काव्यस्वरूपस्य परिचयः न्यूनाधिकरूपेण प्राप्त एव भवति। इयमेव स्थितिः विदेशीयानाम् विभिन्नानाम् काव्यलक्षणानाम् वर्तते। इत्थम् विभिन्नानाम् काव्यलक्षणानाम् यस्मिन् कस्मिन् अंशे काव्यस्वरूपपरिचायकत्वेन सार्थकत्वम् एव अस्ति।

३—**प्रमुखानि भारतीयानि काव्यलक्षणानि**—यद्यपि केवलम् भारतीयानि अपि काव्यलक्षणानि अनेकानि सन्ति, किन्तु पुनरपि तत्र कतिपयानि एव अधिकप्रसिद्धानि सन्ति। एषु प्रसिद्धेषु काव्यलक्षणेषु एकम् तत् अस्ति यत् काव्यप्रकाशकारेण मम्मटाचार्येण 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इति रूपे प्रस्तुतम्। द्वितीयम् च लक्षणम् साहित्यदर्पण-

कारेण विश्वनाथकविराजेन 'वाक्यं रसात्मकं काव्यम्' इति रूपे प्रस्तुतम् वर्तते। तृतीयम् च लक्षणम् पण्डितराजजगन्नाथेन प्रस्तुतम् 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति रूपे वर्तते। मम्मटाचार्यप्रस्तुते 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि' इति लक्षणे 'अदोषौ' इतिनिषेधात्मकेन पदेन कस्य अपि काव्यस्वरूपनिरूपकस्य तत्त्वस्य निर्देशः न क्रियते, अपि तु केवलम् परिहरणीयस्य दोषस्य परिहरणीयता एव प्रतिपाद्यते, 'अनलंकृती पुनः क्वापि' इति पदैः यद्यपि अलङ्कारः अपि एकम् काव्यतत्त्वम् अस्ति इति सूच्यते, किन्तु सहैव इदमपि सूच्यते यत् अलङ्कारः अनिवार्यम् काव्यस्वरूपनिरूपकम् वा तत्त्वम् नास्ति, यतो हि एषाम् पदानाम् अनुसारेण 'क्वापि' 'अनलङ्कृती' 'शब्दार्थौ' अपि काव्यम् भवतः। परिशेषतः मम्मटाचार्यस्य काव्यलक्षणस्य फलितार्थः केवलम् अयमेव अस्ति यत् 'सगुणौ शब्दार्थौ काव्यम्' इति। अनेन फलितार्थेन गुणानाम् काव्यस्वरूप-निरूपकत्वम् सूच्यते। यतो हि गुणाः मम्मटाचार्यस्य एव "ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।" (का० प्र० ८।१) इतिवचनानुसारेण काव्यात्मभूतस्य अङ्गिनः रसस्य स्वरूपानुबन्धिनः एतादृशाः धर्माः सन्ति ये रसम् विना स्थातुम् न शक्नुवन्ति, अतः स्वत एव 'सगुणौ' इत्यस्य पदस्य सरसौ' इत्यर्थे पर्यवसानम् भवति। इत्थम् अस्य लक्षणस्य अक्षरानुसारेण 'सरसौ शब्दार्थौ काव्यम्' इति तात्पर्यम् अभिव्यक्तम् भवति। किन्तु यतः मम्मटाचार्येण 'सरसौ शब्दार्थौ' इति न कथयित्वा 'सगुणौ शब्दार्थौ' इति कथितम्, अतः प्रतीयते यत् मम्मटाचार्यस्य उक्तम् तात्पर्यम् अभीष्टम् नास्ति। अस्याः प्रतीतेः पुष्टिः अस्मात् हेतोः अपि भवति यत् न तु स्वयम् तेन 'सगुणौ' इत्यस्य उक्तप्रकारकम् तात्पर्यम् स्वीयायाम् व्याख्यायाम् अभिव्यक्तम्, न च तेन 'सगुणौ' इति पदे अधिकम् बलम् दत्त्वा गुणाँश्च मुख्यरूपे प्रदर्श्य तदाधारेण काव्यभेदादीनाम् प्रदर्शनम् कृतम्, अपि तु एतद्विपरीतम् तेन अर्थाधारेण काव्यभेदादिरूपम् महान्तम् प्रपञ्चम् विस्तार्य अन्ते प्रायः गौणरूपेण गुणानाम् चर्चनम् कृतम्, अथ च सहैव तेन 'शब्दचित्रं वाच्यचित्रम् व्यङ्ग्य त्ववरं स्मृतम्' (का० प्र० १।५) इतिवाक्ये अवरकाव्यस्य अधमकाव्यस्य वा रूपे मतस्य चित्रकाव्यस्य 'चित्रमिति गुणालङ्कारयुक्तम्' इतिरूपे स्वरूपम् प्रदर्श्य गुणानाम् काव्ये गौणम् निम्नम् वा स्थानम् एव सूचितम्। इत्थम् मम्मटाचार्यस्य उक्ते लक्षणे 'सगुणौ' इति पदस्य अपि काव्यस्वरूपनिरूपकतत्त्वप्रतिपादकरूपे किञ्चित् अपि महत्त्वम् नास्ति। फलतः तत्प्रस्तुतस्य लक्षणस्य मुख्यम् तत्त्वम् केवलम् 'तत् (काव्यम्) शब्दार्थौ' इत्येव अस्ति यच्च केवलम् अर्थस्य आधारे उत्तममध्यमाधमरूपे काव्यस्य तेन कृतेन विभाजनेन अपि स्पष्टम् अस्ति। एवम् तत्प्रस्तुतम् लक्षणम् 'तत् शब्दार्थौ' इति मूलरूपे काव्यस्वरूपपरिचये किमपि विशिष्टम् साहाय्यम् न

ददाति, यतो हि न केवलम् काव्यम्, अपि तु तदतिरिक्तम् वाङ्मयम् अपि शब्दार्थमयम् भवति। यदि 'सगुणौ' इति विशेषणपदस्य साहाय्यम् गृह्येत चेत् तदापि किञ्चित् अधिकम् न साध्यते, यतो हि अस्य पदस्य येन तात्पर्येण किञ्चित् साधयितुम् शक्यते तत् उक्तप्रकारेण तदभिमतम् न प्रतीयते, अपरम् च काव्यातिरिक्ते अपि वाङ्मये प्रसादगुणस्य सत्त्वेन तत् अपि सगुण-शब्दार्थमयम् भवति। किन्तु मम्मटाचार्येण स्वकीयम् उक्तम् काव्यलक्षणम् प्रस्तूय तत्पश्चात् 'तत् शब्दार्थौ' इत्यस्य 'इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः' इत्यादिरूपम् यत् विस्तृतम् व्याख्यानम् कृतम् तेन अवश्यम् एव अस्य लक्षणस्य व्यापकरूपे काव्यस्वरूपरिचायकत्वम् प्रकटम् भवति, यतो हि सुव्याख्यानेन अनेन व्यङ्ग्यार्थप्रधानम् गुणीभूत-व्यङ्ग्यम्, अव्यङ्ग्यम् च इतिभेदैः भिन्नम् काव्यम् स्वेन व्याप्तम् कृत्वा एषाम् काव्यभेदानाम् विभिन्नाः उपभेदाः अपि व्याप्ताः।

यतो हि मम्मटाचार्यस्य लक्षणे 'सगुणौ' इत्यस्य स्वाभाविकम् तात्पर्यम् 'सरसौ' इति रूपे फलितम् भवति, कामम् तस्य इदम् तात्पर्यम् पूर्णतः अभिप्रेतम् न स्यात्, अथ च तेन काव्यप्रकाशे विभिन्नेषु स्थलेषु रसः काव्यस्य मुख्यतत्त्वरूपे गुणालङ्कारादीनाम् च अन्येषाम् काव्यतत्त्वानाम् अङ्गिरूपे मतः, रसान्वितम् रसाभिव्यन्जकम् वा काव्यम् च उत्तमकाव्यरूपे मतम्, किन्तु पुनरपि स्वकीये काव्यलक्षणे स्पष्टतया रसस्य चर्चा न कृता, अतः तत्परवर्तिना साहित्यदर्पणकारेण विश्वनाथकविराजेन स्वभावतः 'वाक्यं रसात्मकं काव्यम्' इति रूपे काव्यलक्षणम् प्रस्तुतम् यस्मिन् रसः काव्यस्य आत्मा अर्थात् स्वरूपाधायकः जीवनाधायकः वा मतः। अस्य लक्षणस्य अनुसारेण रसेन विना काव्यम् निर्जीवम् काव्यम् अस्ति, काव्यम् एव वा नास्ति। अत्र लक्षणे 'रस' शब्देन 'रस्यते इति रसः' इति व्युत्पत्ति-योगात् भावतदाभासादयः अपि गृह्यन्ते। काव्यम् यदि एकः प्राणी मन्येत चेत् रसम् काव्यात्मानम् मन्यमानानाम् मते काव्ये शब्दार्थौ शरीरस्थानीयौ स्तः, रसादिश्च आत्मस्थानीयः अस्ति, गुणाः शौर्यादिगुणस्थानीयाः, दोषाः काणत्वा-दिदोषस्थानीयाः, रीतयः अवयवसंस्थानविशेषस्थानीयाः; अलङ्काराश्च कटक-कुण्डलादिभूषणस्थानीयाः सन्ति। फलतः यत्र दोषाः रसापकर्षकाः सन्ति, तत्र गुणालङ्काररीतयः रसोत्कर्षहेतवः सन्ति। अप्रत्यक्षरूपेण मम्मटाचार्येण अपि 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः' इत्यादिरूपे रसः काव्यात्मा मतः। प्राचीनाः कतिपये साहित्यशास्त्रकाराः अलङ्कारम् एव मुख्यम् काव्य-तत्त्वम् मत्वा तदेव काव्यात्मानम् मतवन्तः। वामन· 'रीतिरात्मा काव्यस्य' इति रूपे रीतिम् काव्यात्मानम् मतवान्। वक्रोक्तिजीवितकारः कुन्तकः 'वक्रोक्तिः काव्यजीवितम्' इति रूपे वक्रोक्तिम् काव्यात्मानम् अमन्यत। ध्वनिकारः आनन्दवर्धनः एकत्र 'काव्यस्यात्मा ध्वनिः' इत्यादिरूपे ध्वनिम्-

अन्यत्र च 'अर्थः सहृदयश्लाध्यः काव्यात्मा यो व्यवस्थितः' इत्यादिरूपे सहृदयश्लाघ्यम् अर्थम् काव्यात्मानम् मतवान्। विभिन्नानि तत्त्वानि काव्यात्मरूपे मन्यमानानाम् परम्परायाम् विश्वनाथः 'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इत्यादिप्राचीनवचनानुसारेण रसम् काव्यात्मानम् स्वीकृतवान्। यतः काव्यम् वाक्यम् भवति, यत्र च अचेतनत्वात् चेतनधर्मस्य रसस्य स्थितिः असम्भवा, अतः 'रसात्मकम्' इति पदस्य अभिप्रायः 'रसाभिव्यञ्जकम्' भवति। अत्र कश्चन सन्देहः नास्ति यत् अन्येषाम् काव्यतत्त्वानाम् अपेक्षया रसः अधिकतरम् मुख्यम् काव्यतत्त्वम् अस्ति. फलतः उक्ते लक्षणे यत् सः काव्यात्मरूपे स्वीकृतः अस्ति, तत् काव्यस्य स्वरूपाधायकस्य तत्त्वस्य अनुसन्धाने पर्याप्ता प्रगतिः एव अस्ति। किन्तु यतः काव्यस्वरूपम् अतीव व्यापकम् अस्ति, अतः इदम् न कथयितुम् शक्यते यत् यत्र रसः रसाभिव्यञ्जनम् वा नास्ति तत्र काव्यत्वम् नास्ति। यतो हि काव्यस्य रसातिरिक्तानि अन्यानि विभिन्नानि तत्त्वानि अपि तस्य काव्यत्वम् यथावत् संरक्षन्ति।

इदम् विचार्य यत् 'वाक्यं रसात्मकं काव्यम्' इत्यनेन काव्यलक्षणेन रसविहीनानि, किन्तु तत्त्वान्तरसहितानि काव्यानि काव्यकोटेः बहिर्गच्छन्ति, पण्डितराजेन जगन्नाथेन 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इतिरूपे काव्यलक्षणम् प्रस्तुतम्। यदि इदम् विचार्येत यत् अस्य लक्षणस्य अनुसारेण किम् तत्त्वम् काव्यात्मा अस्ति चेत् इदमेव कथयिष्यते यत् अस्य अनुसारेण रमणीयः अर्थः काव्यात्मा अस्ति। अयम् रमणीयः अर्थः रसादिरूपः स्यात् अन्यरूपः वा, यदि तस्य प्रतिपादनम् कुत्र अपि अस्ति चेत् तत्र काव्यत्वम् अस्ति। इत्थम् अत्र लक्षणे पर्याप्ता व्यापकता वर्तते। किन्तु यतः एकस्य भक्तस्य कृते भक्तिशास्त्रीयाः सिद्धान्ताः अपि रमणीयाः भवन्ति, अतः तत्प्रतिपादकानाम् अकाव्यभूतानाम् अपि ग्रन्थानाम् काव्यत्वम् आपतति यन्निवारणाय अत्रापि रमणीयतायाः व्याख्यानस्य आवश्यकता अस्ति। पण्डितराजेन रमणीयतायाः व्याख्यानम् अपि कृतम् अस्ति। एतदतिरिक्तम्, काव्यस्य कृते प्रतिपादकत्वापेक्षया अभिव्यञ्जकत्वम् द्योतकत्वम् वा अधिकतरम् समीचीनम् प्रतिभाति।

**४—निष्कर्षः**—यथा च इयदवधि दृष्टम्, विभिन्नानि काव्यलक्षणानि काव्यस्वरूपम् याथार्थ्येन समग्ररूपेण च बोधयितुम् विभिन्नानाम् विदुषाम् श्लाघ्यप्रयत्नरूपाणि सन्ति। एतैः काव्यस्वरूपस्य पर्याप्तः परिचयः प्राप्यते। किन्तु यदि एतेषाम् केन अपि पूर्णतया काव्यस्वरूपम् व्याप्तुम् न शक्यते चेत्, अत्र, यथा च अत्रैव पूर्वम् उक्तम्, एषाम् दोषः नास्ति, अपि तु इदम् काव्यस्वरूपस्य एव रहस्यपूर्णम् व्यापकत्वरूपम् वैभवम् वर्तते। काव्यम्, यथा च

पूर्वम् उक्तम्[1], तथ्यम् एतादृशे अभिनवे रमणीये च रूपे प्रस्तौति यत् तत् तथ्यम् अभिनवतया सृज्यमानरूपे प्रतीयमानम् सत् हृदयम् आन्दोलयत् तत् भावोन्मेषयुक्तम् चमत्कृतम् वा करोति। कदाचित् तु काव्येन तथ्यम् एतादृशे रूपे प्रस्तूयते यत् तत् स्वेन सह अभिव्यज्यमानायाः अनुभूतेः हेतोः हृदये भावोन्मेषम् करोति, कदाचित् च एतादृशे रूपे प्रस्तूयते यत् तत् हृदये भावोन्मेषम् न कुर्वत् अपि तत् विलक्षणतया अभिव्यज्यमानेन स्वेन रूपेण एव चमत्कृतम् करोति! एवम् कदाचित् अनुभूतिसम्बन्धीनि काव्यतत्त्वानि प्रामुख्येन काव्यस्वरूपाधायकानि भवन्ति कदाचित् च अभिव्यक्तिसम्बन्धीनि काव्यतत्त्वानि प्रामुख्येन काव्यस्वरूपाधायकानि भवन्ति। इत्थम् च यतः सर्वाणि एव काव्यतत्त्वानि काव्यस्वरूपाधायकानि सन्ति, अतः कस्यापि एकस्य तत्त्वस्य विषये इदम् कथयितुम् न शक्यते यत् तदेव तत्त्वम् काव्यस्य स्वरूपाधायकम् जीवनाधायकम् वा आत्मभूतम् तत्त्वम् अस्ति, फलतश्च यदि कुत्र अपि तत् तत्त्वम् नास्ति चेत् तत्र काव्यत्वम् अपि न स्यास्यति। अत्र विषये इयती वार्त्ता अवश्यम् अस्ति यत् यस्मिन् काव्ये अनुभूतिपक्षस्य प्राबल्येन हृदयम् आन्दोलितम् कृत्वा तत् भावोन्मेषयुक्तम् रसप्रवणम् वा विधातुम् यावती शक्तिः भवति, तावत् एव तस्य उत्तमत्वम् सहृदयैः स्वीक्रियते।

---

१—पृ० १७५-७७।

तथ्यानाम् एव काव्ये भावुकतामयम् वर्णनम् क्रियते, येन लोकवत् काव्यस्य पठनेन श्रवणेन च अपि हृदये भावाः उद्बुद्धाः भवन्ति । संस्कृतकाव्यशास्त्रस्य अनुसारेण प्रधानः भावः 'स्थायी भावः' अस्ति, अप्रधानः सहकारी वा भावः 'संचारी भावः', 'व्यभिचारी भावः' वा अस्ति । भावस्य कारणम् 'विभावः' उच्यते, यत्र च विषयरूपम् कारणम् आलम्बनम् उच्यते, उद्दीपकरूपम् कारणम् च 'उद्दीपनम्' कथ्यते । भावस्य कार्यम् अर्थात् भावसूचकम् चिह्न-चेष्टादिकम् 'अनुभावः' उच्यते ।

**४—रसस्य तन्निष्पत्तेश्च स्वरूपम्**—काव्यस्य श्रवणेन पठनेन वा अभिनयस्य दर्शनेन च सहृदयैः जनैः अनुभूयमानः रसः आनन्दः वा स्वकीये मौलिकस्वरूपे हृदयस्थितः स्थायीभावः भवति, य काव्ये वर्णितानाम् अभिनये च प्रदर्शितानाम् उक्तस्वरूपाणाम् विभावानाम् अनुभावानाम् च, अथ च तत्र अभिव्यक्तानाम् संचारिभावानाम् अनुभवस्य सम्पर्कात् रसरूपे परिणतः सन् हृदये अभिव्यक्तः भवति । इत्थम् विभावानुभावसंचारिभावानाम् उक्तप्रकारात् संयोगात् सम्पर्कात् वा हृदयस्थितः स्थायी भाव एव रसरूपे परिपक्वः परिणतः वा सन् अभिव्यक्तीभूय अनुभूयमानः भवति । एवम् रसरूपे अभिव्यज्यमाने स्थायिभावे तद्व्यञ्जकेषु विभावानुभावसंचारिभावेषु च व्यङ्ग्यव्यञ्जकभावरूपः सम्बन्धः अस्ति । यदि एतेषाम् त्रयाणाम्—विभावानुभावसंचारिभावानान्—अपि संयोगः प्राप्यते चेत् स्थायीभावः रसरूपे परिणमते, अन्यथा सः केवलम् भावरूपे एव तिष्ठति, अथ च पुनः रसवत् स्वादम् आनन्दम् वा न ददाति । इत्थम् स्थायिभावस्य रसरूपे परिपाकाय उक्तानाम् त्रयाणाम् अपि संयोगस्य अपेक्षा भवति । यथा अनेकेषाम् औषधानाम् संयोगेन रसायनम् प्रस्तुतम् भवति, अथवा अनेकेषाम् स्वादिष्ठानाम् पदार्थानाम् सम्मेलनेन किमपि अत्यन्तम् स्वादिष्ठम् पेयम् प्रस्तुतम् भवति, तथैव विभावानुभावसंचारिभावानाम् स्थायिभावेन सह संयोगेन सहृदयस्य श्रोतुः, पाठकस्य, दर्शकस्य वा हृदये एकम् अलौकिकम्, विलक्षणम्, आनन्दप्रदम् च रसायनम् पेयम् वा प्रस्तुतम् भवति यत् काव्यशास्त्रे 'रसः' अभिधीयते । इदमेव तथ्यम् नाट्यशास्त्रकारेण आचार्येण भरतमुनिना इत्थम् अभिव्यक्तम् यत्—

'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः ।'

काव्यप्रकाशकारेण मम्मटाचार्येण उक्तस्य नाट्यशास्त्रवचनस्य व्याख्याकर्तुः अभिनवगुप्तस्य मतम् अनुसृत्य अस्य व्याख्यानम् कुर्वता कथितम् यत्—

कारणान्यथ कार्याणि सहकारीणि यानि च ।<br>
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥

विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ।।
(का० प्र० ४।२७-२८)

साहित्यदर्पणकारेण विश्वनाथकविराजेन अपि तथैव अभिनवगुप्तस्य मतम अनुसृत्य उक्तस्य एव नाट्यशास्त्रवचनस्य व्याख्यानम् कुर्वता कथितम् यत्–

विभावेनानुभावेन व्यक्तः संचारिणा तथा ।
रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ।।
(सा० द० ३।१)

**५—साधारणीकरणम्**—रसनिष्पत्तौ अर्थात् उक्तप्रकारेण सहृदयस्य हृदये रसाभिव्यक्तौ साधारणीकरणस्य महत् योगदानम् भवति । साधारणीकरणस्य एकम् रूपम् तु काव्यवर्णितेन भावाश्रयेण सह तादात्म्यरूपम् भवति । काव्ये यद्यपि अनेके भावाश्रयाः भवन्ति, तथापि सहृदयः तस्य एव आश्रयस्य भावे योगम् ददाति, तस्य भावम् वा अनुभवति येन सह परम्परागत-स्वाभाविकप्रवृत्तेः औचित्यात् वा हेतोः सहानुभूतिवशात् सः स्वकीयम् तादात्म्यम् अनुभवति । अत्र भावाश्रयः स्वकीयव्यक्तिगतवैशिष्ट्यराहित्येन साधारणीकृतः भवति, फलतश्च सर्वेषाम् सहृदयानाम् तेन सह समानम् तादात्म्यम् भवति येन तेषाम् हृदये भावाश्रयस्य भावम् एव साधारणीकृतम् सत् उद्बुद्धम् भवति ।

साधारणीकरणस्य द्वितीयम् रूपम् इदम् अस्ति यत् भावस्य आलम्बनम् स्वकीयव्यक्तिगतवैशिष्ट्यराहित्येन साधारणीकृतम् सत् सहृदयानाम् हृदये उपस्थितम् अनुभूतम् वा भूत्वा तेषाम् सर्वेषाम् एकस्य एव समानस्य भावस्य आलम्बनम् भवति । काव्ये वर्णिताः आश्रयविभावादिकाः अतोऽपि साधारणीकृताः सन्ति यत् तैः सह कस्य अपि व्यक्तिगतः रागद्वेषात्मकः सम्बन्धः नास्ति । एतादृशस्य लौकिकसम्बन्धस्य अभावात् काव्यानुभवकाले सहृदयस्य हृदयम् व्यक्तिगतरागद्वेषसुखदुःखेभ्यः मुक्तम् भवति येन तस्मिन् काले तत्र आश्रयविभावादिकानाम् अनुभवेन उद्बुध्यमानाः सर्वे अपि भावाः समानरूपेण काव्यानन्दमयाः रसात्मकाः वा भवन्ति, तेषु लोकवत् सुखदुःखात्मकरूपे भेदः न भवति । इदम् एव लोकानुभूतौ काव्यानुभूतौ च अन्तरम् अस्ति ।

**६—रसनिष्पत्तिसम्बन्धीनि प्रमुखानि मतानि**—नाट्यशास्त्रकारेण आचार्येण भरतमुनिना 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः', इति रूपे यत् संक्षिप्ततया रसनिष्पत्तेः स्वरूपम् वर्णितम्, तस्य विभिन्नैः व्याख्याकारैः विविधानि व्याख्यानानि कृत्वा रसनिष्पत्तिसम्बन्धे स्वकीयानि विभिन्नानि मतानि प्रकटितानि । एषु मतेषु भट्टलोल्लटः, शङ्कुकः, भट्टनायकः, अभिनवगुप्तश्चेति चतुर्णाम् व्याख्याकाराणाम् मतानि प्रमुखानि प्रसिद्धानि

च सन्ति। एतानि मतानि प्रमुखतया नाटचस्य अभिनयस्य वा दृष्टचा प्रकटितानि सन्ति। एवाम् कश्चन परिचयः काव्यप्रकाशे (चतुर्थे उल्लासे) दत्तः वर्तते। एतानि मतानि संक्षेपतः निम्नप्रकारेण प्रस्तोतुम् शक्यन्ते—

**(अ) भट्टलोल्लटस्य मतम्**—भट्टलोल्लटस्य अनुसारेण उक्तस्य नाटचशास्त्रवचनस्य अर्थः अस्ति यत् स्थायिभावस्य विभावेन उत्पाद्योत्पादकभावरूपात्, अनुभावेन गम्यगमकभावरूपात् व्यभिचारिणा च पोष्यपोषकभावरूपात् सम्बन्धात् रसस्य निष्पत्तिः अर्थात् क्रमशः उत्पत्तिः, प्रतीतिः अभिव्यक्तिः वा, पुष्टिश्च भवति। अस्य मतस्य अनुसारेण काव्यवर्णितेषु अभिनयेन च अभिनेयेषु अनुकार्येषु वा रसस्य उक्तप्रकारिका निष्पत्तिः भवति। पश्चात् तदनुकारिणि नटे तुल्यरूपतानुसन्धानवशात् आरोप्यमाणः सन् सः रसः सामाजिकानाम् सहृदयानाम् वा चमत्कारहेतुः भवति। वस्तुतः तेषु–सामाजिकेषु–रसस्य निष्पत्तिः न भवति। इदम् मतम् 'उत्पत्तिवादः' इति उच्यते।

**(आ) शङ्कुकस्य मतम्**—शङ्कुकस्य अनुसारेण उक्तस्य नाटचशास्त्रवचनस्य अर्थः अस्ति यत् स्थायिभावस्य विभावादिभिः अनुमाप्यानुमापकभावरूपात् सम्बन्धात् रसस्य निष्पत्तिः अर्थात् अनुमितिः भवति। अस्य मतस्य अनुसारेण सम्यङ्मिथ्यसंशयासादृश्यबुद्धचात्मिकाभ्यः लोकप्रसिद्धप्रतीतिभ्यः विलक्षणया चित्रे 'तुरगोऽयम्' इतिवत् 'रामोऽयम्' इति बुद्धचा ग्राह्ये नटे अभिनयेन प्रदर्शितैः, फलतः वस्तुतः कृत्रिमैः, किन्तु कृत्रिमत्वेन अज्ञातैः विभावादिभिः लिङ्गैः तत्र वस्तुतः असन् अपि रत्यादिः स्थायी भावः सामाजिकैः अनुमीयते। सामाजिकैः कृता इयम् अनुमितिः सचमत्कारप्रतीतिरूपा चर्वणा भवति, अतः तया विषयीक्रियमाणः स्थायी भावः 'रसः' उच्यते। यतः इयम् चर्वणा सामाजिकानाम् भवति, अतः 'तेषु एव रसः अस्ति' इति व्यवहारः भवति। इदम् मतम् 'अनुमितिवादः' इति उच्यते।

**(इ) भट्टनायकस्य मतम्**—भट्टनायकस्य अनुसारेण उक्तस्य नाटचशास्त्रवचनस्य अर्थः अस्ति यत् स्थायिभावस्य विभावादिभिः भोज्यभोजकभावरूपात् सम्बन्धात् रसस्य निष्पत्तिः अर्थात् भुक्तिः भवति। अस्य मतस्य अनुसारेण काव्ये नाट्ये च अभिधातिरिक्तम् अन्यत् व्यापारद्वयम्–भावकत्वम् भोजकत्वम् च—अपि स्वीक्रियते। अनयोः द्वयोः व्यापारयोः भावकत्वम् साधारणीकरणम् अस्ति। अनेन व्यापारेण स्थायीभावः विभावादयश्च साधारणीक्रियन्ते, येन ते व्यक्तिगतवैशिष्टचराहित्येन उपस्थिताः भवन्ति। भावकत्वव्यापारेण एवम् साधारणीकृतैः विभावादिभिः भोजकत्वव्यापारसाहित्येन पूर्वतः साधारणीकृत एव रत्यादिः स्थायी भावः भुज्यते। अस्मिन् रूपे रत्यादेः स्थायिभावस्य भोगः आस्वादः वा एव रसनिष्पत्तिः अस्ति। इदम् मतम् 'भुक्तिवादः' इति उच्यते।

(ई) **अभिनवगुप्तस्य मतम्**—अभिनवगुप्तस्य अनुसारेण उक्तस्य नाट्यशास्त्रवचनस्य अर्थः अस्ति यत् स्थायिभावस्य विभावादिभिः सह व्यङ्ग्यव्यञ्जकभावरूपात् सम्बन्धात् विभावादीनाम् वा परस्परम् संयोगात् मिलनात् वा रसस्य निष्पत्तिः अर्थात् अभिव्यक्तिः भवति। अस्य मतस्य अनुसारेण लोके प्रमदादिभिः भावकारणैः, अश्रुपातादिभिः भावकार्यैः, चिन्तादिभिश्च सहकारिभिः रत्यादेः स्थायिभावस्य अनुमितिविषये अभ्यासपाटववलेन झटिति प्रवृत्तिमताम् सामाजिकानाम् हृदये रत्यादिः स्थायी भावः वासनारूपतया स्थितः अस्ति, स एव काव्ये नाट्ये च उक्तैः एव भावकारणादिभिः कारणत्वादिव्यपदेशपरित्यागेन विभावनानुभावनसंचारणरूपव्यापारवत्तया अलौकिकविभावानुभावसंचारिपदव्यवहार्यैः सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् व्यक्तिगतवैशिष्टचरहिततया साधारण्येन प्रतीतैः सामाजिकानाम् हृदये शृङ्गारादिरसरूपे अभिव्यक्तः भवति। इत्थम् अस्य मतस्य अनुसारेण रसस्य निष्पत्तिः अभिव्यक्तिः वा सामाजिकानाम् हृदये भवति, यत्र च उक्तप्रकारेण निष्पन्नस्य अभिव्यक्तस्य वा रसस्य अनुभवकाले सामाजिकानाम् हृदयम् व्यक्तिगतेभ्यः रागद्वेषादिभ्यः विकारेभ्यः मुक्तम् भवति, यतो हि ते तदा व्यक्तिगतवैशिष्टचरहितैः साधारण्येन प्रतीतैः विभावादिभिः अभिव्यक्तम् स्थायिनम् भावम् रसरूपे अनुभवन्ति। अत एव च अस्य रसस्य नियतप्रमातृगतत्वे अपि इमम् प्रति परिमितम् प्रमातृत्वम् अर्थात् अस्य केवलम् केनापि व्यक्तिविशेषेण एव अनुभूयमानत्वम् न भवति, अपि तु इमम् प्रति अपरिमितम् प्रमातृत्वम् अर्थात् अस्य सर्वैः अपि सहृदयैः समानरूपेण अनुभूयमानत्वम् भवति। चर्व्यमाणता एव अस्य प्राणः जीवनाधायकम् तत्त्वम् वा अस्ति। अस्य इदम् जीवनम् च विभावादिस्थितिसमकालीनम् एव भवति। इदम् मतम् 'अभिव्यक्तिवादः इत्युच्यते।

काव्यप्रकाशकारेण साहित्यदर्पणकारेण च अभिनवगुप्तस्य एव इदम् मतम् अनुसृत्य पूर्वोक्तप्रकारेण उक्तस्य नाट्यशास्त्रवचनस्य व्याख्यानम् कृतम् अस्ति। वस्तुतः रसनिष्पत्तेः सम्बन्धे अभिनवगुप्तस्य एव मतम् अधिकम् ग्राह्यम् प्रतीयते, फलतश्च तत् स्वजन्मकालात् एव प्रायः सर्वसम्मतया स्वीकृतम् अपि वर्तते। इदम् एव मतम् अनुसृत्य साहित्यदर्पणकारेण रसस्य स्वरूपकथनगर्भः आस्वादनप्रकारः संक्षेपतः एवम् वर्णितः अस्ति यत्—

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।<br>
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥<br>
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।<br>
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥ (सा० द० ३।२-३)

४३

# महाकविः भासः

**१—प्राचीनतमनाटककारत्वम्**—महाकवेः कालिदासात् पूर्ववर्तिषु कविषु स्वनामधन्यः भासः परमम् प्रामुख्यम् भजते। कालिदासेन स्वविरचितस्य मालाविकाग्निमित्राख्यनाटकस्य प्रस्तावनायाम् 'प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य कथं वर्तमानस्य कवेः कालिदासस्य कृतौ बहुमानः' इतिरीत्या महाकवेः भासस्य ससम्मानम् स्मरणम् कृतम्। अस्याः उक्तेः 'प्रथितयशसाम्' इति पदेन ज्ञायते यत् महाकविः भासः कालिदासस्य काले 'प्रथितयशाः' आसीत् अथ च तदा तस्य कृतीनाम् समाजे समादरः आसीत्। अस्याम् उक्तौ नामतः निर्दिष्टानाम् भाससौमिल्लकविपुत्राणाम् मध्ये सौमिल्लकविपुत्रयोः तु इदानीम् न कापि विशिष्टा चर्चा संस्कृतवाङ्मयस्य इतिहासे श्रूयते, न च तयोः कापि कृतिः द्रष्टुम् समुपलभ्यते, किन्तु अपरतः यदि अद्य भासकृतिरूपे मन्यमानानि स्वप्नवासवदत्तादीनि त्रयोदश नाटकानि भासप्रणीतानि एव मन्यन्ते चेत्, इदम् कथयितुम् शक्यते यत् उपलब्धानाम् नाटकीयकृतीनाम् दृष्ट्या महाकविः भासः एव सर्वप्रथमः नाटककारः अस्ति, अथ च तस्य नाटकानि सर्वप्रथमानि प्राचीनतमानि वा उपलब्धानि नाटकानि सन्ति।

यद्यपि, यथा च भरतप्रणीतस्य नाट्यशास्त्रस्य, पाणिनिप्रणीतायाः अष्टाध्याय्याः, पतञ्जलिप्रणीतस्य महाभाष्यस्य, वात्सायनप्रणीतस्य कामसूत्रस्य अन्येषाम् च विभिन्नानाम् ग्रन्थानाम् विभिन्नैः निर्देशैः ज्ञायते, भारते नाटकरचनापरम्परा प्राचीनकालात् एव प्रवृत्ता वर्तते, किन्तु भासात् पूर्ववर्तिनी कापि नाटकीयकृतिः न उपलभ्यते। इदानीम् न तु नाट्यशास्त्रचर्चिते सुरविजयलक्ष्मीस्वयम्वरनामधेये नाटके दृश्येते, न च महाभाष्यनिर्दिष्टे कंसवध-बलिबन्धनामके नाटके उपलभ्येते, नापि च अन्यग्रन्थनिर्दिष्टा कापि भासपूर्ववर्तिनी नाटकीयरचना प्राप्यते। फलतः इदम् निर्विवादरूपेण कथनीयम् भवति यत् अद्य तु महाकविः भासः एव केवलम्

एतादृश : नाटककारः अस्ति यः न केवलम् कालिदासात् पूर्ववर्ती अस्ति, अपितु संस्कृतवाङ्मये स्वप्रणीताभिः उपलब्धाभि नाटकीयकृतिभिः सह विराजमानः सर्वप्रथमः प्राचीनतमः वा नाटककारः अस्ति ।

२—स्थितिकालः जन्मस्थानम् च—यद्यपि कालिदासकृतेन उक्तेन महाकवेः भासस्य स्मरणेन तस्य कालिदासपूर्ववर्तित्वम् स्पष्टतः सिद्धयति, तथापि तस्य स्थितिकालः इदानीम् अपि निश्चितः नास्ति, यतोहि स्वयम् कालिदासस्य स्थितिकालः अनिश्चितः वर्तते । इदम् सर्वविदितम् वर्तते यत् कालिदासस्य स्थितिकालः विभिन्नैः विद्वद्भिः विभिन्नेषु कालेषु दोलायमानः कृतः वर्तते, अतः तदाधारितः भासस्य स्थितिकालः अपि दोलायमानः वर्तते । ये विद्वांसः कालिदासस्य स्थितिकालम् ईसातः पूर्वम् प्रथमशताब्दयाम् मन्यन्ते, ते भासम् प्रायः ईसातः प्राक् तृतीयशताब्दयाम् द्वितीयशताब्दयाम् वा उद्भूतम् मन्यन्ते, किन्तु ये विद्वांसः कालिदासम् ईसातः परम् चतुर्थशब्दयाम् स्थितम् मन्यन्ते, ते भासस्य स्थितिकालम् ईसातः परम् तृतीयशताब्दयाम् चतुर्थशताब्दयाम् वा एव मन्यन्ते ।

यथा च पूर्वम् उक्तम्, कालिदासस्य समये भासः प्रथितयशाः आसीत्, शूद्रकस्य मृच्छकटिकाख्यम् नाटकम् भासस्य चारुदत्ताख्ये नाटके आधारितम् वर्तते, कौटिलीये अर्थशास्त्रे (१०।३) भासप्रणीतस्य प्रतिज्ञायौगन्धरायणाख्यस्य नाटकस्य 'नवं शरावं सलिलस्य पूर्णं सुसंस्कृतं दर्भकृतोत्तरीयम् । तत्तस्य माभून्नरकं च गच्छेद् यो भर्तृपिण्डस्य कृते न युध्येत् ।' इत्ययम् श्लोकः उद्धृतः उपलभ्यते, भासस्य भाषायाम् आर्षाः अपाणिनीयाश्च प्रयोगाः प्राप्यन्ते, तस्य नाटकेषु चित्रितम् वातावरणम् च प्राचीनम् प्रतीयते, इत्यादीनि तथ्यानि सूचयन्ति यत् नाटकरचनाकलायाम् लब्धकीर्तिः नाटककारः भासः प्राचीनकाले, सम्भवतः ईसातः पूर्वस्मिन् एव कस्मिश्चित् काले स्वजन्मना भारतभुवम् अलञ्चकार ।

महाकवेः भासस्य जन्मस्थानम् अपि निश्चितरूपेण निर्देष्टुम् न शक्यते, किन्तु कतिपये विद्वांसः तम् उज्जयिनीस्थम् मन्यन्ते ।

३—रचना—१९०९ ईसवीयवर्षम् यावत् आधुनिकम् संस्कृतजगत् भासस्य नाटकीयकृतीनाम् दर्शनम् कर्तुम् न अपारयत् । तेन तासाम् तदा दर्शनम् कृतम्, यदा १९०९ ईसवीये वर्षे महामहोपाध्यायः श्रीगणपतिशास्त्री ताः त्रावणकोराख्ये प्राप्त्वा प्रकाशितवान् । अनेन स्वनामधन्येन महानुभावेन तत्र प्राप्तानाम् त्रयोदशानाम् नाटकीयकृतीनाम् सम्यक् परीक्षणम् कृत्वा इदम् निर्धारितम् यत् एताः कृतयः भासप्रणीताः सन्ति । एताः त्रयोदश नाटकीयकृतयः निम्नलिखिताः सन्ति—

१. स्वप्नवासवदत्तम्, २. प्रतिज्ञायौगन्धरायणम्, ३. प्रतिमानाटकम्, ४. अभिषेकम्, ५. पञ्चरात्रम्, ६. मध्यमव्यायोगम्, ७. दूतघटोत्कचम्, ८. दूतवाक्यम्, ९. कर्णभारम्, १०. उरुभङ्गम, ११. बालचरितम्, १२. अविमारकम्, १३. चारुदत्तम् ।

भासप्रणीतानाम् एषाम् त्रयोदशनाटकानाम् समूहः राजशेखरस्य 'भासनाटकचक्रेऽपि छेकैः क्षिप्ते परीक्षितुम्' इत्युक्तिम् आधारीकृत्य 'भासनाटकचक्रम्' इति नाम्ना व्यवह्रियते। अस्मिन् भासनाटकचक्रे 'स्वप्नवासवदत्तम् प्रामुख्यम् धत्ते । इदम् नाटकम् 'प्रतिज्ञायौगन्धरायणम्' च कौशाम्बीनरेशस्य राज्ञः उदयनस्य कथया सम्बद्धे स्तः। अनयो नाटकयोः अङ्कचतुष्टयात्मके प्रतिज्ञायौगन्धरायणे उदयनस्य मन्त्रिणः यौगन्धरायणस्य प्रतिज्ञापूर्तिरूपे सम्पन्नः उदयनस्य वासवदत्तया सह प्रणयः विवाहश्च सहैव च तस्य प्रद्योतवन्दिगृहात् मोक्षः वर्णितः वर्तते षडङ्कात्मके स्वप्नवासवदत्तं यौगन्धरायणप्रयासात् सम्पन्नः उदयनस्य पद्मावत्या सह परिणयः अपहृतराज्यलाभश्च वर्णितः अस्ति ।

'प्रतिमानाटकम्' 'अभिषेकनाटकम्' चेतिनाटकद्वयम् रामायणकथया सम्बद्धे स्तः। अनयोः सप्ताङ्कात्मके प्रतिमानाटके रामवनवासात् रावणवधम् यावत् षडङ्कात्मके अभिषेकनाटके च किष्किन्धाकाण्डात् युद्धकाण्डम् यावत् पुनश्च रामराज्याभिषेकपर्यन्तम् रामकथा वर्णिता वर्तते ।

पञ्चरात्रम् मध्यमव्यायोगम्, दूतघटोत्कचम्, दूतवाक्यम्, कर्णभारम्, उरुभङ्गम् चेतिनाटकषट्कम् महाभारतकथया सम्बद्धम् अस्ति । एषु नाटकेषु अङ्कत्रयात्मके पञ्चरात्रे इदम् वर्णितम् अस्ति यत् द्रोणेन यज्ञदक्षिणारूपे पाण्डवेभ्यः राज्यार्धम् याचितः दुर्योधनः स्ववचनानुसारेण पञ्चरात्राभ्यन्तरे पाण्डवानाम् प्राप्तौ सत्याम् तेभ्यः राज्यार्धम् ददौ। एकाङ्किनि मध्यमव्यायोगे मध्यमः पाण्डवः भीमः मध्यमनामकम् एकम् ब्राह्मणपुत्रम् घटोत्कचात् रक्षति, इति वर्णितम् अस्ति । एकाङ्किनि एव दूतघटोत्कचे अभिमन्युवधानन्तरम् श्रीकृष्णेन पाण्डवदूतरूपे प्रेषितस्य घटोत्कचस्य धृतराष्ट्रम् प्रति दूतत्वम् वर्णितम् वर्तते। एकाङ्किनि एव दूतवाक्ये महाभारतयुद्धात् पूर्वम् श्रीकृष्णस्य दुर्योधनम् प्रति पाडवदूतत्वम् वर्णितम् अस्ति । एकाङ्किनि एव कर्णभारे कर्णद्वारा इन्द्राय स्वकवचकुण्डलदानम् वर्णितम् वर्तते। एकाङ्किनि एव च उरुभङ्गे भीमद्वारा गदायुद्धे दुर्योधनोरुभङ्गः वर्णितः अस्ति। संस्कृतनाटकसाहित्ये इदमेव केवलम् एकम् दुःखान्तम् नाटकम् अस्ति ।

'बालचरितम्' श्रीमद्भागवतकथया सम्बद्धम् अस्ति । पञ्चाङ्कात्मके अस्मिन् नाटके कृष्णजन्मनः कंसवधपर्यन्तम् कृष्णकथा वर्णिता अस्ति ।

'अविमारकम्,' 'चारुदत्तम्' चेति नाटकद्वयम् लोकप्रचलितासु

जनकथासु केवलं कल्पनायाम् वा आश्रितम् वर्तते। अनयोः षडङ्कात्मके अविमारके एकस्य अविमारकनामकस्य राजकुमारस्य कुन्तिभोजनामकस्य राज्ञः पुत्र्या कुरङ्गया सह प्रणयस्य विवाहस्य च आख्यानम् वर्णितम् अस्ति। अङ्कचतुष्टयात्मके चारुदत्ते च चारुदत्तवसन्तसेनयोः प्रेमकथा वर्णिता अस्ति। चारुदत्तम् शूद्रकप्रणीतस्य मृच्छकटिकस्य आधारभूतम् अस्ति, इति विद्वद्भिः मन्यते।

**४—रचनाविषयकः विवादः**—आसाम् रचनानाम् विषये अयम् विवादः प्रचलितः वर्तते यत् इमाः भासप्रणीताः सन्ति न वा। यथा च इदानीम् एव पूर्वम् उक्तम्, आसाम् नाटकीयकृतीनाम् प्रकाशयिता महामहोपाध्यायः गणपतिशास्त्री इमाः असंदिग्धरूपेण भासप्रणीताः मन्यते। अन्येऽपि भारतीयविद्वांसः प्रायः इमाः भासप्रणीताः एव मन्यन्ते। किन्तु केचन विदेशीयाः विद्वांसः अस्मिन् विषये वैमत्यम् उपस्थापयन्ति। एषु एकेषाम् मतम् अस्ति यत् यतो हि राजशेखरेण भासप्रणीतानाम् कृतीनाम् विषये कथितम् अस्ति यत्—

'भासनाटकचक्रेऽपिच्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः॥'

अतः अयम् निष्कर्षः प्राप्यते यत् भासस्य नाटकीयकृतिषु केवलम् एकम् 'स्वप्नवासवदत्तम्' एव अवशिष्टम् अस्ति, अन्याः कृतयस्तु अग्निदग्धाः भूत्वा अवशिष्टाः न वर्तन्ते। इत्थम् उपलब्धासु उक्तासु कृतिषु केवलम् 'स्वप्नवासवदत्तम्' एव भासप्रणीतम् अस्ति। अन्येषाम् मतम् अस्ति यत् नाट्यदर्पणकारः रामचन्द्रः स्वकीये ग्रन्थे एकम् श्लोकम् स्वप्नवासवदत्तश्लोकरूपे उद्धृतवान्, सः श्लोकः उपलब्धे स्वप्नवासवदत्ते न उपलभ्यते, अतः इदम् कथनीयत्वेन आपतति यत् उपलब्धम् स्वप्नवासवदत्तम् अपि भासप्रणीतम् नास्ति, अन्यानि च भासप्रणीतानि नाटकानि अग्निना दग्धानि एव, इत्थम् इदानीम् भासप्रणीतम् न किमपि अवशिष्यते।

विदेशीयानाम् विदुषाम् उक्तम् मतम् समीचीनम् न प्रतिभाति। तेषाम् तु इयम् स्वाभाविकी प्रवृत्तिः एव अस्ति यत् ते सर्वम् भारतीयम् वस्तु संदिग्धतया पश्यन्ति अथवा तस्य विषये सन्देहम् प्रस्तुवन्ति येन तत् प्रति भारतीयानाम् निष्ठा न अवशिष्येत। भासप्रणीतस्य स्वप्नवासवदत्तस्य अक्षुण्णाम् सत्ताम् राजशेखरः अपि स्वीकरोति। नाट्यदर्पणकारोद्धृतस्य स्वप्नवासवदत्तश्लोकस्य उपलब्धे स्वप्नवासवदत्ते अभावः प्रतिलिपिकारदोषेण अपि संभाव्यते। इत्थम् उपलब्धस्य स्वप्नवासवदत्तस्य भासप्रणीतत्वविषये तु कश्चन संदेहावसरः एव नास्ति। पुनः यतो हि स्वप्नवासवदत्ते अनन्तरम् निर्देक्ष्यमाणाः याः विशेषताः उपलभ्यन्ते ताः अन्यासु अपि अवशिष्टासु

उक्तासु द्वादशसु नाटकीयकृतिषु प्राप्यन्ते, अतः आसाम् समानानाम् विशेषतानाम् आधारे इदम् निश्चितरूपेण कथयितुम् शक्यते यत् एताः सर्वाः त्रयोदशापि नाटकीयकृतयः भासप्रणीताः सन्ति। यदवधि राजशेखरस्य उक्तायाः उक्तेः सम्बन्धः अस्ति, इदम् कथयितुम् शक्यते यत् यद्यपि राजशेखरेण केवलम् निषेधात्मकरूपेण इदम् एव उक्तम् यत् पावकः स्वप्नवासवदत्तस्य दाहकः न अभूत्, तेन विधानात्मकरूपेण इदम् न उक्तम् यत् अन्याः भासस्य कृतयः अग्निना दग्धाः एव, पुनरपि यदि इदम् मन्यते यत् अस्याः उक्तेः तात्पर्यम् इदमेव अस्ति यत् अन्याः कृतयः दग्धाः एव, तथापि इदम् एव मन्तुम् उचितम् प्रतिभाति यत् भासस्य सर्वासाम् कृतीनाम् प्रत्येकम् अनेकाः एकाधिकाः वा प्रतिलिपयः आसन् यासु सर्वासाम् कृतीनाम् एकैका प्रतिलिपिः केवलम् परीक्षणार्थम् अग्नौ प्रक्षिप्ता, सर्वासाम् कृतीनाम् अन्याः प्रतिलिपियः सुरक्षिताः अवशिष्टाः एव आसन्। इदम् कथमपि न संभाव्यते यत् भासकृतीनाम् मूलाः लिपयः एव समूलनाशाय अग्नौ प्रक्षिप्ताः स्युः। अग्निपरीक्षकाः एतावद्बुद्धिमन्तस्तु संभाव्यन्ते एव यत् ते, इदम् जानीयुः यत् अग्नौ प्रक्षिप्तस्य वस्तुनः दाहः एव प्रायः निश्चितः अस्ति दाहाभावस्तु अपवादस्वरूपम् एव अस्ति, अतः मूलाः लिपयः समूलम् न नश्येयुः, इति हेतोः तासाम् प्रतिलिपयः एव केवलम् परीक्षणार्थम् अग्नौ प्रक्षेपणीयाः। अस्तु! एवम् राजशेखरोक्त्या इदम् कथमपि न सिध्यति यत् स्वप्नवासवदत्तम् विहाय भासस्य अन्यासाम् सर्वासाम् कृतीनाम् मूलाः लिपयः अग्नौ प्रक्षिप्ताः सत्यः दग्धाः जाताः।

**५—रचनानाम् अनन्यसाधारण्यः समानाः विशेषताः—**भासप्रणीतरूपे प्रसिद्धानाम् उक्तानाम् त्रयोदशानाम् नाटकीयकृतीनाम् कतिचन एतादृश्यः विशेषताः सन्ति याः अनन्यसाधारण्यः सत्यः समानरूपेण एतासु सर्वासु कृतिषु उपलभ्यन्ते। ताः विशेषताः इमाः सन्ति—

(१) सर्वासाम् कृतीनाम् आरम्भः 'नान्द्यन्ते ततः प्रविशति सूत्रधारः' इतिरूपेण निर्देशेन सह भवति।

(२) सर्वासु प्रारम्भिकभूमिकायै 'प्रस्तावना' शब्दस्य स्थाने 'स्थापना' शब्दस्य प्रयोगः कृतः वर्तते।

(३) एतासु सर्वासु कृतिषु कुत्र अपि नाटकस्य नाटककारस्य वा नामनिर्देशः न प्राप्यते।

(४) सर्वासाम् कृतीनाम् भरतवाक्यम् प्रायः समानम् एव वर्तते।

(५) सर्वासाम् भाषायाम् आर्षाः अपाणिनीयाश्च प्रयोगाः उपलभ्यन्ते।

(६) सर्वासाम् भाषा सरला प्राञ्जला च अस्ति, शैली अपि सरला वर्तते।

(७) सर्वासाम् कृतीनाम् प्राकृतम् समानम् वर्तते ।

(८) बह्वीषु कृतिषु मुद्रालंकारेण पात्राणाम् नामनिर्देशः प्राप्यते ।

इत्यादयः विशेषताः सर्वासाम् कृतीनाम् एककर्तृकत्वम् सूचयन्ति । यतो हि अनेकैः प्रमाणैः स्वप्नवासवदत्तस्य भासकर्तृकत्वम् सिद्धयति, अतः तत्समानविशेषतावत्यः उक्ताः सर्वाः अपि कृतयः भासप्रणीताः सिद्धयन्ति । बाणेन 'सूत्रधारकृतारम्भैः' इत्यादिरूपेण भासकृतीनाम् उक्तासु विशेषतासु कतिचन विशेषताः निर्दिष्टाः अतोऽपि आसाम् भासप्रणीतत्वम् पुष्टम् भवति ।

६—**भासस्य नाट्यकला**—महाकवेः भासस्य नाट्यकला निर्विवादरूपेण उच्चस्तरीया वर्तते । भासस्य नाटकानाम् दर्शनेन इदम् स्पष्टतः ज्ञातम् भवति यत् सः मूलतः एकः सफलः नाटककारः अस्ति । तस्य कवित्वम् तस्य नाटककारत्वस्य कुत्र अपि बाधकम् न सत् सर्वत्र तदङ्गरूपेण तत्साधकम् वर्तते । सरलायाम् भाषायाम् सरलायाम् शैल्याम् च लिखितानि भासस्य उचिताकाराणि नाटकानि अभिनेयदृष्टया अतीव सफलानि नाटकानि सन्ति । संख्यायाम् बहुषु एषु नाटकेषु वस्तुनः वैविध्यम् तु स्वभावतः वर्तते एव, सहैव नाटककारस्य अभिनवानाम् कल्पनानाम् समावेशेन तत्र रोचकता अपि वर्तते । वस्तुनः सङ्घटनम् अपि किञ्चिदपवादेन सह प्रायः समीचीनम् एव, वर्तते । पात्राणाम् चरित्रचित्रणम् अपि सफलतया कृतम् । सम्वादाः प्रायः सरलाः स्वाभाविकाश्च सन्तः अतीव मनोरमाः सन्ति । वातावरणचित्रणकौशलम् अपि एषु नाटकेषु स्पष्टतया अनुभूयते । रसानाम् भावानाम् च सरला रमणीया च अभिव्यक्तिः एषु नाटकेषु रमणीयत्वम् आदधाति । अत्र प्रायः सर्वेषु रसेषु अभिव्यक्तेषु सत्सु अपि वीरशृङ्गारयोः प्राधान्यम् वर्तते । घटनानाम् नाटकीयता अत्र प्रायः सर्वत्र एव दृश्यते । प्रकृतिचित्रणकौशलम् अपि अत्र परिलक्ष्यते । अलंकाराणाम् लोकोक्तीनाम् च प्रयोगः सफलतया कृतः वर्तते । तात्पर्यम् इदम् वर्तते यत् सफलासु नाटकीयकृतिषु यत् अपेक्षितम् वर्तते तत् प्रायः सर्वम् अपि एषु नाटकेषु न्यूनाधिकरूपेण वर्तते ।

महाकवेः भासस्य नाटकानाम् संक्षिप्तरूपेण अपि निर्दिष्टाः उक्ताः विशेषताः इदम् बोधयितुम् पर्याप्ताः सन्ति यत् सः एकः सफलः नाटककारः अस्ति । तस्य सफलनाटककारत्वात् एव तत्परवर्ती महाकविः कालिदासः तस्य पूर्वोक्तरूपेण ससम्मानम् स्मरणम् कृतवान्, अन्येऽपि च परवर्तिनः कवयः लेखकाश्च तस्य वैशिष्टयम् गीतवन्तः । सः स्वकीयैः सफलैः नाटकैः इदानीम् अपि जीवति, यथा च आचार्यदण्डिना अपि कथितम्—

'सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः ।
परेतोऽपि स्थितो भासः शरीरैरिव नाटकैः ॥'

## ४४

# महाकविः कालिदासः

**१—स्थितिकालः जन्मस्थानम् च**—रघुवंशमेघदूतादीनाम् महाकाव्यानाम् खण्डकाव्यानाम् च अभिज्ञानशाकुन्तलादीनाम् नाटकानाम् च रचनया स्वकीर्तिम् दिगन्तव्यापिनीम् कुर्वन् महाकविः कालिदासः संस्कृतसाहित्याकाशे एकम् अतीव उत्कृष्टतया प्रकाशमानम् समुज्ज्वलम् नक्षत्रम् इव विराजते। अयम् महाकविः कदा कुत्र च समुद्भूतः, इतिविषयः संस्कृतसाहित्येतिहासस्य एकः अतीव विवादग्रस्तः विषयः अस्ति। कालिदासस्य स्थितिकालस्य निर्धारणे अस्मात् कारणात् महती कठिनता वर्तते यत् एकतस्तु तेन महानुभावेन स्वविषये कः अपि संकेतः एव न कृतः अस्ति, अपरतश्च तस्य विषये अनेकाः परस्परभिन्नाः जनश्रुतयः प्रचलिताः याः इमम् विषयम् अधिकतरम् जटिलम् कुर्वन्ति। एतदतिरिक्तम्, इदम् अपि कारणम् विद्यते यत् कालिदासनामधारिणः अनेके कवयः अभूवन् येषाम् च वृत्तानि परस्परम् संकीर्णानि जातानि येन कालनिर्धारणे अधिकम् काठिन्यम् जातम्। कालिदासस्य स्थितिकालसम्बन्धीनि यानि विभिन्नानि मतानि विद्यन्ते तेषु मतद्वयम् एव प्रामुख्यम् भजते। तयोः एकम् गुप्तकालीनम् मतम् अस्ति यदनुसारेण गुप्तवंशस्य कस्यचन राज्ञः—मुख्यतः द्वितीयस्य चन्द्रगुप्तस्य—काले कालिदासः प्रादुरभवत्, अपरम् च मतम् ईसातः पूर्वम् प्रथमशताब्द्याम् परम्परायाम् प्रसिद्धस्य उज्जयिनीनरेशस्य विक्रमादित्यस्य काले तस्य स्थितिम् मन्यते। अनयोः मतयोः कतरत् तथ्यानुसारि, इति तु इदानीम् निश्चितरूपेण कथयितुम् न शक्यते।

एवमेव कालिदासस्य जन्मभूमिविषयकः विवादः अस्ति। केचन विद्वांसः तस्य जन्मस्थानम् कश्मीरे, केचन उज्जयिन्याम्, केचन च अन्यत्र मन्यन्ते, किन्तु इदम् निश्चप्रचरूपेण कथयितुम् न शक्यते यत् वस्तुतः सः कुत्र अजनि।

अस्तु! कदापि कुत्रापि च एतस्य महाकवेः आविर्भावः जातः स्यात्, इदानीम् तु तस्य महत्त्वम् सार्वकालिकम् सार्वदेशिकम् च वर्तते।

२—रचनाः—एतेन महाकविना रघुवंशम् कुमारसंभवम् च इति द्वे महाकाव्ये, मेघदूतम्, ऋतुसंहारम् च इति द्वे गीतिकाव्यरूपे खण्डकाव्ये, अभिज्ञानशाकुन्तलम्, विक्रमोर्वशीयम्, मालविकाग्निमित्रम् च इति त्रीणि नाटकानि च इत्येतत् बहुमूल्यम् वाङ्मयम् संस्कृतसाहित्याय दत्तम्। एतदतिरिक्तम्, श्रुतबोधादयः अन्याः अपि काश्चन रचनाः कालिदासलेखनी-प्रसूताः मन्यन्ते, किन्तु यतः तासाम् कालिदासप्रणीतत्वम् असंदिग्धम् निश्चितम् वा नास्ति, अतः विद्वद्भिः तासाम् प्रामाणिकता न स्वीक्रियते।

उक्तासु सप्तसु कृतिषु 'ऋतुसंहारम्' कालिदासस्य प्रारम्भिकी रचना प्रतीयते। अस्मिन्, यथा च अस्य नाम्ना एव प्रकटम् अस्ति, षण्णाम् ऋतूनाम् वर्णनम् कृतम् वर्तते। अस्मिन् कलात्मिकायाः प्रौढेः अभावात्, मल्लिनाथेन अस्य टीकायाः अकृतत्वात्, आलंकारिकैश्च स्वग्रन्थेषु अस्य उद्धरणानाम् अदत्तत्वात् कतिपये विद्वांसः इदम् रघुवंशकारस्य महाकवेः कालिदासस्य रचनाम् न मन्यन्ते। किन्तु एते हेतवः एतादृशाः न सन्ति येषाम् आधारे इदम् कालिदासस्य प्रारम्भिककृतिरूपे अपि न मन्तुम् शक्येत।

कलात्मकविकासस्य दृष्ट्या 'मालविकाग्निमित्रम्' कालिदासस्य द्वितीया रचना प्रतीयते, तस्य नाटकीयकृतिषु च एवम् इदम् प्रारम्भिकी प्रथमा वा रचना अस्ति। अस्मिन्, यथा च अस्य नाम्ना एव सूच्यते, शुङ्गवंशीयस्य पुष्यमित्रपुत्रस्य अग्निमित्रस्य मालविकायाश्च प्रणयगाथा अस्ति। अस्य नाटकस्य अपि कालिदासप्रणीतत्वम् कैश्चित् विद्वद्भिः न मन्यते[१]।

'ऋतुसंहारम्' 'माविकाग्निमित्रम्' च विहाय अवशिष्टाः पञ्च कृतयः सर्वसम्मतया कालिदासप्रणीताः मन्यन्ते। किन्तु पुनरपि इयत् अवश्यम् अस्ति यत् कतिपयाः विद्वांसः कुमारसंभवस्य उपलब्धेषु एकोनविंशतिसर्गेषु केवलम् अष्टौ प्रारम्भिकसर्गान् एव कालिदासप्रणीतान् मन्यन्ते। एतासु पञ्चसु कृतिषु 'मेघदूतम्', 'कुमार-संभवम्' 'विक्रमोर्वशीयम्' च इमाः तिस्रः कृतयः ऋतुसंहारमालविकाग्निमित्रयोः पश्चात् अभिज्ञानशाकुन्तलरघुवंशयोश्च पूर्वम् प्रणीताः प्रतीयन्ते। एतासु तिसृषु कृतिषु अपि यत्र कवेः तरुणावस्था तरङ्गायमाणा वर्तते, तत्र कलात्मकः विकासः अपि पूर्णतया प्रौढः न सन् नवयौवनस्य एव अवस्थायाम् वर्तते। एतासु मेघदूते विरहिणा यक्षेण स्वप्रियतमायाः समीपे मेघस्य संदेशवाहक मानवः प्रेषणस्य कवित्वपूर्णम् वर्णनम् अस्ति। कुमारसंभवे गौरीनवः देवाकुमारस्य स्वामिकार्तिकेयस्य वा संभवस्य जन्मनः वा गा[म्] प्राप्नोति। वंशीये पुरूरवसः उर्वश्याश्च प्रणयगाथा वर्णिता अस्ति[त्वम्] प्रति स्वाम्

---

१—द्रष्टव्यः—'नानाप्रबन्ध' इति शीर्षकः ग्रन्थः

४४

# महाकविः कालिदासः

**१—स्थितिकालः जन्मस्थानम् च**—रघुवंशमेघदूतादीनाम् महाकाव्यानाम् खण्डकाव्यानाम् च अभिज्ञानशाकुन्तलादीनाम् नाटकानाम् च रचनया स्वकीर्तिम् दिगन्तव्यापिनीम् कुर्वन् महाकविः कालिदासः संस्कृतसाहित्याकाशे एकम् अतीव उत्कृष्टतया प्रकाशमानम् समुज्ज्वलम् नक्षत्रम् इव विराजते। अयम् महाकविः कदा कुत्र च समुद्भूतः, इतिविषयः संस्कृतसाहित्येतिहासस्य एकः अतीव विवादग्रस्तः विषयः अस्ति। कालिदासस्य स्थितिकालस्य निर्धारणे अस्मात् कारणात् महती कठिनता वर्तते यत् एकतस्तु तेन महानुभावेन स्वविषये कः अपि संकेतः एव न कृतः अस्ति, अपरतश्च तस्य विषये अनेकाः परस्परभिन्नाः जनश्रुतयः प्रचलिताः याः इमम् विषयम् अधिकतरम् जटिलम् कुर्वन्ति। एतदतिरिक्तम्, इदम् अपि कारणम् विद्यते यत् कालिदासनामधारिणः अनेके कवयः अभूवन् येषाम् च वृत्तानि परस्परम् संकीर्णानि जातानि येन कालनिर्धारणे अधिकम् काठिन्यम् जातम्। कालिदासस्य स्थितिकालसम्बन्धीनि यानि विभिन्नानि मतानि विद्यन्ते तेषु मतद्वयम् एव प्रामुख्यम् भजते। तयोः एकम् गुप्तकालीनम् मतम् अस्ति यदनुसारेण गुप्तवंशस्य कस्यचन राज्ञः—मुख्यतः द्वितीयस्य चन्द्रगुप्तस्य—काले कालिदासः प्रादुरभवत्, अपरम् च मतम् ईसातः पूर्वम् प्रथमशताब्द्याम् परम्परायाम् प्रसिद्धस्य उज्जयिनीनरेशस्य विक्रमादित्यस्य काले तस्य स्थितिम् मन्यते। अनयोः मतयोः कतरत् तथ्यानुसारि, इति तु इदानीम् निश्चितरूपेण कथयितुम् न शक्यते।

एवमेव कालिदासस्य जन्मभूमिविषयकः विवादः अस्ति। केचन विद्वांसः तस्य जन्मस्थानम् कश्मीरे, केचन उज्जयिन्याम्, केचन च अन्यत्र मन्यन्ते, किन्तु इदम् निश्चयरूपेण कथयितुम् न शक्यते यत् वस्तुतः सः कुत्र अजनि।

अस्तु! कदापि कुत्रापि च एतस्य महाकवेः आविर्भावः जातः स्यात्, इदानीम् तु तस्य महत्त्वम् सार्वकालिकम् सार्वदेशिकम् च वर्तते।

२—रचनाः—एतेन महाकविना रघुवंशम् कुमारसंभवम् च इति द्वे महाकाव्ये, मेघदूतम्, ऋतुसंहारम् च इति द्वे गीतिकाव्यरूपे खण्डकाव्ये, अभिज्ञानशाकुन्तलम्, विक्रमोर्वशीयम्, मालविकाग्निमित्रम् च इति त्रीणि नाटकानि च इत्येतत् बहुमूल्यम् वाङ्मयम् संस्कृतसाहित्याय दत्तम्। एतदतिरिक्तम्, श्रुतबोधादयः अन्याः अपि काश्चन रचनाः कालिदासलेखनी-प्रसूताः मन्यन्ते, किन्तु यतः तासाम् कालिदासप्रणीतत्वम् असंदिग्धम् निश्चितम् वा नास्ति, अतः विद्वद्भिः तासाम् प्रामाणिकता न स्वीक्रियते।

उक्तासु सप्तसु कृतिषु 'ऋतुसंहारम्' कालिदासस्य प्रारम्भिकी रचना प्रतीयते। अस्मिन्, यथा च अस्य नाम्ना एव प्रकटम् अस्ति, षण्णाम् ऋतूनाम् वर्णनम् कृतम् वर्तते। अस्मिन् कलात्मिकायाः प्रौढेः अभावात्, मल्लिनाथेन अस्य टीकायाः अकृतत्वात्, आलंकारिकैश्च स्वग्रन्थेषु अस्य उद्धरणानाम् अदत्तत्वात् कतिपये विद्वांसः इदम् रघुवंशकारस्य महाकवेः कालिदासस्य रचनाम् न मन्यन्ते। किन्तु एते हेतवः एतादृशाः न सन्ति येषाम् आधारे इदम् कालिदासस्य प्रारम्भिककृतिरूपे अपि न मन्तुम् शक्येत।

कलात्मकविकासस्य दृष्ट्या 'मालविकाग्निमित्रम्' कालिदासस्य द्वितीया रचना प्रतीयते, तस्य नाटकीयकृतिषु च एवम् इदम् प्रारम्भिकी प्रथमा वा रचना अस्ति। अस्मिन्, यथा च अस्य नाम्ना एव सूच्यते, शुङ्गवंशीयस्य पुष्यमित्रपुत्रस्य अग्निमित्रस्य मालविकायाश्च प्रणयगाथा अस्ति। अस्य नाटकस्य अपि कालिदासप्रणीतत्वम् कैश्चित् विद्वद्भिः न मन्यते[1]।

'ऋतुसंहारम्' 'माविकाग्निमित्रम्' च विहाय अवशिष्टाः पञ्च कृतयः सर्वसम्मतया कालिदासप्रणीताः मन्यन्ते। किन्तु पुनरपि इयत् अवश्यम् अस्ति यत् कतिपयाः विद्वांसः कुमारसंभवस्य उपलब्धेषु एकोनविंशतिसर्गेषु केवलम् अष्टौ प्रारम्भिकसर्गान् एव कालिदासप्रणीतान् मन्यन्ते। एतासु पञ्चसु कृतिषु 'मेघदूतम्', 'कुमार-संभवम्' 'विक्रमोर्वशीयम्' च इमाः तिस्रः कृतयः ऋतुसंहारमालविकाग्निमित्रयोः पश्चात् अभिज्ञानशाकुन्तलरघुवंशयोश्च पूर्वम् प्रणीताः प्रतीयन्ते। एतासु तिसृषु कृतिषु अपि यत्र कवेः तरुणावस्था तरङ्गायमाणा वर्तते, तत्र कलात्मकः विकासः अपि पूर्णतया प्रौढः न सन् नवयौवनस्य एव अवस्थायाम् वर्तते। एतासु मेघदूते एकेन विरहिणा यक्षेण स्वप्रियतमायाः समीपे मेघस्य संदेशवाहकदूतस्य रूपे प्रेषणस्य कवित्वपूर्णम् वर्णनम् अस्ति। कुमारसंभवे गौरीशंकरयोः पुत्रस्य कुमारस्य स्वामिकार्तिकेयस्य वा संभवस्य जन्मनः वा गाथा अस्ति। विक्रमोर्वशीये पुरूरवसः उर्वश्याश्च प्रणयगाथा वर्णिता अस्ति।

---

१—द्रष्टव्यः—'नानाप्रबन्ध' इति शीर्षकः ग्रन्थः। (राजकृष्ण मुखोपाध्याय)।

'अभिज्ञानशाकुन्तलम्' 'रघुवंशम्' च कलात्मिकायाः प्रौढेः भावाभिव्यक्तेश्च संयमस्य दृष्ट्या कालिदासस्य अन्तिमे रचने प्रतीयेते। अनयोः अपि 'रघुवंशम्' पश्चाद् वर्तिनी रचना प्रतीयते। अस्मिन् युगचेतनया सह कवेः जीवनदर्शनम् पूर्णतः स्फुटितम् जातम् अस्ति। अभिज्ञानशाकुन्तले पुरुवंशीयस्य दुष्यन्तस्य शकुन्तलायाश्च प्रणयगाथा अस्ति। रघुवंशे, यथा च अस्य नाम्ना एव स्पष्टम् अस्ति, इक्ष्वाकुवंशीयस्य रघोः वंशस्य वर्णनम् अस्ति।

३—**उत्कृष्टस्य कवित्वस्य प्रकाशिका प्रसिद्धा ग्रन्थत्रयी**—कालिदासप्रणीतेषु उक्तेषु सप्तसु ग्रन्थेषु मेघदूतम्, अभिज्ञानशाकुन्तलम्, रघुवंशम् च इति प्रसिद्धा ग्रन्थत्रयी कवेः उत्कृष्टस्य कवित्वस्य प्रकाशिका सती संस्कृतसाहित्यस्य रत्नत्रयी वर्तते। अनया ग्रन्थत्रय्या महाकवेः कीर्तिसौरभम् न केवलम् भारते, अपि तु सम्पूर्णे अपि विश्वे प्रसारितम्। अतः अस्याः विशेषतानाम् कश्चन परिचयः संक्षेपतः निम्नरूपेण कर्तुम् उचितः प्रतीयते—

(अ) **मेघदूतम्**—उक्ते ग्रन्थत्रये 'मेघे माघे गतं वयः' इत्यादिरूपे प्रशंसितम् 'मेघदूतम्' महाकवेः कालिदासस्य प्रबन्धात्मकम् गीतिकाव्यम् गीतिकाव्यरूपम् खण्डकाव्यम् वा अस्ति। संस्कृतगीतिकाव्येषु मेघदूतस्य स्थानम् अग्रगण्यम् अस्ति। अस्मिन् कालिदासस्य उत्कृष्टकवित्वप्रयुक्ताः तदन्यकाव्यसाधारणाः विशिष्टाः गुणाः तु सन्ति एव, सहैव अस्य काव्यस्य वियोगशृङ्गारपरकत्वात् अत्र भावानाम् सूक्ष्मत्वम्, सरसत्वम्, गाम्भीर्यम् च आधिक्येन वर्तते। एतदतिरिक्तम्, एतस्य पद्यानाम् रमणीयता, स्वरसौष्ठवम्, माधुर्यम्, संगीतात्मकता च इत्येतत् सर्वम् दर्शनीयम् अनुभाव्यम् वा अस्ति। एतत् सकलम् अपि काव्यम् 'मन्दाक्रान्ता' नामके छन्दसि वद्धम् वर्तते, यस्य मन्द-मन्थरा गतिः वियोगशृंगारस्य करुणकोमलान् भावान् स्वत एव व्यञ्जयन्ती पाठकानाम् हृदयम् अतिशयितरूपेण विमोहयति।

(आ) **अभिज्ञानशाकुन्तलम्**—'अभिज्ञानशाकुन्तलम्' तु नाटकरत्नम् एव विद्यते। अस्य रमणीयता अपूर्वा एव अस्ति। अस्य इमाम् अपूर्वाम् रमणीयताम् अनुभूय एव केनापि अज्ञातनाम्ना सहृदयेन समालोचकेन मुक्तकण्ठतया घोषितम् यत्—

'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला।

वस्तुतः रमणीयत्वम् अत्र पदे-पदे सहृदयैः अनुभूयते। अस्य प्रणेत्रा महाकविना अस्य नायिकायाः शकुन्तलायाः विषये अत्र यत् इदम् उक्तम् यत्—

'सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् । (अ०शा० १।१९)

तत् स्वयम् 'अभिज्ञानशाकुन्तलम्' इत्याख्यस्य एतादृशस्य अस्य नाटकस्य विषये अपि समुचितरूपेण यथातथरूपेण वा घटितम् भवति यत्र उक्तरूपा मनोज्ञा रमणीया वा शकुन्तला सृष्टा वर्तते । यतः इदम् नाटकम् अपि स्वकीयकथावस्तोः रसाभिव्यञ्जनस्य च हेतोः स्वरूपेण एव रम्यम् मधुरम् च वर्तते, अतः शकुन्तलायाः वल्कलवत् सर्वम् अपि भाषाशैलीसंवादालंकारविन्यासादिकम् अस्य मण्डनम् एव जातम् । वस्तुतस्तु इदम् सर्वम् अपि केवलम् वल्कलवत् न सत् बहुमूल्यपरिधानवत् स्वस्वरूपतः रम्यम् फलतश्च वास्तविकम् मण्डनम् एव अस्ति ।

अत्र नाटके जीवनस्य 'सत्यम् शिवम् सुन्दरम्' च पूर्णतया स्फुटितम् वर्तते । भारतीयसंस्कृतेः सुन्दरम् [illegible]त्रम् अत्र रमणीयरूपे प्रस्तुतम् वर्तते [illegible] प्रायः सार्वकालिकम् भारतीयम् जीवनम् अत्र स्वकीये सम्पूर्ण अपि[illegible] चित्रितम् अस्ति । वस्तुपात्रकथोपकथनादीनाम् सर्वेषाम् अपि नाटकी[illegible]र्मम् तत्त्वानाम् दृष्ट्या इदम् नाटकम् एकम् पूर्णतया सफलम् नाटकम् श्रुति- रसा[illegible]नूतिस्तु अस्मिन् नाटके पदे-पदे सहृदयान् सामाजिकान् अ[illegible]म् रूपम् ल[illegible]न् करोति । अत्र अन्तः प्रकृतेः वाह्यप्रकृतेश्च इतिप्रकृतिद्वयस्य अ[illegible]तिः अमरः [illegible]कीये यथार्थरूपे समुपलभ्यते । सौन्दर्यवर्णनम् प्रेमाभिव्यञ्ज[illegible]र्मादिना– नाटकस्य जीवनतत्त्वम् एव अस्ति । तत्कालीनम् धार्मिकम्[illegible]त्ते । एतदेव राजनैतिकम् च जीवनम् अत्र सुचित्रितम् अस्ति । संक्षे[illegible] द्योतते । सः कथयितुम् शक्यते यत् यत्किञ्चिदपि नाटकीयम् रमणीय[illegible]म् प्रदर्शितवान् सर्वम् अपि अस्मिन् नाटके स्वकीये समन्वितरूपे विराजते ।[illegible]नम्नाः सन्ति—

(इ) रघुवंशम्—रघुवंशसम्बन्धि प्रख्यातम् कथा[illegible]दर्शनस्य प्रमुखा कविना कालिदासेन 'रघुवंश' रूपे एकोनविंशतिसर्गा[illegible]वतायै सर्वोच्चम् सरसम् च महाकाव्यम् प्रस्तुतम् कृतम् अस्ति । [illegible]विचलाम् आस्थाम् सहैव तस्य सुव्यवस्थितम् संग्रथनम्. मार्मिकस्थल[illegible]पकः अस्ति यत् तस्य विविधानाम् मनोभावानाम् सरसा प्रभावोत्पादि[illegible]ने दिव्यचरित्राणि अपि णाम् स्पष्टम् स्वाभाविकम् च चरित्रचित्रणम्, [illegible]रम् कुर्वन्ति । कालिदासस्य नाटकीयाश्च संवादाः, प्राकृतिकदृश्यानाम् [illegible]स्त यत् पुण्यकर्मा मानवः संश्लिष्टवर्णनम्, अलंकाराणाम् मौलिकः [illegible]ति । अतः तस्य मानवः देवा- छन्दसाम् सौन्दर्यम्, शैल्याः सारल्यम्, [illegible]षाम् समकक्षताम् प्राप्नोति । भाषायाः मधुरः प्रवाहः, सर्वोपरि च भार[illegible]ः मानवस्य गौरवम् प्रति स्वाम् संस्कृतेः आदर्शानाम् प्रदर्शनम्, कवेश्[illegible] दर्शनम्, इत्येतस्य सर्वस्य समन्वय[illegible]

कण्ठहारः भूत्वा स्वस्रष्टुः कीर्तिपताकाम् विश्वे सविलासम् प्रसारयत् वर्तते ।

यथा च उक्तरूपे प्रस्तुतेन कालिदासप्रणीतानाम् ग्रन्थानाम् तेषु च प्रसिद्धायाः ग्रन्थत्रय्याः विशेषतानाम् संक्षिप्तेन परिचयेन स्पष्टम् अस्ति, अथ च यथा पुरस्तात् द्रक्ष्यते,[१] कालिदासस्य कवित्वम् अनया दृष्टचा अतीव व्यापकम् अस्ति यत् तेन काव्यस्य संस्कृतसाहित्यशास्त्रसम्मतम् मुख्यम् रूपद्वयम्—श्रव्यकाव्यम् दृश्यकाव्यम् च—अपि स्वलेखन्या अतीव उत्कृष्टतया अलंकृतम्, सहैव तत् अनयोः उभयोः रूपयोः कवित्वस्य काव्यस्य वा पक्ष-द्वयस्य—अनुभूतिपक्षस्य अभिव्यक्तिपक्षस्य च—अपि परस्परम् यथोचितसमन्व-यस्य समानरूपेण प्राबल्यस्य च दृष्टचा अतीव उत्कृष्टम् अस्ति । फलतः सः यथार्थत एव 'महाकवि': इतिविरुदस्य अधिकारी अस्ति । वस्तुतः महाकविः कालिदासः व्यापिकाम् बहुमुखीम् च प्रतिभाम् दधत् रससिद्धः कवीश्वरः वर्तते । अयम् प्रेम्णः सौन्दर्यस्य च महान् कविः, अथ च भारतीयसंस्कृति-विशे[illegible]रवस्य महान् गायकः अस्ति । एतेन महाकविना भारतभूमि. संस्कृत-[illegible]त्यम् च इति उभे अपि समलंकृते गौरवान्विते च कृते । अयम् कवीनाम् [illegible]तम् 'मेघदू[illegible]णिः वर्तते, फलतः अस्य विषये कस्य अपि सहृदयस्य समालोचकस्य रूपम् खण्डके: समुचिता एव प्रतिभाति यत्—

गण्यम् अस्[illegible]ा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः ।
साधारणाः वि[illegible]ापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥

शृङ्गारपरकत्व[illegible]
क्येन वर्तते । एत[illegible]
माधुर्यम्, संगीतात्[illegible]
एतत् सकलम् अपि [illegible]
मन्द-मन्थरा गतिः [illegible]
व्यञ्जयन्ती पाठकाना[illegible]

(आ) अभिज्ञानश[illegible]
एव विद्यते । अस्य रमणी[illegible]
रमणीयताम् अनुभूय एव [illegible]
मुक्तकण्ठतया घोषितम् यत्—

[illegible] 'काव्येषु नाटकं [illegible]

वस्तुतः रमणीयत्वम् अत्र पद[illegible]
महाकविना अस्य नायिकायाः शकु[illegible]
यत्—

'सरसिजमनुविद्धं [illegible]
मलिनमपि हिमांशोर्लक्ष्म [illegible]

[१] [illegible] शीर्षके निबन्धे ।

४५

# कालिदासस्य जीवनदर्शनम्

१—प्रास्ताविकम्—यदा महाकवेः कालिदासस्य कृतीनाम् तस्य जीवनदर्शनस्य परिचयप्राप्तेः उद्देश्येन अध्ययनम् क्रियते चेत् तदा तासाम् अध्ययनेन इदम् स्पष्टम् भवति यत् तस्य जीवनदर्शनम् अतीव स्वस्थम् व्यापकम् च अस्ति। सः जीवनस्य प्रायः प्रत्येकम् क्षेत्रे उदारम् व्यापकम् च दृष्टिकोणम् धत्ते। सः भारतीयायाः प्राचीनायाः परम्परायाः परमानुयायी वर्तते। सः श्रुतिस्मृतीतिहासपुराणप्रतिपादितम् भारतस्य सनातनम् धर्मम् प्रति पूर्णतया निष्ठावान् अस्ति। भारतीयसंस्कृतेः यत् गौरवम् श्रुति-स्मृतीतिहासपुराणात्मके वाङ्मये गीयते, तस्य एव एकम् काव्यमयम् रूपम् प्रदातुम् प्रयत्नः कालिदासेन कृतः अस्ति। वस्तुतः सः भारतीयसंस्कृतेः अमरः गायकः अस्ति, अथ च तस्याः केनचित् अङ्गविशेषेण—वैष्णवशैवधर्मादिना—पक्षपातम् न दधत् तस्याः समग्रम् रूपम् प्रति समानाम् निष्ठाम् धत्ते। एतदेव कारणम् यत् तस्य कृतिषु वैष्णवधर्मस्य शैवधर्मस्य च समन्वयः द्योतते। सः विष्णुम् शिवम् च उभौ अपि प्रति समानरूपेण स्वीयाम् भक्तिम् प्रदर्शितवान् अस्ति। तस्य जीवनदर्शनस्य प्रमुखाः सिद्धान्ताः विशेषताः वा निम्नाः सन्ति—

२—मानवतावादः—महाकवेः कालिदासस्य जीवनदर्शनस्य प्रमुखा विशेषता तस्य मानवतावादः अस्ति। सः स्वकृतिषु मानवतायै सर्वोच्चम् स्थानम् दत्तवान् अस्ति, अथ च ताम् प्रति स्वकीयाम् अविचलाम् आस्थाम् प्रकटितवान् अस्ति। तस्य मानवतावादः इयान् व्यापकः अस्ति यत् तस्य परिधौ देवः, यक्षः, देवतात्मा हिमालयश्च इत्यादीनि दिव्यचरित्राणि अपि समाविशन्ति, फलतश्च तानि मानव इव व्यवहारम् कुर्वन्ति। कालिदासस्य अनुसारेण मानवे देवे च इयत् एव अन्तरम् अस्ति यत् पुण्यकर्मा मानवः देवः भवति, अथ च क्षीणपुण्यः देवः मानवः भवति। अतः तस्य मानवः देवानाम् दासः न सन् तेषाम् साहाय्यम् कुर्वन् तेषाम् समकक्षताम् प्राप्नोति। मानवस्य इमाम् उच्चताम् प्रदर्श्य कालिदासः मानवस्य गौरवम् प्रति स्वाम् आस्थाम् प्रकटितवान् अस्ति।

मानवस्य गौरवगाथाम् गायता कालिदासेन तस्य तस्याम् उच्चायाम् स्वाभाविक्याम् सद्वृत्तौ स्वकीयः पूर्णः विश्वासः अभिव्यक्तः अस्ति यस्य हेतोः सः अपरेषाम् सहायतायाम् रतः तिष्ठति। अस्य एव विश्वासस्य कारणात् सः निःसंकोचरूपेण 'न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः।' (मे० १७), 'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः' (मे० ४१), 'आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम्' (मे०५५) इत्यादिप्रकारान् स्वान् उद्गारान् अभिव्यनक्ति। कालिदासस्य मानव एव नहिं, अपि तु तस्य प्रकृतिः अपि अनया एव सद्वृत्त्या युक्ता अस्ति। अत एव च तस्य यक्षः मेघात् आशास्ते यत् सः सौहार्देन तम् प्रति दयाभावेन वा तस्य सन्देशवाहकः भूयात् (सौहार्दाद् वा विधुर इति वा मय्यनुक्रोशबुद्धया—मे० ११७)। उपकारिणम् प्रति प्रत्युपकारस्य अकरणम् तस्य दृष्टौ हेयम् अस्ति (प्रतिप्रियं चेद् भवतो न कुर्यां वृथा हि मे स्यात् स्वपदोपलब्धिः —रघु० ५।५६)। परोपकारे तस्य इयती निष्ठा अस्ति यत् सः केनापि प्रणयिना किञ्चित् कर्तुम् कथिते सति तस्य उत्तरम् प्रणयिनः अभीष्टार्थस्य सम्पादने एव मन्यते (प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव—मे० ११६)।

**३—आशावादः**—मानवतावादिनम् दृष्टिकोणम् दधत् कालिदासः जीवनम् प्रति निराशावादिनम् दृष्टिकोणम् न रक्षित्वा सर्वदा स्वस्थम् आशावादिनम् च दृष्टिकोणम् रक्षति। सः इदम् मन्यते यत् कियती अपि विपत्तिः स्यात्, तस्याः अपि अन्तः भविष्यति। अथ च एकदा पुनः सुखस्य दर्शनम् भविष्यति, यतो हि सुखदुःखयोः चक्रम् तु चलत् एव तिष्ठति, अतः जीवने दुःखात् विचलितीभवनस्य आवश्यकता नास्ति (कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण—मे० १११)। अस्य एव अशावादिनः दृष्टिकोणस्य हेतोः यक्षः स्वपत्न्यै इदम् आश्वासनम् ददाति यत्—

'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानन्यान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगुणितं तं तमेवात्मिा
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ (मे० ११२)।

कालिदासस्य कृतिषु पदे-पदे या आनन्दस्य सौन्दर्यस्य च अभिव्यक्तिः भवति, सा अपि जीवनम् प्रति तस्य स्वस्थायाः आनन्दमय्याश्च आशावादिन्याः दृष्टेः परिचायिका अस्ति। अनेन एवम् प्रतीयते यत् कालिदासः जीवने दुःखाय निराशायै च स्थानम् एव न ददाति इव।

**४—जीवनोन्नायकाः गुणाः**—कालिदासस्य जीवनदर्शनस्य अनुसारेण जीवनोन्नायकेषु गुणेषु प्रमुखाः सन्ति—

(अ) **मनस्विता**—मानवेन मनस्विना सता स्वावलम्बिना भाव्यम् (स्ववीर्यगुप्ता हि मनोः प्रसूतिः—रघु० २।४), तेन स्वस्मिन् पूर्णेन च भाव्यम्, यतो हि रिक्तता लघुतापरिचायिका अस्ति (रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय—मे० २०)। संकटे आपतिते सति उत्कृष्टः जन एव याचितव्यः, कामम् तस्मिन् याचना निष्फला स्यात्, किन्तु सफलतायाः आशायाम् सत्याम् अपि निकृष्टात् जनात् याचनाम् सः उचिताम् न मन्यते—'याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा' (मे० ६)।

(आ) **उत्तरदायित्वम्**—कालिदासस्य मान्यता अस्ति यत् जीवने स्वस्मिन् निहितस्य भारस्य उत्तरदायित्वस्य वा निर्वाहः प्राणपणेन अपि कर्त्तव्यम्—स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन (रघु० २।५६)।

(इ) **यशोधनत्वम्**—भौतिकजीवनस्य उत्सर्गस्य मूल्येन अपि यशोरक्षा कालिदासस्य आदर्शः अस्ति (अपि स्वदेहात् किमुतेन्द्रियार्थात् यशोधनानां हि यशो गरीयः—रघु० १४।३५)। यशोविषयकः तस्य आदर्शः 'यशस्तु रक्ष्यं परतो यशोधनैः' (रघु० ३।६२) इत्येतस्मिन् तस्य सूत्ररूपे वाक्ये निहितः अस्ति।

(ई) **महत्त्वाकाङ्क्षा**—मानवस्य आकाङ्क्षाभिः उच्चाभिः भाव्यम्। कालिदासस्य अनुसारेण महत्त्वाकाङ्क्षा महापुरुषाणाम् लक्षणम् अस्ति—'उत्सर्पिणी खलु महतां प्रार्थना' (अ० शा० ७।१२)। सहैव तस्य मतम् अस्ति यत् जीवने उच्चता गुणैः एव प्राप्तुम् शक्यते (पदं हि सर्वत्र गुणैर्निधीयते-रघु० ३।६२)।

(उ) **लोकसामञ्जस्यम्**—कालिदासस्य जीवनदर्शनम् अस्ति यत् सम्पूर्णः लोकः समानरुचिः भवितुम् न शक्नोति। सः स्वभावतः भिन्नरुचिः एव स्थास्यति—'भिन्नरुचिर्हि लोकः' लोकः (रघु० ६।३०)। फलतः इदम् तथ्यम् तत्त्वतः ज्ञात्वा मानवेन शान्तेन सतुष्टेन च सता लोकेन सह यथास्थिति सामञ्जस्यम् स्थापनीयम्, लोके अन्यजनानाम् व्यवहारेण उद्विग्नेन न भाव्यम्।

**५–सामाजिकः राजनैतिकश्च आदर्शः**—सामाजिकव्यवस्थाया दृष्ट्या कालिदासः पूर्वपरम्परागते वर्णाश्रमधर्मे आस्थाम् धत्ते। तस्य अनुसारेण समाजे ब्राह्मणस्य सर्वोच्चम् स्थानम् अस्ति, अथ च तस्मात् अपि तपस्विनः महर्षयश्च उच्चतराः। राज्ञा अपि एतेषाम् सर्वेषाम् समक्षम् नतमस्तकेन भाव्यम्। कालिदासः श्रुतिस्मृतिप्रतिपादितस्य वर्णाश्रमधर्मस्य मर्यादायाः अनुसारेण सर्वेषाम् पारिवारिकाणाम् सामाजिकानाम् च व्यवहाराणाम् मूल्याङ्कनम् करोति। एतदेव कारणम् यत् प्रेम्णः विषये अपि सन्तानफलकः

मर्यादितः दाम्पत्यप्रेमा एव तस्य आदर्शः अस्ति। परदारव्यवहारम् अपि सः अनार्यम् मन्यते—'अनार्यः परदारव्यवहारः।' (अ० शा० ७।२०)।

राजनैतिकव्यवस्थायाः दृष्ट्या कालिदासः राजतन्त्रे निष्ठाम् धत्ते, किन्तु तस्य राजतन्त्रम् लोकतन्त्रात् अपि अधिकतरम् जनकल्याणकारि अस्ति यस्मिन् राजा एकः आदर्शः मानवः सन् प्रजाकल्याणार्थम् सततम् जागरूकः भवति (अ० शा० ५।४-८; रघु० १।५-८)।

६—अन्ये विषयाः—कालिदासः जगतः सृष्टिप्रलयौ मन्यमानः तस्य एकम् कर्त्तारम् नियन्तारम् च ईश्वरम् मन्यते। सः सांख्यप्रतिपादिताम् प्रकृतिम् तद्गुणांश्च मन्यमानः जगदीश्वरम् एतेभ्यः गुणेभ्यः अतीतम् निर्विकारम् च मन्यते (रघु० १०।१६-३१)। सः अतिमानवीषु दिव्यशक्तिषु अपि विश्वासम् निदधाति, अथ च भवितव्यताम् अपि मन्यते (अ० शा० १।१४; ६।१०)। पुनर्जन्म मन्यमानः सः एकस्य जन्मनः संस्काराणाम् जन्मान्तरे संक्रमणम् अवचेतनम् मनश्च मन्यते (रघु० ७।१५; अ० शा० ५।२)। अन्तःकरणस्य शक्तौ अपि तस्य विश्वासः अस्ति (अ० शा० १।१९)। सः कर्मवादे परलोकवादे च अपि स्वकीयाम् आस्थाम् प्रकटितवान् अस्ति (रघु० ८।८५)।

अस्तु ! इत्थम् संक्षेपतः कालिदासस्य जीवनदर्शनम् प्रायः तत् एव अस्ति यत् श्रुतिस्मृतीतिहासपुराणाद्यात्मके परम्परावाङ्मये अभिव्यक्तम् अस्ति, अथ च अस्य वाङ्मयस्य अनुयायिनि भारतीयसमाजे सामान्यतः जीवनप्रेरणास्रोतोरूपे प्रचलितम् अस्ति।

४६

# कालिदासस्य प्रकृतिचित्रणम्

१—तस्य विभिन्नकृतिषु प्रकृतिचित्रणम्—यथा च महाकवेः कालिदासस्य विभिन्नासु कृतिषु स्थितस्य प्रकृतिचित्रणस्य दर्शनेन स्पष्टम् अस्ति, तस्य हृदये प्रकृतिम् प्रति अगाधः प्रेमा अस्ति। प्रधानतया सौन्दर्यान्वेषकः कविः सन् सः यत्र मानवसौन्दर्यस्य निरीक्षणम् कृतवान् तत्र सः प्रकृतिसौन्दर्यस्य अपि अन्वेषणम् कुर्वन् वर्तते स्म। तस्य प्रारम्भिकी कृतिः 'ऋतुसंहारम्' प्रकृत्यै एव समर्पितम् अस्ति। अस्मिन् यद्यपि प्रकृतिः उद्दीपनरूपे प्रायः चित्रिता अस्ति, किन्तु पुनरपि सा अत्र आलम्बनरूपे अपि वर्णिता वर्तते, यथा—

विशुष्ककण्ठाहृतसीकराम्भसो
गभस्तिभिर्भानुमतोऽनुतापिताः।
प्रवृद्धतृष्णोपहता जलार्थिनोः
न दन्तिनः केसरिणोऽपि बिभ्यति॥ (१।१५)

अत्र ग्रीष्मस्य प्रचण्डतायाः कीदृशम् यथातथम् स्वाभाविकम् च वर्णनम् अस्ति।

अस्मिन् काव्ये कालिदासेन प्रकृतेः आलंकारिकम् वर्णनम् अपि कृतम् अस्ति; उदाहरणार्थम्, तरुणकवये शरदृतुः श्वेतवसना नववधूः इव प्रतीयते—

काशांशुका विकचपद्ममनोज्ञवक्त्रा
सोन्मादहंसनवनूपुरनादरम्या।
आपक्वशालिरुचिरानतगात्रयष्टिः
प्राप्ता शरन्नववधूरिव रूपरम्या। (३।१)

कुमारसंभवस्य वसन्तवर्णनम् अपि प्रकृतिचित्रणस्य सुन्दरम् निदर्शनम् अस्ति। 'मेघदूतम्' एकेन प्रकारेण प्रायः प्रकृतिकाव्यम् एव अस्ति।

अस्मिन् प्रकृतेः एकस्मिन् रूपे–मेघे–सन्देशप्रेषणरूपम् एतादृशम् उत्तरदायित्व-पूर्णम् कार्यम् निहितम् यत् निपुणाः जना एव सम्पादयितुम् शक्नुवन्ति (सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः–मे० ५)। यथा च अस्य काव्यस्य दर्शनेन स्पष्टम् अस्ति, अस्मिन् पदे-पदे प्रकृतिच्छटायाः दर्शनम् भवति। अस्मिन् प्रकृतेः सुन्दरात् सुन्दरतराणि अनेकानि चित्राणि वर्तन्ते यानि कवेः प्रकृतिम् प्रति आकर्षणम् तच्चित्रणकौशलम् प्रकटयन्ति। एषु एकम् चित्रम् निदर्शनार्थम् अत्र अपि द्रष्टुम् शक्यते यस्मिन् मेघः आकाश-मार्गेण तरन् गच्छन्नस्ति, सहैव अनुकूलः पवनः मन्दम्-मन्दम् प्रवहन् वर्तते, वामतः चातकः मधुरम् नदन् वर्तते, बलाकानाम् च पङ्क्तिः सहैव उड्डीय-माना अस्ति, विरहिण्यः ललनाः स्वान् अलकान्तान् उत्थाय इदम् सुन्दरम् दृश्यम् पश्यन्त्यः आश्वस्ताः भवन्ति—

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः……
मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः। (मे० ८-९)

'अभिज्ञानशाकुन्तलस्य' तु स्वयम् कथानकम् एव प्रकृतेः उत्सङ्गे विकसितम् भवति। तस्य नायिका शकुन्तला प्रकृतेः एव पुत्री इव वर्तमाना तद्द्वारा एव पालिता पोषिता च अस्ति। अस्य नायकः दुष्यन्तः नगरस्य वातावरणात् निष्क्रम्य प्रकृतेः एव प्राङ्गणे स्वाम् क्रीडाम् करोति। अस्मिन् नाटके अन्यपात्राणाम् इव प्रकृतेः अपि प्रमुखा भूमिका अस्ति या कथमपि उपेक्षणीया नास्ति। अभिज्ञानशाकुन्तले कण्वाश्रमस्य वन्यपशूनाम् विश्रामस्य कीदृशम् स्वाभाविकम् चित्रम् अस्ति—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः॥ (१।६)

आश्रमस्य एकम् अन्यत् भव्यम् प्राकृतिकम् दृश्यम् दृश्यताम् यत् दुष्यन्तः चित्रांकितम् कर्तुम् वाञ्छति—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्। (१।१७)

'रघुवंशम्' मुख्यतया मानवचरित्राणाम् आकरः सत् अपि प्रकृति-चित्रैः शून्यम् नास्ति। अत्र एकस्मिन् चित्रे वाललताः पुष्पवर्षणम् कुर्वत्यः दृश्यन्ते—

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम्।
अवाकिरन् वाललताः प्रसूनैराचारलाजैरिव पौरकन्याः॥ (२।१०)

एकस्मिन् अन्यस्मिन् चित्रे श्यामलानाम् वनानाम् अतीव स्वाभा-विकम् चित्रणम् कृतम् वर्तते—

स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि।
ययौ मृगाध्यासितशाद्वलानि श्यामायमानानि वनानि पश्यन्॥ (२।१७)

एवमेव अस्मिन् काव्ये यत्र-तत्र अनेकानि प्रकृतिचित्राणि विकीर्णानि वर्तन्ते। अस्य त्रयोदशः सर्गस्तु विशेषतः भव्यैः प्राकृतिकचित्रैः पूर्णः अस्ति। अत्र सीतादिभिः सह भगवान् रामः पुष्पकविमानेन लङ्कासमीपतः प्रतिष्ठन् क्रमशः समुद्रः, समुद्रतटः, दण्डकवनम्, माल्यवान् पर्वतः, गोदावरी नदी, पञ्चवटी, अगस्त्याश्रमः, पञ्चाप्सरस्तीर्थम्, सुतीक्ष्णाश्रमः, शरभङ्गाश्रमः, चित्रकूटः, अत्रितपोवनम्, प्रयागः, शृङ्गवेरपुरम्, सरयू नदी च इत्येतेषाम् उपरि वर्तमानः अयोध्यायाः समीपम् आगच्छति। विमानम् तीव्रगत्या चलत् वर्तते, अथ च एकस्य पश्चात् अपरम् प्राकृतिकम् दृश्यम् उपस्थितम् भवत् अस्ति। कविः रामेण एषाम् दृश्यानाम् सजीवम् वर्णनम् कारयन् वर्तते येन पाठकानाम् समक्षम् दृश्यानाम् एका चित्रावली इव उपस्थिता भवति। एषाम् प्राकृतिकदृश्यानाम् संश्लिष्टे, सजीवे, स्वाभाविके च रूपे चित्रणम् तु कृतम् एव अस्ति, सहैव तेषाम् स्वरूपस्य स्पष्टतरायै अनुभूत्यै कविना तत्सदृशानाम् उपयुक्तानाम् अप्रस्तुतानाम् मौलिकरूपेण विधानम् विन्यासम् वा कृत्वा तेषाम् चित्रणम् अधिकतरम् सरसम् सुन्दरम् च सम्पादितम्। निदर्शनार्थम्, एषु एकम् दृश्यम्—गङ्गायमुनासङ्गमः—प्रस्तोतुम् शक्यते यस्मिन् यमुनातरङ्गैः संसृष्टा गङ्गा विभिन्नरूपेषु दृष्टा अस्ति—

क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा।
अन्यत्र माला सितपंकजानामिन्दीवरैरुत्खचितान्तरेव॥
क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव॥
क्वचित् प्रभा चान्द्रमसी तमोभि· छायाविलीनैः शवलीकृतेव।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यतमः प्रदेशाः॥
क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य।
पश्यानवद्याङ्गि! विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः॥
(१३।५४-५७)

**२—कालिदासकृतस्य प्रकृतिचित्रणस्य विभिन्नानि रूपाणि**—कालिदासेन स्वीयासु कृतिषु प्रकृतिचित्रणम् विभिन्नेषु रूपेषु कृतम् अस्ति। एतानि रूपाणि मुख्यतः निम्नेषु वर्गेषु विभक्तुम् शक्यन्ते—

**(अ) विशुद्धम् आलम्बनरूपम्**—अस्मिन् वर्गे तानि वर्णनानि समाविशन्ति येषु कविः स्वतन्त्ररूपेण प्रकृतिम् एव स्वकीयायाः भावनायाः भावमय्याः दृष्टेः वा मुख्यम् आलम्बनम्, फलतश्च स्ववर्णनस्य मुख्यम् विषयम् कृतवान् अस्ति, अथ च सहैव तस्याः वर्णनम् अनालङ्कारिकरूपे कुर्वन् तस्याम् कीदृशम् अपि आरोपम् न कृतवान् अस्ति। अस्मिन् वर्गे ऋतुसंहारस्य पूर्वप्रदर्शितम् ग्रीष्मवर्णनम्, कुमारसंभवस्य हिमालयवर्णनम्, मेघदूतस्य 'मन्दं मन्दं नुदति पवनः.....' (९) 'नीपं दृष्ट्वा हरितकपिशम्.....' (२१), 'पाण्डुच्छायोपवनवृतयः.....' (२३), 'विश्रान्तः सन्.....' (२६) इत्यादीनि वर्णनानि, रघुवंशस्य 'स पल्वलोत्तीर्णवराहयूथानि...' (२।१७) इत्यादीनि वर्णनानि, अभिज्ञानशाकुन्तलस्य च 'ग्रीवाभङ्गाभिरामम्.....' (१।७) इत्यादीनि वर्णनानि, अथ च अन्यासाम् तत्कृतीनाम् एतादृशानि एव वर्णनानि समायान्ति।

**(आ) आलङ्कारिकम् आलम्बनरूपम्**—अस्मिन् वर्गे तानि वर्णनानि समायान्ति येषु प्रकृतिः आलम्बनरूपे तु चित्रिता अस्ति, किन्तु तस्याः वर्णनम् आलंकारिके रूपे कृत्वा सा अन्यस्य कस्यचित् अप्रस्तुतस्य रूपे अपि दृष्टा अस्ति। एतादृशेषु वर्णनेषु ऋतुसंहारस्य पूर्वप्रदर्शितम् शरदवर्णनम् यस्मिन् शरत् नववधूरूपे दृष्टा अस्ति, कुमारसंभवस्य वसन्तवर्णनान्तर्गतम् तद्वर्णनम् यत्र लताः एतादृशीनाम् वधूनाम् रूपे दृष्टाः सन्ति याः स्वकीयानाम् तरुपतीनाम् आलिङ्गनम् कुर्वत्यः वर्तन्ते (३।३९), मेघदूतस्य 'छन्नोपान्तः.....' (१८) इत्यादि वर्णनम् यस्मिन् मेघयुक्तः आम्रकूटः पर्वतः 'मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः' इति रूपे दृष्टः अस्ति, रघुवंशस्य च पूर्वप्रदर्शितम् गङ्गायमुनासङ्गमवर्णनम् यत्र 'यमुनातरङ्गैः भिन्नप्रवाहा गङ्गा' इन्द्रनीलानुविद्धमुक्तामालादिरूपे दृष्टा अस्ति, इत्यादीनि तत्सदृशानि अन्यानि च वर्णनानि आयान्ति।

**(इ) उद्दीपनरूपम्**—अस्मिन् वर्गे तानि वर्णनानि आयान्ति येषु प्रकृतिः मानवभावानाम् उद्दीपकरूपे चित्रिता अस्ति। उदाहरणार्थम् यथा, ऋतुसंहारस्य अधिकांशतः वर्णनानि, मेघदूतस्य च तत् वर्णनम् यस्मिन् यक्षः प्रकृतेः विभिन्नरूपेषु स्वीयायाः प्रियतमायाः विभिन्नानाम् अङ्गानाम् दर्शनम् करोति।

**(ई) अप्रस्तुतविधानात्मकम् रूपम्**—अस्मिन् वर्गे एतादृशानि वर्णनानि समाविशन्ति येषु कश्चित् वर्णनीयम् विषयम् स्पष्टतया प्रकाशयितुम् तत्सदृशाः प्राकृतिकपदार्थाः अप्रस्तुतरूपे विन्यस्ताः सन्ति, यथा—'सरसिजमनुविद्धं शैवलेनापि रम्यम्.....इयमधिकमनोज्ञा वल्कलेनापि तन्वी.....' (अ० शा०

१।१७), 'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।' (अ० शा० १।१८) इत्यादीनि वर्णनानि ।

(उ) संवेदनशीलम् मानवीयभावनायुक्तम् वा रूपम्—अस्मिन् वर्गे ईदृशानि वर्णनानि समायान्ति येषु जडा प्रकृतिः अपि ईदृशी संवेदनशीला प्रदर्शिता अस्ति यत् सा मानवस्य सुखदुःखाभ्याम् सुखदुःखयुक्ता भवति अथवा मानव इव व्यापारम् करोति; यथा, 'कुमारसंभवे' चन्द्रः स्वप्रियाम् रजनीम् चुम्बति । (८।६३), 'मेघदूते' मेघस्य संयोगेन रामगिरौ स्नेहव्यक्तिः भवति (१२), 'रघुवंशे' समुद्रः तत्पत्न्यः सरिताश्च प्रेमाविह्वलतया 'मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः । अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः' (१३।९) इति रूपे परस्परम् अधरदाने व्यापृताः भवन्ति । अत्रैव समुद्रतीरवायुः संवेदनशीलत्वात् रामम् प्रति दयया परोपकारभावनया वा 'वेलानिलः केतकरेणुभिस्ते सम्भावयत्याननमायताक्षि । मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम् ।' (१३।१६) इति रूपे सीताननम् केतकपरागैः मण्डयति । अनेन एव प्रकारेण 'मालविकाग्निमित्रस्य' मलयानिलः अपि संवेदनशीलः अस्ति (३।४) । 'अभिज्ञानशाकुन्तले' तु प्रकृतिः इयती संवेदनशीला अस्ति यत् सा शकुन्तलाप्रस्थानसमये तत्सज्जायै वस्त्राभूषणानि अपि ददाति, ताम् गन्तुम् अनुमन्यते, अथ च स्वकीयैः विभिन्नरूपैः रुदिति (४।४, ९, ११-१३) ।

इत्थम् कालिदासेन प्रकृतिः उक्तेषु अनेकेषु रूपेषु चित्रिता । तेन अस्याः उपासनात्मिका साधना स्वकीये सम्पूर्णे साहित्यिकजीवने कृता अस्ति यत्फलस्वरूपम् तस्य प्रकृति-प्रेमा 'ऋतुसंहारस्य' सामान्यपरिचयात् क्रमशः विकसितः सन् 'अभिज्ञानशाकुन्तले' 'रघुवंशे' च समागत्य आध्यात्मिकरूपे परिणतः अस्ति । तस्य अनुसारेण प्रकृतिः मावनस्य चिरन्तनी सहचरी, अथ च तस्य स्वस्थाय, सरसाय, सफलाय च लौकिकाय आध्यात्मिफाय च जीवनाय अपरिहार्या अस्ति । यद्यपि कालिदासस्य प्रकृतेः कोमलम् रूपम् एव अधिकम् प्रियम् अस्ति, पुनरपि सः तस्याः अस्मिन् सीमितरूपे एव तया सह स्वकीयम् एतावत् सफलम् तादात्म्यम् स्थापयितुम् अशक्नोत् यत् सः आधुनिक्याम् कथनशैल्याम् निःसंकोचरूपेण 'प्रकृतेः कविः' कथयितुम् शक्यते ।

## ४७

# कालिदासस्य कवित्वम्

१—कवित्वस्य व्यापकत्वम्—यथा च पूर्वम् उक्तम्[१] कालिदासः व्यापिकाम् बहुमुखीम् च प्रतिभाम् दधत् रससिद्धः कवीश्वरः अस्ति। कालिदासस्य कवित्वम् इयत् व्यापकम् अस्ति यत् तस्य परिधौ प्राचीनेन भारतीयेन साहित्यशास्त्रेण सम्मते उभे अपि काव्यरूपे—श्रव्यम् दृश्यम् च—समाविष्टे स्तः, अथ च यथा श्रव्यकाव्यस्य अन्तः आगच्छत् तस्य प्रबन्धकाव्यम्—रघुवंशम्—काव्यकलायाः चूड़ान्तनिदर्शनम् अस्ति, तथैव दृश्यकाव्यस्य अन्तः समागच्छत् तस्य नाटकम्–अभिज्ञानशाकुन्तलम्–काव्यकलायाः, अथ च यदि अद्यतन्याम् भाषायाम् कथ्येत चेत् नाटचकलायाः, उत्कृष्टम् उदाहरणम् प्रस्तुतम् करोति। इयत् एव नहि, श्रव्यकाव्यस्य क्षेत्रे तु तेन गीतिकाव्यम् प्रबन्धकाव्यम् च इति उभयोः अपि सृष्टौ समानरूपेण सफलता प्राप्ता अस्ति। यत्र तस्य प्रसिद्धम् गीतिकाव्यम्–मेघदूतम्–रसिकानाम् कण्ठहारः भवत् वर्तते, तत्र तस्य प्रबन्धकाव्ये–कुमारसंभवम् रघुवंशम् च–अपि काव्यकलामर्मज्ञानाम् आस्वाद्ये अनुशीलनीये च भवन्ती वर्तेते। गीतिकाव्यस्य, प्रबन्धकाव्यस्य, नाटकस्य च क्षेत्रम् समानरूपेण व्याप्नुवत् तस्य कवित्वम् इयत् व्यापकम् प्रभविष्णु च अस्ति यत् तस्य प्रतापः न केवलम् भारते, अपि तु विदेशेषु अपि आरूढवान्, अथ च सः अद्य अपि अक्षुण्णरूपेण स्थितः अस्ति।

२—अनुभूतेः व्यापकत्वम्—कालिदासस्य कवित्वे तस्य कवित्वस्य काव्यस्य वा पक्षद्वयम्—अनुभूतिपक्षः अभिव्यक्तिपक्षश्च—अपि समानरूपेण प्रबलम् अस्ति, अथ च तस्य कृतिषु अनयोः उभयोः अपि पक्षयोः पूर्णतया सफलः निर्वाहः जातः अस्ति। कस्य अपि कवेः अनुभूतेः क्षेत्रम् यावदेव व्यापकम् स्यात्, तावत् एव व्यापकस्य कवित्वस्य धनी सः भवितुम् शक्नुयात्। यतः

---

१—'महाकविः कालिदासः' इति शीर्षके निबन्धे।

कालिदासस्य अनुभूतेः क्षेत्रम् इयत् व्यापकम् अस्ति यत् एकतस्तु तस्य लोकस्य वाह्या आन्तरिकी च अनुभूतिः पूर्णरूपेण प्राप्ता अस्ति, अपरतश्च तस्य चक्षुषी मानवम् परितः प्रसृतायाः प्रकृतेः दर्शनम् कुर्वती तिष्ठतः। इयत् एव नहि, तस्य अनुभूतिः एकस्याः अन्यस्याः दिशः—पूर्वपरम्परागतात् भारतीयात् वाङ्मयात्—स्वविषयम् प्राप्नुनती सती अधिकतरा व्यापिका सम्पद्यते। इत्थम् कालिदासः गहनेन शास्त्रीयज्ञानेन सूक्ष्मेण प्रकृतिनिरीक्षणेन च सह वाह्यस्य आन्तरिकस्य च लोकजीवनस्य अतीव गम्भीरतायाः विशदायाः, व्यापिकायाश्च अनुभूतेः संवलम् गृहीत्वा काव्यक्षेत्रे अवतीर्णवान्, अथ च अस्याः अनुभूतेः सः अतीव यथातथरूपेण सफलाम् मार्मिकीम् च अभिव्यक्तिम् कृतवान्, येन तस्य कवित्वम् इयत् उच्चम्, व्यापकम्, गम्भीरम् च भवितुम् अशक्नोत् यत् न तु तस्य उच्चतायाः स्पर्शः कर्तुम् शक्यते, न च तस्य परिधेः अन्तः प्राप्यते, नापि च तस्य अगाधम् तलम् प्रवेष्टुम् अध्यासितुम् वा शक्यते।

**३—सौन्दर्यानुभूतिः**—अनुभूतेः व्यापकत्वात् हेतोः विभिन्नानाम् रसानाम् सफलाम् व्यञ्जनाम् कुर्वन् अपि कालिदासः मुख्यतः शृङ्गाररसस्य अभिव्यञ्जनायाम् व्यापृतः वर्तते स्म। अस्य रसस्य व्यञ्जनायाम् तु सः इयदधिकम् रममाणः वर्तते स्म यत् सः मुख्यतः सौन्दर्यस्य प्रेम्णश्च एव कविः कथयितुम् शक्यते। वस्तुतः सः सौन्दर्यस्य चतुरः चित्रकारः प्रेम्णश्च निपुणः गायकः अस्ति। यतः सौन्दर्यस्य प्रेम्णश्चः परस्परम् सम्वर्धनहेतुत्वात् घनिष्ठः सम्वन्धः अस्ति, अतः शृङ्गाररससम्राट् कालिदासः इमौ उभौ अपि समानरूपेण स्वकीयस्य कवित्वस्य मुख्यम् विषयम् कृतवान्।

यदवधि सौन्दर्यस्य सम्वन्धः अस्ति, समग्रे जगति कालिदासस्य दृष्टिः सुन्दरे एव पतिता अस्ति। सः अन्विष्य-अन्विष्य प्रकृतेः सौन्दर्यस्य दर्शनम् कृतवान्, अथ च सहैव मानवस्य सौन्दर्यम् सूक्ष्मदृष्टया अवलोकितवान्। मानवसौन्दर्यस्य दर्शनम् कुर्वता तेन तस्य रूपसौन्दर्यम्, भावसौन्दर्यम्, चरित्रसौन्दर्यम् शीलसौन्दर्यम् वा च इत्यादिके सर्वविधसौन्दर्ये दृष्टिः पातिता। मानवरूपसौन्दर्यस्य दर्शनावसरे तस्य दृष्टिः प्रायः प्रकृतिरूपसौन्दर्ये अपि सहैव पतन्ती वर्तते स्म, येन मानवरूपसौन्दर्यस्य स्पष्टतरा अनुभूतिः भवितुम् शक्नुयात्। निदर्शनार्थम्, यदि तस्य समक्षम् कापि वल्कलधारिणी तन्वी रमणी अस्ति चेत् सा अस्मिन् वेशे तस्य अतीव रमणीया प्रतीयते स्म (इयमधिकमनोज्ञा वल्कलेनापि तन्वी-अ० शा० १।१७), किन्तु सहैव तत्सदृशम् प्रकृतिरूपसौन्दर्यम् तस्य नेत्रेभ्यः तिरोहितम् निलीनम् वा भवितुम् न अशक्नोत्, फलतश्च सः तत् 'सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति' (अ० शा० १।१७) इति रूपे दृष्टवान् एव। अपरतः यदा सः प्रकृतेः रूपसौन्दर्यम् दृष्टवान्,

तदा सः मानवसौन्दर्यस्य अपि उपेक्षाम् कर्तुम् न अशक्नोत् । निदर्शनार्थम्, यदा तेन, यथा च पूर्वम् दृष्टम्[1], 'काशांशुका विकचपद्ममनोज्ञवक्त्रा' शरत् दृष्टा, तदा तस्य दृष्टौ श्वेतवसना 'रूपरम्या नववधूः' स्वत एव समागता अस्ति (ऋ० सं० ३।१)। इत्थम् सौन्दर्यस्य दृष्टचा कालिदासस्य कवित्वे प्रकृतौ मानवे च कोऽपि भेदः नास्ति, अपितु तत्र पूर्णम् अद्वैतम् अस्ति । प्रकृतिसौन्दर्यस्य मानवसौन्दर्यस्य च चित्राणि कालिदासस्य कृतिषु पदे-पदे विकीर्णानि वर्तन्ते येषु कानिचित् प्रकृतिसौन्दर्यचित्राणि पूर्वम् दृष्टानि[2]; मानवसौन्दर्यस्य चित्राणाम् अवलोकनार्थम् यदि कुतूहलम् स्यात् चेत् कुमारसंभवे पार्वत्याः स्मितम् (१।४४), तत्रैव तस्याः अङ्गसौष्ठवम् (५।२४), मेघदूते यक्षिण्याः स्वरूपम् (८४), रघुवंशे इन्दुमत्याः स्वरूपम् (३।११) च इत्यादीनि द्रष्टुम् शक्यन्ते । यदि एतेन अपि तृप्तिः न स्यात् चेत् अभिज्ञानशाकुन्तलम् सेव्यताम् ।

'अभिज्ञानशाकुन्तले' एतादृश्याः सुन्दर्याः नायिकायाः–शकुन्तलायाः–दर्शनम् भवति या स्वापूर्वसौन्दर्यहेतोः विधातुः अपरा अर्थात् सर्वसाधारण-विलक्षणा एव 'स्त्रीरत्नसृष्टिः' प्रतिभाति (२।६)। सा स्वाभाविकरूपेण एव इयती मधुरा महोहरा च अस्ति यत् साधारणम् वल्कलम् अपि दधती सा 'अधिकमनोज्ञा' अस्ति (१।१५)। तस्याः अधरम् 'अल्किष्टबालतरुपल्लवलोभनीयम्' अस्ति (६।२०)। तस्याः 'कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम्' अस्ति (१।१८)। तस्याः अनवद्यरूपेण सुन्दरम् रूपम् सौन्दर्यरसिकैः कस्मिन् रूपे अनुभूयते, इति अनेन पद्येन ज्ञातुम् शक्यते यत्—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै—
रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः । (२।१०)

कालिदासस्य अनुसारेण बाह्यसौन्दर्यस्य आदर्शः तस्य सर्वासु दशासु रमणीयत्वम् अस्ति—'अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम्' (अ० शा० ६।५)। तस्य रूपसौन्दर्यस्य अयम् अपि आदर्शः अस्ति यत् तेन गुणविहीनेन न सता भावसौन्दर्यचरित्रसौन्दर्याभ्याम् युक्तेन भाव्यम् (न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति—अ० शा० ४।१)। अस्मात् एव हेतोः इदम् अपि मन्यते यत् रूपसौन्दर्यम् पापम् कामुकताम् वा प्रति न नयति, यतो हि तस्मिन् शीलसौन्दर्यम् अपि भवति—

---

१—पृ० २०७ ।

२—'कालिदासस्य प्रकृतिचित्रणम्' इति शीर्षके निबन्धे ।

'यदुच्यते पार्वति ! पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतः ॥
(कु० सं० ५।३६) ।

४—**प्रेमानुभूतिः**—कालिदासस्य प्रेमानुभूतिविषये सर्वप्रमुखा वार्त्ता इयम् अस्ति यत् तेन स्वकृतिषु सर्वत्र मर्यादितम् दाम्पत्यप्रेमाणम् प्रति एव स्वनिष्ठा प्रदर्शिता, अमर्यादितम् अवैधम् वा प्रेमाणम् प्रति नहि (अनार्यः परदारव्यवहारः—अ० शा० ७।२०) । यद्यपि प्रारम्भे कालिदासस्य प्रेमविषयकः आदर्शः, यथा च तस्य ऋतुसंहारादिकानाम् प्रारम्भिकीनाम् कृतीनाम् दर्शनेन स्पष्टम् अस्ति, अतीव साधारणः-ऐन्द्रियिकः वासनात्मकः वा–दृष्टिगोचरः भवति, किन्तु क्रमशः तत्र विकासः भवन् वर्तते स्म, येन अन्ते तेन, यथा च अभिज्ञानशाकुन्तलरघुवंशयोः दर्शनेन स्पष्टम् अस्ति, वास्तविकम् उदात्तम् आध्यात्मिकम् च स्वरूपम् परिगृहीतम् अस्ति ।

ऋतुसंहारे प्रेम्णः स्पष्टतः वासनात्मकम् एव स्वरूपम् उपलभ्यते । मालविकाग्निमित्रे तस्य इयान् विकासः जातः अस्ति यत् सः शरीरात् उपरि उत्थाय हृदयभूमिम् स्पृशन् वर्तते । अयम् विकासः विक्रमोर्वशीये इयतः अपि अधिकतराम् प्रगतिम् करोति । अत्र इदम् प्रकटितम् अस्ति यत् यथा द्रवीभूतेन लोहेन द्रवीभूतः लोहः समीचीनतया संघटितुम् शक्नोति, तथैव हृदयद्वयम् तदा एव एकरसरूपेण मिलितुम् शक्नोति यदा तत् द्रुतम् स्यात् (तप्तेन तप्तमयसा घटनाय योग्यम्—वि० ३) । कुमारसंभवे यद्यपि पूर्वम् शारीरिकसौन्दर्यजनितस्य आकर्षणस्य रूपे प्रेमा अभिव्यक्तः, किन्तु अत्र फलितार्थः अयम् एव प्राप्यते यत् बाह्यसौन्दर्यहेतुकात् प्रेम्णः शीलसौन्दर्यहेतुकः उदात्तः आध्यात्मिकः वा प्रेमा उच्चतरः श्रेयान् च अस्ति । अत्र स्वकीयेन बाह्यसौन्दर्येण शिवम् आकृष्टम् कर्तुम् असफला सती पार्वती 'निनिन्द रूपं हृदयेन पार्वती' इति प्रकारेण स्वरूपम् निन्दन्ती पश्चात् तपः तप्त्वा स्वशीलसौन्दर्येण शिवम् वशे कृत्वा तम् इदम् कथयितुम् विवशम् करोति यत्–'अद्य प्रभृत्यवनताङ्गि तवास्मि दासः क्रीतस्तपोभिरिति' (५।८६) । अस्मिन् काव्ये पार्वतीशिवयोः संयोगावस्थस्य प्रेम्णः अतीव सुन्दरम् वर्णनम् अस्ति । निदर्शनार्थम् एकम् दृश्यम् द्रष्टुम् शक्यते—

व्याहृता प्रतिवचो न सन्दधे गन्तुमैच्छदवलम्बितांशुका ।
सेवते स्म शयने पराङ्मुखी सा तथापि रतये पिनाकिनः ॥ (८।२)

मेघदूते तु शृङ्गारस्य प्रेमरसस्य वा धारा अबाधरूपेण प्रवाहिता वर्तते । अत्र प्रेम्णः सः आदर्शः यदनुसारेण प्रेमी 'तत्सुखसुखित्वम्'[1] इत्यनुसारेण प्रियस्य सुखे सुखी भवति, प्रारम्भे एव स्पष्टः अस्ति । अत एव

---

१—नारदभक्तिसूत्रम् ।

यक्षः स्वार्थेन नहि, अपि तु दयिताजीवनालम्बनार्थम् तत्समीपे सन्देशम् प्रेषयति। इत्थम् यक्षः आदर्शप्रेमी अस्ति, किन्तु सहैव सः पत्नीविषयकेण कामेन आर्त्तः अपि अस्ति यद्वशात् सः चेतनाचेतनेषु अपि भेदम् कर्तुम् अशक्तः अस्ति (कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु—मे० ५)। फलतः मेघदूते कामः उदात्तः प्रेमा च, इत्युभयोः अपि स्थितिः प्राप्यते। कामार्त्तत्वात् यक्षस्य दृष्टौ यद्यपि शृङ्गारस्य अतिरञ्जितानि चित्राणि अपि आयान्ति, किन्तु वस्तुस्थितिः इयम् अस्ति यत् वियोगावस्थायाम् तस्य प्रेमा काञ्चनवत् उज्ज्वलः निर्मलश्च जातः अस्ति, अत एव च तस्य प्रेम्णि एतादृशी दशा अस्ति यत्—

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो—<br>
लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु।<br>
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां<br>
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ (मे० १०८)

इत्थम् मेघदूते प्रेमा इयान् निर्हेतुकः जातः अस्ति यत् तस्य इदानीम् स्वाधाराय न रूपस्य अपेक्षा अस्ति, न च शीलस्य। इत्थम् अत्र प्रेम्णः विकासे कुमारसंभवापेक्षया प्रगतिः एव जाता अस्ति।

अभिज्ञानशाकुन्तले प्रारम्भे रूपसौन्दर्यजनिता एव वासना अस्ति, यस्याश्च अभिव्यक्तिः 'अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसोऽस्य' (अ० शा० ३।२१) इत्यादिषु उद्गारेषु वर्तते। पश्चात् दुर्वाससः शापात् हेतोः दुष्यन्तस्य शकुन्तलायाश्च दीर्घकालीनस्य वियोगस्य परिस्थितेः उत्पन्नत्वात् तस्याम् अवस्थायाम् वासनारेणौ क्षालितायाम् निरस्तायाम् वा सत्याम् प्रेम्णः यत् स्वरूपम् अभिव्यज्यते तत् निर्मलम् सत् अतीव उज्ज्वलम्, भास्वरम्, उदात्तम्, आध्यात्मिकम् च अस्ति। तदा तु दुष्यन्तः रूपसौन्दर्यम् उपेक्ष्य शकुन्तलायाः संस्कारविहीनस्य अश्रुपूरितस्य मुखस्य दर्शनेन एव तृप्तः अस्ति—

'वाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया।<br>
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥ (अ० शा०७।२३)

इत्थम् अभिज्ञानशाकुन्तले इदं प्रदर्श्य यत् वासनारेणौ निरस्तायाम् यः निर्हेतुकः प्रेमा भवतिः स एव स्थायी मङ्गलमयश्च भवति, प्रेम्णः विषये पूर्णतः उच्चतरा भावना व्यक्ता अस्ति।

रघुवंशे प्रेम्णः विकासस्य चरमोत्कर्षः दृश्यते। अत्र प्रेम्णः स्वरूपम् अतीव संयतम् उदात्तम् च अस्ति। अत्र प्रेमिका प्रेमिकामात्रम् नास्ति, अपि तु गृहिणी, सचिवः, सखी, प्रियशिष्या च अस्ति—'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ' (८।६६)। अत्र संयोगावस्थः

प्रेमा स्वकार्येण श्रान्ते पत्यौ पत्न्याः उत्सङ्गे शिरः निधाय सुप्ते सति तस्य पत्नीकृतेन सानुरागेण लालनेन एव चरितार्थः जायते—

'अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तः ।। (१३।३५)

अत्र वियोगावस्थः प्रेमा इयान् तीव्रः संपद्यते यत् सः करुणस्य स्पर्शम् कर्तुम् आरभते, किन्तु पुनरपि प्रेमी स्वकर्त्तव्यम् न विस्मरति। सीतावियोगकाले रामः परित्यक्तायाः सीतायाः समाचारम् श्रुत्वा करुणा-विह्वलः अपि सन् स्वकर्त्तव्यपालने रतः तिष्ठति—

बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ।।
निगृह्य शोकं स्वयमेव धीमान् वर्णाश्रमावेक्षणजागरूकः ।।

(१४।८४-८५)

इत्थम् रघुवंशे जीवनोचिताय स्वाभाविकाय प्रेम्णे एव महत्त्वम् दत्तम् अस्ति, वासनात्मकाय उद्दामाय प्रेम्णे नहि ।

उक्तप्रकारेण कालिदासस्य कृतिषु प्रेम्णः उत्तरोत्तरम् विकसितम् स्वरूपम् जातम् अस्ति, अथ च अस्याम् विकासपरम्परायाम् प्रेम्णः विविध-स्वरूपाणाम् सफला व्यञ्जना जाता अस्ति ।

**५—अन्यरसाभिव्यक्तिः**—यद्यपि उक्तप्रकारेण कालिदासस्य कृतिषु मुख्यतया शृङ्गारस्य अभिव्यक्तिः जाता अस्ति, किन्तु पुनरपि यतः तेन स्वस्य महाकवित्वात् जीवनस्य विविधाः परिस्थितयः चित्रिताः सन्ति. अतः स्वत एव तस्य कृतिषु सर्वेषाम् रसानाम् अभिव्यक्तेः अवसराः उपस्थिताः, यत्र च तेन तेषाम् सफला व्यञ्जना अपि कृता अस्ति । यतः कालिदासः मुख्यतया कोमलभावनानाम् कविः वर्तते, अतः शृङ्गारात् अनन्तरम् करुणरसाभिव्य-ञ्जनायाम् अपि तस्य चित्तवृत्तिः अधिकम् रता जाता, अथ च कदाचित् तस्य वियोगशृङ्गार एव करुणम् स्पृष्टवान् । करुणरसस्य व्यञ्जनायाः प्रमुखानि स्थलानि कुमारसंभवस्य चतुर्थः सर्गः, अभिज्ञानशाकुन्तलस्य चतुर्थः अङ्कः, रघुवंशस्य च अष्टमः सर्गः, इत्येतानि सन्ति यत्र क्रमशः 'रतिविलापः, शकुन्तलाप्रस्थानम्, अजविलापश्च वर्तते । वीररसाभिव्यक्तिः मुख्यतः रघु-वंशस्य तृतीये सर्गे इन्द्रेण रघोः युद्धस्य अवसरे भवति । एवमेव अन्येषाम् विभिन्नानाम् रसानाम् अपि अभिव्यक्तिः कालिदासस्य कृतीनाम् विभिन्नेषु स्थलेषु क्रियमाणा वर्तते । तस्य कृतिषु प्रायः सर्वेषाम् अपि रसानाम् परिपाकः जातः अस्ति ।

वस्तुतः कालिदासः रसव्यञ्जनायाः दृष्ट्या अतीव उच्चकोटेः कविः अस्ति. तस्य कवित्वस्य अनुभूतिपक्षश्च अतीव प्रबलः अस्ति ।

**(६) अभिव्यञ्जना-शैली**—कालिदासस्य कवित्वस्य अभिव्यक्तिपक्षः

अपि तथैव प्रबलः अस्ति, यथा च तस्य अनुभूतिपक्षः। कालिदासस्य अभिव्यञ्जनाशैल्याः कतिपयाः प्रमुखाः विशेषताः निम्नाः सन्ति—

(अ) **मौलिकता**—कालिदासस्य अभिव्यञ्जनाशैल्याः सर्वप्रमुखा विशेषता मौलिकता अस्ति। तस्य भावानाम् अभिव्यजनस्य शैली तु मौलिकी अस्ति एव, सहैव सः स्वप्रतिभया प्राचीनाय कथावस्तुने अपि एतादृशम् अभिनवम् रूपम् दत्तवान् अस्ति यत् तत् सर्वथा मौलिकम् जातम् अस्ति। एवमेव प्राचीनानि पात्राणि अपि तस्य कृतिषु नवीनम् रूपम् धृत्वा अवतीर्णानि सन्ति; निदर्शनार्थम् यथा—दुष्यन्तः शकुन्तला च।

(अ) **संक्षिप्तिः**—संक्षिप्तिः अपि कालिदासस्य अभिव्यञ्जनाशैल्या प्रमुखा विशेषता अस्ति। तस्मै कस्य अपि विषयस्य विस्तृतस्य वर्णनस्य अपेक्षया उपयुक्तरूपेण चितेषु शब्देषु संक्षिप्तम् वर्णनम् एव अधिकम् रोचते। तस्य शैल्याः अस्याः विशेषतायाः दर्शनम् तस्य कृतिषु प्रायः सर्वत्र एव उपलभ्यते। फलतः कस्य अपि विशिष्टस्य उदाहरणस्य आवश्यकता नास्ति।

(इ) **व्यञ्जना**—इमाम् विशेषताम् आश्रित्य एव कालिदासः संक्षिप्तेषु शब्देष एव गम्भीरान् भावान् विस्तृतानि च चित्राणि अभिव्यञ्जन् उक्तायाम् संक्षिप्तौ सफलः अभवत्। कवितायाः प्राणभूता व्यञ्जना यावत्याम् प्रचुरमात्रायाम् अस्य महाकवेः कृतिषु उपलभ्यते, तावत्याम् संभवत एव कुत्रचित् अन्यत्र उपलब्धुम् शक्यते। अत्र विभिन्नानि उदाहरणानि प्रदर्शयितुम् स्थानम् नास्ति, पुनरपि एकेन एव शब्देन कालिदासस्य व्यञ्जनायाः चमत्कारस्य दर्शनाय सीताकथिते 'वाच्यस्त्वया मद्वचनात्स राजा' (रघु० १४।६१) इत्यादिरूपे श्लोके प्रयुक्तः 'राजा' इति शब्दस्तु द्रष्टुम् एव शक्यते, यः परित्यक्तायाः सीतायाः इमम् मार्मिकम् भावम् अभिव्यनक्ति यत् 'रामस्तु केवलम् राजा अस्ति, प्रतिरूपे तस्य ताम् प्रति यत् कर्त्तव्यम् अस्ति तत् तु तेन नितान्तम् विस्मृतम् एव।'

(ई) **वैदर्भी रीतिः**—कालिदासस्य शैल्याः चतुर्थी प्रमुखा विशेषता 'वैदर्भीरीतिः' अस्ति—'वैदर्भीरीतिसंदर्भे कालिदासो विशिष्यते'। वैदर्भीरीतिश्च 'माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका। अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते।' इतिस्वरूपा मन्यते। इत्थम् च तस्य कृतिषु माधुर्यव्यञ्जकैः वर्णैः संघटिता ललिता रचना अस्ति, अथ च तत्र समासप्राचुर्यम् दीर्घसमासत्वम् वा नास्ति। फलतः तस्य रचनाः प्रसादगुणयुक्ताः, सरलाः, सुबोधाः, स्पष्टाः, मधुराः, ललिताश्च सन्ति। एतेन तस्य भाषायाः स्वरूपम् अपि स्पष्टम् जायते यत् सा अपि सरला सुबोधा च अस्ति। वस्तुतः कालिदासस्य कृतिषु क्लिष्टता कृत्रिमता वा कुत्र अपि नास्ति। अस्याः विशेषतायाः अपि कस्यचित् विशिष्टस्य उदाहरणस्य आवश्यकता नास्ति, यतो

हि एषा तस्य कृतिषु सर्वत्र एव समुपलभ्यते, फलतः सा तत्र कुत्र अपि द्रष्टुम् शक्यते ।

एवमेव सम्वादानाम् नाटकीयत्वम्, अलङ्कारणाम् स्वाभाविकत्वम्, छन्दसाम् स्वरमाधुर्यम् च इत्यादयः अन्याः अपि काश्चन कालिदासस्य अभिव्यञ्जनाशैल्याः विशेषताः सन्ति ।

अस्तु ! एवम् अनुभूतिपक्षः अभिव्यक्तिपक्षश्च इति पक्षद्वयस्य अपि प्राबल्येन कालिदासस्य कवित्वम् एतावत् उत्कृष्टम् जातम् अस्ति यत् प्राचीनैः अर्वाचीनैश्च समालोचकैः समानरूपेण तस्य मुक्तकण्ठेन प्रशंसा कृता अस्ति । इदम् उचितम् एव अस्ति, यतो हि—

'निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ।।'

## ४८

# 'उपमा कालिदासस्य'

**१—प्रास्ताविकम्**—महाकवेः कालिदासस्य काव्यशैल्याः अनेकासु विभिन्नासु विशेषतासु इयमपि एका प्रमुखा विशेषता अस्ति यत् तस्य कृतिषु अलङ्काराणाम् प्रयोगः स्वाभाविकरूपेण एव कृतः वर्तते, कृत्रिमरूपेण केवलम् अलङ्काराणाम् प्रदर्शनाय तेषाम् प्रयोगः तत्र नास्ति। फलतः तस्य अलङ्कारयोजना अतीव प्रभावोत्पादिका जाता अस्ति। शब्दालंकारेषु 'अनुप्रासः' तस्य प्रियः अलङ्कारः अस्ति, किन्तु अयम् क्लिष्टकल्पनया कृत्रिमरूपेण न आनीतः अस्ति, अपि तु स्वाभाविकरूपेण स्वत एव समागतः अस्ति। उदाहरणार्थम्, 'प्रजानामधिपः प्रभाते', 'यशोधनो धेनुम्', 'दयितां दयालुः', 'जुगोप गोरूपधराम्', 'सम्राट् समाराधनतत्परः'—इत्यादिरूपे स्वाभाविकतया समागतानाम् अनुप्रासानाम् शुभ्रा छटा द्रष्टुम् शक्यते।

अर्थालङ्कारेषु 'उपमा' कालिदासस्य इयान् प्रियः अलङ्कारः अस्ति यत् तस्य विषये इयम् प्रसिद्धिः एव जाता यत्—'उपमा कालिदासस्य'। वस्तुतः अस्य अलङ्कारस्य प्रयोगे तस्य उपमानम् दुर्लभम् अस्ति।

**२—उपमासु परिगृहीतानि उपमानानि**—उपमालङ्कारस्य प्रयोगम् कुर्वता कालिदासेन यानि उपमानानि विन्यस्तानि, तानि उपमेयस्य अत्यन्तम् सदृशानि अनुरूपाणि वा, अथ च अपूर्वाणि मौलिकानि वा भूत्वा अतीव उपयुक्तानि, रमणीयानि, चमत्कारकाणि च सन्ति। फलतश्च तानि अतीव प्रभावोत्पादकरूपे प्रस्तुतस्य उपमेयस्य वा स्वरूपम् स्पष्टतया अनुभावयितुम् सहायकानि भवितुम् पारयन्ति। कालिदासप्रयुक्ते उपमालङ्कारे परिगृहीतानि उपमानानि जगतः व्यापकक्षेत्रात् गृहीतानि सन्ति।

**३—उपमानाम् संक्षिप्तम् दर्शनम्**—कालिदासस्य उपमानाम् पूर्णा छटा तु तस्य ग्रन्थानाम् अनुशीलनेन एव प्राप्तुम् शक्यते, किन्तु पुनरपि तासाम् एकम् आभासनम् संक्षिप्तम् दर्शनम् वा कतिपयैः निम्नैः उदाहरणैः प्राप्तुम् शक्यते—

कुमारसंभवे पार्वत्याः सुन्दरम् अधरम् दृष्ट्वा गम्भीरः अपि शिवः तथैव विचलितः अभवत्, यथा चन्द्रोदयारम्भे समुद्रः विचलितः भवति—'हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयायरम्भ इवाम्बुराशिः' (३।६७)। तत्रैव शिवम् दृष्ट्वा कम्पमाना पार्वती उद्धृतम् स्वम् पदम् उद्धरन्ती एव अस्थात्, अथ च पर्वतावरुद्धा नदी इव न स्थिरा एव भवितुम् अशक्नोत्, न च चलितुम् एव—

'तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ॥
(५।८५)

अत्र कियन्तीम् उपयुक्ताम् उपमाम् आश्रित्य कविना पार्वत्याः लज्जासौकुमार्यादयः भावाः व्यक्ताः सन्ति !

मेघदूते चञ्चलतरङ्गवत्याः वेत्रवत्याः जलम् भ्रूभङ्गयुक्तम् मुखम् इव अस्ति—'सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्याः' (२४)। इयत् एव नहि, अत्र तु क्षिप्रातटे प्रवहन् अङ्गानुकूलः पवनः प्रार्थनाचाटुकारः प्रियतम इव रतिश्रान्तानाम् स्त्रीणाम् रतिश्रमम् अपहरति—"यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः क्षिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः।" (३१)। कियती रमणीया उपयुक्ता च उपमा अस्ति !

अभिज्ञानशाकुन्तले मदनपीडिता शकुन्तला पत्राणाम् शोषणे जाते वायुना स्पृष्टा माधवीलता इव वर्तते—'पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी।' (३।७)। अत्र उपमया मदनपीडाजन्यम् शकुन्तलाकार्श्यादिकम् स्पष्टतः अनुभवगम्यम् जायते। तपस्विनाम् मध्ये शकुन्तला कीदृशी दृश्यते, इत्यपि दृश्यताम्—'मध्ये तपोधनानाम् किसलयमिव पाण्डुपत्राणाम्।' (५।१२)। अत्र एकतः तपस्विनाम् जीर्णशीर्णत्वम्, अथ च सहैव अपरतः शकुन्तलायाः रूपस्य अभिनवत्वम्, कोमलत्वम्, रमणीयत्वम् च कियता संक्षेपेण उपमाश्रयेण अभिव्यक्तम् वर्तते !

रघुवंशस्य प्रारम्भ एव 'वागर्थाविव संपृक्तौ' (१) इत्यादिरूपे उपमालङ्कारेण सह भवति। अत्र पार्वतीम् शिवम् च क्रमशः वाणीम् अर्थम् च इव परस्परसंपृक्तौ कथयित्वा अनयोः अविच्छेद्यसंपर्कस्य घनिष्ठता कियता स्पष्टरूपेण अभिव्यक्ता अस्ति ! अत्रैव यज्ञेन विशुद्धात्मानम्, किन्तु सन्तानाभावेन खिन्नम् दिलीपम् लोकालोकपर्वतम् इव प्रकाशवन्तम् अप्रकाशवन्तम् च कथयित्वा तस्य प्रसादम् खेदम् च कियता मौलिकेन प्रकारेण कविः अभिव्यक्तवान्—'सोहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः। प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः।' (१।६८) !

अत्र सुदक्षिणा नन्दिन्याः गोः मार्गम् तथैव अनुगच्छति यथा स्मृतिः श्रुतेः प्रतिपाद्यम् अनुसरति—'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्।' (२।२)। अत्र

मूर्तस्य प्रस्तुतस्य आध्यात्मिकेन वाङ्मयेन उपमानेन उपमा दत्ता अस्ति। अनेन एव प्रकारेण 'बभौ च सा तेन सतां मतेन श्रद्धेव साक्षाद् विधिनोपपन्ना।' (२।१६) इत्यत्र मूर्तायाः दिलीपयुक्तायाः नन्दिन्याः उपमा आध्यात्मिक्या अमूर्तया च विधियुक्तया श्रद्धया दत्ता अस्ति।

कालिदासेन शास्त्रीयाणि अपि सुन्दराणि उपमानानि उपयुक्तरूपेण स्वकीयासु उपमासु प्रयुक्तानि सन्ति, यथा—सरयूनद्याः उद्गमस्थलम् ब्राह्मम् सरः बुद्धेः सांख्याभिमतम् मूलम् अव्यक्तम् अर्थात् मूलप्रकृतिः इव अस्ति—'ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति।' (१३।५०)।

कालिदासप्रयुक्तासु उपमासु एका अतीव प्रसिद्धा अस्ति। सा च इयती उपयुक्ता अस्ति यत् सा कालिदासस्य एकम् विशेषणम् विरुदम् वा इव एव यदा-कदा बुधैः प्रयुज्यते। तस्याः स्वरूपम् एतादृशम् अस्ति यत् स्वकीये स्वयम्वरे उपस्थितान् राज्ञः क्रमशः पश्यन्ती पतिवरा इन्दुमती एकम् राजानम् दृष्ट्वा तम् विहाय अन्यम् राजानम् प्रति अग्रतः सरति; अस्याम् प्रक्रियायाम् सा यम् राजानम् विहाय अग्रतः गच्छति सः तथैव विवर्णः कान्तिहीनः वा भवति, यथा रात्रौ राजमार्गेण सञ्चरन्त्या दीपशिखया पृष्ठतः त्यक्तम् विहीनम् वा भवनम् अन्धकारग्रस्तम् जायते—

'सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः॥'
(रघु० ६।६७)

कियती यथार्था सहैव च ललिता उपमा अस्ति! एतदतिरिक्तम्, अनया उपमया इदम् तु अकथनेन अपि स्वत एव व्यज्यते यत् यथा दीपशिखायाः सञ्चरणक्रियया यत्र एकतः तया विहीनम् भवनम् अन्धकारग्रस्तम् भवति, तत्र सहैव अपरतः तदग्रवर्ति भवनम् दीपशिखासांनिध्यात् क्षणम् कान्तियुक्तम् भवति, तथैव यत्र एकतः इन्दुमत्या पृष्ठतः त्यक्तः राजा कान्तिहीनः भवति, तत्र सहैव अपरतः तदग्रवर्ती राजा इन्दुमतीसांनिध्यात् स्ववरणाशाहेतोः क्षणम् कान्तियुक्तः भवति। इत्थम् इयम् उपमा वस्तुतः अतीव उपयुक्ता रमणीया च सती व्यञ्जिका अपि वर्तते। एतदेव कारणम् यत् केचन बुधाः अस्याः उपमायाः आधारेण कालिदासम् 'दीपशिखा-कालिदासः' इत्यपि कथयित्वा अत्र प्रयुक्तम् 'दीपशिखा' इति उपमानम् तस्य विरुदम् इव प्रयुञ्जते। कालिदासीयानाम् उपमानाम् उपरि प्रस्तुतम् संक्षिप्तम् विवरणम् निदर्शनमात्रम् अस्ति। वस्तुतः तस्य कृतिषु एव परस्पराधिक-सौन्दर्ययुक्तानाम् विविधानाम् उपमानाम् छटा दर्शनीया अस्ति यस्याश्च दर्शनेन स्पष्टम् भविष्यति यत् तस्य उपमाः अतीव यथार्थाः, प्रस्तुतानुरूपाः, प्रसङ्गानुकूलाश्च सत्यः अतीव रमणीयाः सन्ति।

४—सादृश्यमूलकाः अलङ्काराः—यदि कालिदासस्य विषये कथितायाम् 'उपमा कालिदासस्य' इति प्रसिद्धायाम् उक्तौ प्रयुक्तस्य 'उपमा' शब्दस्य संकुचितम् अर्थम् अर्थात् 'केवलम् उपमालंकारः' इत्येव अर्थम् न गृहीत्वा व्यापकः अर्थः अर्थात् 'सादृश्यम्' इति अर्थः गृह्येत चेत् अनया उक्त्या उपमासमेतानाम् सर्वेषाम् सादृश्यमूलकानाम् अलङ्काराणाम् परिग्रहणम् जायते। अयम् व्यापकः अर्थः अस्मात् कारणात् उचितः अपि प्रतीयते यत् सर्वेषु सादृश्यमूलकेषु अलंकारेषु उपमायाम् इव प्रस्तुतसदृशस्य अप्रस्तुतस्य विन्यासः विधानम् वा क्रियते, कामम् तत् कस्मिन् अपि रूपे क्रियेत। कालिदासस्य च विषये तु अयम् अर्थः अतोऽपि उचितः अस्ति यत् तस्य उपमासु इव तस्य अन्येषु उत्प्रेक्षादिषु सादृश्यमूलकेषु अलंकारेषु अपि विन्यस्तानि अप्रस्तुतानि जगतः व्यापकात् क्षेत्रात् परिगृहीतानि सन्ति, अथ च तानि अतीव यथातथे चमत्कारके, प्रभावोत्पादके च रूपे प्रस्तुतस्य स्वरूपम् स्पष्टीकर्तुम् सहायकानि जातानि, यतो हि तानि प्रस्तुतस्य अत्यन्तम् सदृशानि भूत्वा रमणीयानि सन्ति।

रघुवंशस्य त्रयोदशे सर्गे (५४-५७) गङ्गायमुनासंगमस्य पूर्वप्रदर्शितम्[1] वर्णनम् परस्पराधिकसौन्दर्ययुक्तानाम् उत्प्रेक्षाणाम् उत्कृष्टम् निदर्शनम् अस्ति। अत्रत्याः उत्प्रेक्षाः उपमायाः इयत्संनिकटाः सन्ति यत् कैश्चन तु ताः उपमा एव मन्यन्ते। ललितानाम् उत्प्रेक्षाणाम् छटा मेघदूते अपि दर्शनीया अस्ति। निदर्शनार्थम्, 'वप्रक्रीडापरिणतगजप्रेक्षणीयम्' (२), 'रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात्' (१५), 'मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः।' (१८), 'शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्।' (३०) इत्यादीनि वर्णनानि प्रस्तोतुम् शक्यन्ते। रूपकस्य छटा ऋतुसंहारस्य पूर्वप्रस्तुते[2] शरद्वर्णने, कुमारसंभवस्य च 'पर्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः। लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि' (३।३९) इत्यादिकेषु वर्णनेषु, अन्येषाम् तद्ग्रन्थानाम् विभिन्नेषु वर्णनेषु च दर्शनीया अस्ति। एवमेव 'दिनेषु गच्छत्सु नितान्तपीवरं तदीयमानीलमुखं स्तनद्वयम्। तिरश्चकार भ्रमराभिलीनयोः सुजातयोः पङ्कजकोशयोः श्रियम्'। (रघु० ३।८) इत्यादिषु व्यतिरेकस्य, 'पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम्। ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य।' (कु० सं० १।४४) इत्यादिषु सादृश्यमूलायाः अतिशयोक्तेः, 'इदं किलाव्याजमनोहरं वपुस्तपः क्षमं साधयितुं य इच्छति। ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति।'

---

१—पृ० २०६।

२—पृ० २०७।

(अ० शा० १।१६), इत्यादिषु निदर्शनायाः, 'कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम्। नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः।' (रघु० ६।२२) इत्यादिषु दृष्टान्तस्य, 'सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति। इयमधिकमनोज्ञा वल्कलेनापि तन्वी', इत्यादिषु प्रतिवस्तूपमायाः, 'मानुषीषु कथं वा स्यादस्य रूपस्य संभवः। न प्रभातरलं ज्योतिरुदेति वसुधातलात्।' (अ० शा० १।३२) इत्यादिषु च अप्रस्तुतप्रशंसायाः छटा दर्शनीया अस्ति।

कालिदासेन उपमायाः अन्येषाम् च तदतिरिक्तानाम् सादृश्यमूलकानाम् अलंकाराणाम् एव प्राचुर्येण प्रयोगः कृतः अस्ति, अथ च अयम् प्रयोगः तेन अतीव मौलिकरूपेण स्वाभाविकरूपेण च कृतः अस्तिः। फलतः 'उपमा कालिदासस्य' इत्युक्तौ प्रयुक्तस्य 'उपमा' शब्दस्य, कामम् संकुचिते अर्थे प्रयोगम् मत्वा तेन केवलम् उपमालंकारः गृह्येत, अथ च कामम् तस्य व्यापके अर्थे प्रयोगम् मत्वा तेन उपमासमेताः सर्वेऽपि सादृश्यमूलकाः अलंकाराः गृह्येरन्, उभयथा अपि अस्याः उक्तेः तथ्यानुकूलत्वम् निःसन्देहरूपेण वर्तते। उपमायाः क्षेत्रे कालिदासः वस्तुतः अद्वितीयः अस्ति।

## ४९

## 'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला'

१—कलासीमा काव्यम्—यद्यपि कतिपये विद्वांसः काव्यम् कलानाम् अन्तः न मन्यन्ते, किन्तु तेषाम् बहुमतम् तत् ललितकलानाम् एव अन्तः मन्यते। ललितकलाः मुख्यतः पञ्च मन्यन्ते—वास्तुकला, मूर्तिकला, चित्रकला, संगीतकला, काव्यकला च इति। एताः कलाः स्वरमणीयत्वहेतुना ललिताः भवन्ति। वस्तुतः एतासाम् जीवितम् एव रमणीयत्वम् भवति। एतासाम् परमम् उद्देश्यम् एव इदम् अस्ति यत् एताः कस्याचित् विशिष्टायाम् कृतौ स्वस्वरूपस्य अभिव्यक्त्या तत्र रमणीयतायाः अभिव्यक्तिम् सृष्टिम् वा कुर्वन्ति। एतासु पञ्चसु ललितासु कलासु यस्याम् उपादानाम् यावती न्यूनता भवति, तावती एव सा उत्कृष्टा रमणीया च भवति। एतदेव कारणम् यत् काव्यकला एतासु उत्कृष्टतमा रमणीयतमा च अस्ति। तत्र अन्यासाम् सर्वासाम् कलानाम् अपेक्षया केवलम् शब्दानाम् रूपे न्यूनतमस्य उपादानस्य अपेक्षा भवति। एतदपेक्षया संगीतकला अवरा भवति, यतो हि तत्र शब्देभ्यः अधिकतररूपेण स्वरनादादीनाम् तेषाम् आरोहावरोहयोश्च अपि आवश्यकता भवति। चित्रकला एतस्याः अपि अवरा अस्ति, यतो हि तत्र यत्किञ्चित्परिमाणकस्य समतलस्य स्थूलस्य आधारस्य, यस्य च अपेक्षा उक्ते कलाद्वये न भवति, वर्णादीनाम् च आवश्यकता भवति। मूर्तिकलायाम् चित्रकलायाः अपि अपेक्षया स्थूलतरस्य उपदानस्य अपेक्षा भवति। चित्रकलायाम् केवलम् समतलः आधारः अपेक्षितः भवति, तस्य उच्चत्वादिकम् अपेक्षितम् नास्ति, किन्तु मूर्तिकलायाम् आधारभूतस्य प्रस्तरादिकस्य उपादानस्य उच्चत्वादिकम् अपि अपेक्षितम् भवति। फलतः एषा चित्रकलायाः

अपि अवरा अस्ति। अस्याश्च वास्तुकला अवरा अस्ति, यतो हि मूर्तिकलायाम् यत् उपादानम् गृह्यते तस्य अंशपरिहारेण मूर्तिरूपे अस्याः अभिव्यक्तिः भवति, किन्तु वास्तुकलायाः अभिव्यक्तिस्तु भवनादिरूपे सर्वम् अपि उपादानम् प्रयुज्य कर्तुम् शक्यते।

अस्तु! एवम् काव्यकला एव सर्वासु कलासु सूक्ष्मतमोपादनकत्वेन उत्कृष्टतमा रमणीयतमा च अस्ति। इयम् शब्दद्वारा एव अभिव्यक्तीभूय सहृदयानाम् हृदये स्वकीयायाः रयणीयतायाः अनुभूतिम् कारयति। सहैव एषा अन्यासाम् कलानाम् अपि अभिव्यञ्जनम् शब्दद्वारा करोति, यतो हि सा विविधानाम् वास्तुकलादीनाम् कलानाम् विभिन्नानाम् कृतीनाम् स्वरूपम् शब्दद्वारा एव अनुभावयति। इत्थम् अत्र कश्चन सन्देहः नास्ति यत् कलासु काव्यकला सर्वोत्कृष्टत्वेन विराजते। अत एव इदम् कथ्यते यत्—'कलासीमा काव्यम्' इति।

२—काव्येषु नाटकं रम्यम्—यद्यपि आधुनिकम् समीक्षाशास्त्रम् नाटकम् काव्यात् पृथक् मत्वा भाववाङ्मयस्य ललितसाहित्यस्य वा एकाम् स्वतन्त्राम् विधाम् मन्यते, किन्तु प्राचीनम् भारतीयम् समीक्षाशस्त्रम् तत् 'दृश्यकाव्यस्य' रूपे काव्यस्य एव एकम् भेदम् रूपम् वा मन्यते। अस्य कारणम् इदम् प्रतीयते यत् तत्र आधुनिकम् समीक्षाशास्त्रम् नाटकस्य मुख्यतत्त्वेषु काव्यस्य मुख्यम् तत्त्वम्—रसम् भावम् वा—न मन्यते, तत्र प्राचीनम् भारतीयम् समीक्षाशास्त्रम् 'वस्तु नेता रसस्तेषां भेदकः' इत्यादिरूपे रसम् रूपकस्य, यस्य च नाटकम् एकः मुख्यः भेदः अस्ति, मुख्यम् तत्त्वम् मन्यते। अस्य समीक्षाशास्त्रस्य अनुसारेण रूपकम् रसविहीम् भवितुम् न शक्नोति, फलतश्च तत् काव्यस्य परिधेः वहिः गन्तुम् न शक्नोति, अत एव च तत्र पद्यानाम् अपि बाहुल्येन प्रयोगः भवति, यतो हि रसाभिव्यञ्जने पद्यम् गद्यापेक्षया अधिकतरम् सहायकम् भवति।

अस्तु! इत्थम् प्राचीनस्य भारतीयस्य समीक्षाशास्त्रस्य अनुसारेण नाटकम् काव्यस्य एव एका विधा अस्ति, अत एव च नाटकम् काव्यभेदेषु सिद्धवत् अन्यतमम् मत्वा 'काव्येषु नाटकं रम्यम्' इत्यादिप्रकारकाः उद्गाराः परम्परायाम् प्रकटिताः सन्ति।

यथा च अत्रैव पूर्वम् उक्तम्, कलात्मिका रमणीयता अन्यासाम् सर्वासाम् कलानाम् अपेक्षया काव्यकालायाम् सर्वोत्कृष्टत्वेन विराजते, यत्फलस्वरूपम् 'कलासीमा काव्यम्' इत्यादिकम् कथ्यते। किन्तु काव्यकलायाः अपि रमणीयताया चरमोत्कर्षः नाटके विराजते, फलतः 'कलासीमा काव्यम्' इत्यस्य चरितार्थता सर्वेषु अपि काव्यभेदेषु भवन्ती अपि नाटके सर्वोत्कृष्टतया भवति, यतो हि तत् सर्वेषु अपि काव्यभेदेषु रमणीयतमम् भवति।

यद्यपि काव्यम् रमणीयम् एव भवति, किन्तु तत्र अपि तस्य श्रव्य-रूपस्य अपेक्षया तस्य दृश्यरूपम् स्वभावत एव रमणीयतरम् भवति, यतो हि यत्र काव्यस्य श्रव्यरूपे रमणीयताहेतुभूतानि विभिन्नानि तत्त्वानि केवलम् श्रवणगोचराणि भवन्ति, येषाम् च स्पष्टचित्रात्मकरूपे अनुभवाय सहृदयैः श्रोतृभिः पाठकैः वा स्वद्वारा क्रियमाणे कल्पनाप्रयासे कष्टम् अनुभूयते, येन रमणीयतानुभूतौ अपि किञ्चित् न्यूनत्वम् भवति, तत्र काव्यस्य दृश्यरूपे रमणीयताहेतुभूतानाम् सर्वेषाम् अपि तत्त्वानाम् स्पष्टः दृष्टिगोचरत्वात् तत्र तादृशस्य कल्पनाप्रयासस्य अपेक्षा न भवति, फलतश्च तज्जन्यम् कष्टम् अपि सहृदयानाम् न भवति, येन तेषाम् रमणीयतायाः अनुभूतिः भूयोऽपि स्पष्ट-तररूपेण भवति। काव्यस्य रूपद्वये अपि अन्यासाम् विविधानाम् कलानाम्, वातावरणादिकस्य च, अथ च काव्योपादानानाम् विभावानुभावादीनाम् स्थितिः भवति, किन्तु यत्र तस्य श्रव्यरूपे एतत् सर्वम् श्रवणगोचरम् एव सत् श्रोतृभिः स्वकल्पनायाः भावनायाः वा अनुसारेण कल्प्यते भाव्यते वा, तत्र तस्य दृश्यरूपे एतत् सर्वम् रङ्गमञ्चे प्रत्यक्षत एव दृष्टिगोचरम् भवति, फलतः तत्र स्वभावत एव काव्यस्य रमणीयतायाः स्पष्टतरा अनुभूतिः भवति। एतदतिरिक्तम्, दृश्यकाव्ये श्रव्यकाव्यस्य वैशिष्ट्यम् तु भवति एव, सहैव तत्र तदतिरिक्तरूपेण स्वाभाविकतया कृतस्य वस्तुविन्यासकथोपकथना-दिकस्य अपि स्वकीयम् वैशिष्ट्यम् भवति यत् स्वभावत एव तत्र रमणीय-तायाः वृद्धिम् करोति।

अस्तु! इत्थम् रङ्गमञ्चस्य विविधकलात्मिका उपकरणसामग्री, वस्तुविन्यासादिकस्य कथोपकथनादिषु प्रयुक्तायाश्च भाषायाः स्वाभाविक-त्वम्, अथ च सहैव तत्र कवित्वस्य स्वाभाविकतया संतुलिततया वा मनोरम-रूपेण संनिविष्टत्वम्, इत्येतत् सर्वम् दृश्यकाव्यम् अतीव रमणीयम् सम्पाद-यति। दृश्यकाव्यस्य अपि विभिन्नेषु भेदेषु–विविधेषु रूपकेषु उपरूपकेषु च–नाटकम् सर्वाङ्गपूर्णम् भवति, अतः इदम् रमणीयतायाः दृष्ट्या स्वाभावत एव सर्वोत्कृष्टम् अस्ति। फलतः अस्य विषये यत् इदम् उक्तम् अस्ति यत् 'काव्येषु नाटकं रम्यम्' इति, तत् पूर्णत एव यथार्थम् प्रतीयते। वस्तुतः इदम् स्वकीयायाः विविधाया रमणीयतायाः हेतोः सर्वान् अपि विभिन्नरुचीन् जनान् स्वयम् प्रति आकृष्य तेषाम् मन विविधप्रकारैः रमयति, अत एव अस्य विषये महाकविना कालिदासेन इदम् सत्यम् एव उक्तम् यत्—

'देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषम्,
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते,
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधकम्॥
(मालविकाग्नि० १।४)

**३—तत्र रम्या शकुन्तला**—इदानीमेव पूर्वम् नाटकस्य परमरमणीयतायाः हेतुभूतम् यत् वैशिष्टचम् उक्तम्, तत् यदि यस्मिन् कस्मिम् अपि नाटके यथातथरूपेण वर्तमानम् स्यात् चेत् तत् एव नाटकम् स्वभावत एव परमरमणीयम् स्यात्। किन्तु यतः अस्य वैशिष्टचस्य यथातथरूपेण सम्पादनम् तु विरला एव कवयः कर्तुम् पारयन्ति, अतः सर्वासु नाटकीयकृतिषु उत्कृष्टम् नाटकीयम् रमणीयत्वम् उपस्थितम् भवितुम् न शक्नोति।[1] उत्कृष्टनाटकीयकलायाः उक्तेषु विरलेषु प्रभुषु वरिष्ठः महाकविः कालिदासः पूर्वम् मालविकाग्निमित्र-विक्रमोर्वशीययोः रचनाद्वारा नाट्यकलायाः निष्ठापूर्णाम् साधनाम् कृत्वा एव तत्र एतादृशः सिद्धः भवितुम् अशक्नोत् यत् सः नाटककलायाः उत्कृष्टनिदर्शनरूपम् 'अभिज्ञानशाकुन्तलम्' स्रष्टुम् अशक्नोत्, फलतश्च तत् रमणीयम् अपि एतादृशम् जातम् यत्, यथा च 'तत्र रम्या शकुन्तला' इत्यनया प्रसिद्धया उक्त्या सूच्यते, तत् सहृदयैः सर्वेषु नाटकेषु रमणीयतमम् मतम्।

वस्तुतः, यथा च पूर्वम् उक्तम्, अभिज्ञानशाकुन्तलम् तु नाटकरत्नम् एव विद्यते। अस्य रमणीयता अपूर्वा एव अस्ति, या च सहृदयैः अत्र पदे-पदे अनुभूयते। अस्य जन्मदात्रा महाकविना कालिदासेन अस्य नायिकायाः शकुन्तलाया विषये अत्र एव यत् इदम् उक्तम् यत्—

> 'सरसिजमनुविद्धं शैवलेनापि रम्यम्,
> मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
> इयमधिकमनोज्ञा वल्कलेनापि तन्वी,
> किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥
>
> (अ० शा० १।१९)

तत् स्वयम् 'अभिज्ञानशाकुन्तलम्' इत्याख्यस्य एतादृशस्य अस्य नाटकस्य विषये अपि समुचितरूपेण यथातथरूपेण वा घटितः भवति यत्र उक्तरूपा मनोज्ञा रमणीया वा शकुन्तला सृष्टा वर्तते। यतः इदम् नाटकम् स्वरूपत एव रम्यम् मधुरम् च वर्तते, अतः अस्य यस्याम् कस्याञ्चित् अपि भाषायाम् कृतः अनुवादः अस्य मण्डनम् एव भवति, अथवा यतः इदम् नाटकम् स्वकीयेन भावमयेन आन्तरिकेण स्वरूपेण रम्यम् मधुरम् च अस्ति, अतः अस्य सर्वम् अपि भाषाशैलीसंवादालङ्कारविन्यासादिकम् बाह्यम् रूपम् अस्य मण्डनम् एव जातम् अस्ति। यतो हि 'सरसिजमनुविद्धम्....' इत्यादिरूपे वर्णितम् शकुन्तलायाः रमणीयत्वम् उक्तप्रकारेण स्वयम् अभिज्ञानशाकुन्तले अपि अस्ति, अतः 'तत्र रम्या शकुन्तला' इत्यत्र 'शाकुन्तलम्' इत्यस्य स्थाने 'शकुन्तला' इति यः प्रयोगः कृतः वर्तते तत्र अयम् गूढा-

---

१—'महाकविः कालिदासः' इतिशीर्षके निबन्धे।

भिसन्धिः प्रतीयते यत् अस्मिन् नाटके सृष्टायाः रमणीयायाः शकुन्तलायाः निर्देशवशात् अस्य रम्यत्वस्य मुख्यः हेतुः अपि अस्मिन् रूपे प्रकाशितः स्यात् यत् यतो हि अत्र शकुन्तलारूपा रमणीया सृष्टिः कृता वर्तते, अतः अस्य तत्सृष्टिवशात् स्वत एव रम्यत्वम् सम्पद्यते ।

वस्तुतः अभिज्ञानशाकुन्तलस्य रम्यत्वस्य मुख्यः आधारः तत्र सृष्टायाः शकुन्तलायाः रम्यत्वम् एव अस्ति । शकुन्तलायाः महाभारत-वर्णिते मौलिके रूपे किञ्चित् अपि वैशिष्ट्यम् न प्रतीयते, अपि तु सा तत्र एका एतादृशी साधारणी सुन्दरी स्त्री इव एव अस्ति या स्वार्थपूर्णा सृष्टा च अस्ति, किन्तु कालिदासेन तस्यै अभिनवम् मौलिकम् वा रम्यम् रूपम् दत्तम् । एतस्य रम्यरूपस्य सम्पादनाय च तेन शकुन्तलासम्बन्धि सर्वम् अपि अभिनवरूपेण परिष्कृतम् । अत्र नाटके शकुन्तला न केवलम् रूप-सौन्दर्येण रम्या अस्ति, अपि तु स्वकीयेन भावसौन्दर्येण अपि रम्या अस्ति । तस्याः वातावरणम्, तस्याः सखीद्वयम्, तस्याः प्रकृतिप्रेमा, तस्याः वचनानि, तस्याः व्यवहारश्च, इत्यादिकम् सर्वम् तस्याः रम्यत्वम् आदधाति व्यनक्ति च ।

अत्र नाटके शकुन्तला विविधासु अवस्थासु रम्यरूपेण सह इत्थम् चित्रिता वर्तते यत् तस्याः चित्रणेन समग्रस्य आदर्शभूतस्य भारतीयनारीजीवनस्य एव चित्रणम् जातम् अस्ति । कौमार्ये कथम् वासनारेणुसंसृष्टः पूर्वानुरागः भवति, कथम् च तस्य अनुरागस्य विवाहे परिणतिः, कथम् च तत्पश्चात् पितृ-गृहे पतिदर्शनोत्कण्ठा, पितृगृहात् प्रस्थानावसरे कीदृशी भावधारा, पतिगृहे अपमानम् अनुभूय अपि कीदृशी धैर्यपूर्णा मनःस्थितिः, वासनारेणुनिरासे च कीदृशः निर्मलः प्रेमा, इत्यादिकम् सर्वम् अपि भारतीयनारीजीवनसम्बन्धि अत्र चित्रितम् अभिव्यक्तम् वा वर्तते । सहैव शकुन्तलासम्बन्धात् पुरुष-जीवनम् अपि अत्र चित्रितम् अस्ति । पुरुषस्य प्रेमिरूपे पतिरूपे च व्यव-हारस्य चित्रणम् दुष्यन्तमाध्यमेन अत्र कृतम् वर्तते, पितृरूपे च व्यवहारः कण्वमाध्यमेन कृतः वर्तते । इत्थम् अस्य नाटकस्य कतिचन अंकाः यौवन-काले अनुसन्धेयाः सन्ति, कतिचन च प्रौढकाले, चतुर्थश्च अंकः कन्यापितृ-त्वदशायाम् अनुसन्धेयः अस्ति । इत्थम् अत्र नाटके प्रायः सार्वकालिकम् भारतीयम् जीवनम् स्वकीये सम्पूर्णे अपि रूपे चित्रितम् अस्ति । वस्तुतः अत्र भारतीयसंस्कृतेः सुन्दरम् चित्रम् रमणीयरूपे प्रस्तुतम् वर्तते । किम् बहुना, अत्र नाटके जीवनस्य 'सत्यम् शिवम् सुन्दरम्' च पूर्णतया स्फुटितम् सत् सर्वत्र रम्यत्वम् एव आदधत् वर्तते ।

भारतीयसमीक्षाशास्त्रानुसारेण रसः अपि नाटकस्य एकम् मुख्यम् तत्त्वम् अस्ति । रसानुभूतिः स्वत एव एका रमणीया अनुभूतिः भवति ।

यतश्च अभिज्ञानशाकुन्तले रसानुभूतिः पदे-पदे सहृदयान् सामाजिकान् आनन्दविह्वलान् करोति, अतः इदम् नाटकम् स्वभावत एव रम्यम् अस्ति। यतः नाटके अत्यधिका रसाभिव्यक्तिः वस्तुप्रवाहे बाधिका सती स्वयम् अरमणीया भूत्वा वस्तुनः रमणीयत्वम् अपि तिरोदधाति, अतः अस्मिन् नाटके संतुलितरूपेण वस्तुप्रवाहाबाधकरूपेण एव च रसाभिव्यक्तिः कृता वर्तते, येन रसः वस्तु च, इति उभयोः अपि परस्परसाधकत्वम् जातम्, फलतश्च उभयोः अपि रमणीयत्वम् स्पष्टतया अनुभूयते। अस्मिन् विषये अत्र प्रायः तस्य नियमस्य पालनम् कृतम् वर्तते, यस्य वर्णनम् 'दशरूपके' अस्मिन् रूपे वर्तते यत्—

'न चातिरसतो वस्तु दूरं विच्छिन्नताम् नयेत्।
रसं वा न तिरोदध्यात् वस्त्वलंकारलक्षणैः॥ (३।३२)

तात्पर्यम् इदम् अस्ति यत् अत्र काव्यस्य संतुलितरूपेण मनोरम् एव विन्यासः वर्तते, अत्र काव्येन नाटकत्वम् कुत्र अपि न आक्रान्तम् तिरोहितम् वा।

कालिदासस्य कवित्वस्य स्वाभाविकता, मौलिकता, संक्षिप्तिः, व्यञ्जकता, वैदर्भी रीतिश्च, इत्यादिकम् यत् वैशिष्टचम् वर्तते, यत् अत्र स्वकीये चरमोत्कर्षे वर्तते, सहैव नाटचकलायाः अपि पूर्णा प्रौढ़ता अत्र विराजते, येन अत्र स्वत एव परमम् रम्यत्वम् जातम्। अत्र वस्तुनः अभिनवरूपेण सङ्घटनम् कृतम् अस्ति, येन तत् अतीव रम्यम् जातम्। अत्र पात्राणाम् चित्रणम् अपि यथातथरूपेण कृतम् वर्तते। कथोपकथनेषु संक्षिप्त्या सह व्यञ्जकता वर्तते येन स्वत एव तेषु रम्यत्वम् समागतम्। एवम् वस्तुपात्रकथोपकथनादीनाम् सर्वेषाम् अपि नाटकीयानाम् तत्त्वानाम् रम्यत्वात् इदम् नाटकम् रम्यम् फलतश्च सफलम् जातम् अस्ति। रमणीयत्वाधायकम् सौन्दर्यवर्णनम् प्रेमाभिव्यञ्जनम् च अस्य नाटकस्य जीवनतत्त्वम् एव अस्ति यच्च मानवः प्रकृतिश्च, इति उभयोः अपि सम्बन्धेन अत्र सफलतया कृतम् वर्तते।

प्रसिद्धेन 'गेटे' नामकेन जर्मनकविना अभिज्ञानशाकुन्तलस्य अनुवादम् एव पठित्वा अस्य रम्यत्वम् अनुभूय अस्य विषये ये प्रशंसात्मकाः उद्गाराः एकस्मिन् पद्ये प्रकटिताः, ते यथार्थाः एव सन्ति। एषाम् उद्गारणाम् भावः महामहोपाध्यायेन वासुदेवविष्णुमिराशिना अस्मिन् सुन्दरे संस्कृतपद्ये प्रकटितः—

'वासन्तं कुसुमं फलं च युगपद् ग्रीष्मस्य सर्वं च यद्
यच्चान्यन्मनसो रसायनमतः सन्तर्पणं मोहनम्।
एकीभूतमभूतपूर्वमथवा स्वलोकभूर्लोकयो-
रैश्वर्यं यदि वाञ्छसि प्रियसखे शाकुन्तलं सेव्यताम्॥

अस्तु ! इत्थम् संक्षेपतः इदम् कथयितुम् शक्यते यत् यदपि नाटकीयम् परमम् रमणीयत्वम् भवति, तत् सर्वम् अपि अभिज्ञानशाकुन्तले स्वकीये समन्वितरूपे विराजमानम् सत् सहृदयान् अस्य नाटकस्य रमणीयत्वम् अनुभावयति । फलतः अस्य विषये केन अपि सहृदयेन समालोचकेन प्रकटितः अयम् उद्गारः यथार्थं एव वर्तते यत्—

'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला ।' इति ।

## ५०

# महाकविः अश्वघोषः

१—परिचयः—बौद्धदर्शनक्षेत्रे लब्धकीर्तिः अश्वघोषः संस्कृतसाहित्य-क्षेत्रे अपि एकः महाकविः मन्यते। अस्य महानुभावस्य स्थितिकालस्य विषये कश्चन उल्लेखनीयः विवादः नास्ति। प्रायः सर्वसम्मत्या अयम् कुषाणवंशीयस्य सम्राजः कनिष्कस्य काले वर्तमानः मन्यते। यतोहि कनिष्कस्य कालः ईसायाः प्रथमशताब्द्याम् (७८ ई०) मन्यते, अतः अस्य महाकविः अपि अयम् एव कालः स्वीक्रियते। अयम् कनिष्कस्य गुरुः आश्रितः कविश्च मन्यते। ऐतिह्यविदाम् अनुसारेण अयम् मूलतः वैदिकपरम्परानुयायी ब्राह्मणः आसीत्। अस्याः मान्यतायाः आधारः अयम् अस्ति यत् अस्य रचनासु वैदिकानाम् शास्त्राणाम् विभिन्नानाम् विषयाणाम् निर्देशः प्राप्यते। अनन्तरम् अयम् बौद्धधर्मावलम्वी जातः। बौद्धधर्मे अस्य प्रवला निष्ठा आसीत् फलतः अनेन बौद्धधर्मप्रचाराय अतिशयितः प्रयासः कृतः। यत्फलस्वरूपम् अयम् बौद्धधर्मावलम्बिषु अतीव सम्मानपूर्णम् स्थानम् प्राप्तवान्। सः आचार्य-भदन्तेत्युपाधिना अपि तत्र सम्मानितः अभवत्। सम्राजा कनिष्केन या बौद्ध-संगीतिः आयोजिता, तस्याः अध्यक्षपदे अयम् एव सम्राजा प्रतिष्ठापितः। बौद्धदर्शनक्षेत्रे अस्य नाम बौद्धदर्शनस्य तथतायाः भूततथतायाः वा सिद्धान्तेन सम्बद्धम् मन्यते। अयम् अस्य सिद्धान्तस्य प्रायः प्रवर्तकः एव स्वीक्रियते। यद्यपि अयम् मूलतः सर्वास्तिवादी आसीत् तथापि महायान-सम्प्रदायसिद्धान्तानाम् पूर्वाभासः अपि अस्य ग्रन्थेषु मन्यते।

अश्वघोषविरचितस्य सौन्दरनन्दनामकस्य महाकाव्यस्य 'आर्य सुवर्णाक्षी पुत्रस्य साकेतकस्य भिक्षोराचार्यभदन्तोश्वघोषस्य महाकवे-र्महावादिनः कृतिरियम्' इति पुष्पिकया ज्ञायते यत् अयम् अयोध्यास्थः

आसीत् अथ च अस्य मातु: नामधेयम् 'सुवर्णाक्षी' इति आसीत्। जनश्रुति: कथयति यत् अयम् पुरुषपुरे (पेशावरे) अपि निवासम् कृतवान्, अयम् कस्यचित् पार्श्वनामकस्य बौद्धाचार्यस्य तच्छिष्यस्य पुण्ययशसो वा बौद्ध-धर्मे दीक्षित: शिष्य: आसीत्।

अश्वघोष: कालिदासात् पूर्ववर्ती परवर्ती वा, इति विषये विवाद: वर्तते। ये कालिदासम् गुप्ताकालीनम् मन्यन्ते ते अश्वघोषम् तस्मात् पूर्ववर्तिनम् मन्यन्ते, ये च तम् ईसात: पूर्वम् प्रथमशताब्दयाम् मन्यन्ते ते अश्वघोषम् तस्मात् परवर्तिनम् मन्यन्ते।

२—रचना—अश्वघोषप्रणीतरूपे सप्त ग्रन्था: प्रसिद्धा: सन्ति—(१) बुद्धचरितम्, (२) सौन्दरनन्दम्, (३) शारिपुत्रप्रकरणम्, (४) महायानश्रद्धोत्पादसंग्रह:, (५) सूत्रालंकार:, (६) गण्डिस्तोत्रगाथा, (७) वज्रसूची।

एतेषु सप्तसु ग्रन्थेषु प्रथमान् त्रीन् प्रति अश्वघोषस्य कर्तृत्वम् निर्विवादरूपेण मन्यते, यदा च अवशिष्टेषु चतुर्षु कतिपयान् प्रति तस्य कर्तृत्वम् विवादास्पदम् मन्यते। एतद्ग्रन्थातिरिक्तम् नामरहिम् खण्डितम् नाटकद्वयम् अपि अश्वघोषप्रणीतम् मन्यते। अश्वघोषस्य रचनासु प्रथमे त्रय: ग्रन्था:—बुद्धचरितम्, सौन्दरनन्दम्, शारिपुत्रप्रकरणम् च—प्रमुखा: मन्यन्ते, अथ च अत्रापि 'बुद्धचरितम्' परमम् प्रामुख्यम् वत्ते।

अश्वघोषस्य उक्तेषु ग्रन्थेषु 'बुद्धचरितम्' 'सौन्दरनन्दम्' चेति द्वे महाकाव्ये स्त:, 'शारिपुत्रप्रकरणम्' च एकम् प्रकरणरूपम् नाटकम् अस्ति। 'महायानश्रद्धोत्पादसंग्रह:', य: 'महायानश्रद्धोत्पाद:' इत्यपि कथ्यते, बौद्ध-दर्शनस्य च प्रसिद्ध: ग्रन्थ: अस्ति, अस्मिन् महायानसम्प्रदायस्य सिद्धान्तानाम् कश्चन पूर्वाभास: समुपलभ्यते। 'सूत्रालङ्कार:', य: 'कल्पना-मण्डतिका' इत्यपि उच्यते, बौद्धधर्मस्य एव ग्रन्थ: अस्ति, अस्मिन् विभिन्नानाम् कथानाम् माध्यमेन बौद्धधर्मसिद्धान्ता: प्रतिपादिता: सन्ति। 'गण्डिस्तोत्रगाथा' एकम् एतादृशम् गीतिकाव्यम् अस्ति यत् अश्वघोषस्य कवित्वेन सह संगीतज्ञत्वम् छन्द: शास्त्रनिपुणत्वम् च अपि प्रकटयति। 'वज्रसूची' एक: खण्डनात्मक: आलोचनात्मक: वा ग्रन्थ: अस्ति, अस्मिन् श्रुतिस्मृतिपरम्परानुयायिनाम् चातुर्वर्ण्यसिद्धान्तस्य खण्डनम् आलोचना वा वर्तते। एते सर्वे ग्रन्था: बौद्ध-धर्मप्रचारे एव व्यापृता: सन्ति, अथ च प्राय: सर्वे: मूलत: संस्कृतभाषायाम् एव लिखिता: सन्ति।

'बुद्धचरितम्' अश्वघोषस्य प्रथमम् महाकाव्यम् अस्ति। केषाञ्चित् विदुषाम् मतेन 'सौन्दरनन्दम्' तस्य प्रथमम् महाकाव्यम् अस्ति। बुद्धचरिते, यथा च अस्य नाम्ना एव ज्ञायते, महात्मन: गौतमबुद्धस्य चरितम् गीतम् वर्तते, सहैव च अत्र काव्यस्य माध्यमेन बौद्धसिद्धान्ता: अपि वर्णिता: वर्तन्ते।

इदम् महाकाव्यम् मूलतः, यथा च अस्य चीनीयत्रिविष्टपीय भाषानुवादेन ज्ञायते, सप्तविंशतिसर्गात्मकम् अष्टाविंशतिसर्गात्मकम् वा आसीत्, किन्तु भारते तु इदम् खण्डितरूपे त्रयोदशसर्गात्मकम् (चतुर्दशसर्गस्य कैश्चन श्लोकैः सह) एव शारदालिपौ लिखितम् उपलब्धम् जातम् ।

'सौन्दरनन्दम्' मूलतः अष्टादशसर्गात्मकम् महाकाव्यम् अस्ति । केचन इदम् विंशतिसर्गात्मकम् मन्यन्ते । अस्मिन् बुद्धस्य विमातृजन्य नन्दस्य तस्य पत्न्याः सुन्दर्याश्च कथा वर्णिता अस्ति, सहैव बुद्धचरितवत् अत्रापि काव्य-माध्यमेन बौद्धसिद्धान्ताः वर्णिता सन्ति ।

'शारिपुत्रप्रकरणम्' नवाङ्कात्मकम् प्रकरणम् अस्ति । इदम् '(प्रो०) लूडर्स' इत्याख्येन विदुषा मध्यायाम् ऐशियायाम् अन्यैः ग्रन्थैः सह प्राप्तम् । अस्मिन् इदम् वर्णितम् अस्ति यत् यत् महात्मा गौतमबुद्धः केन प्रकारेण मौद्गल्यायनम् शारिपुत्रम् च स्वोपदिष्टधर्मस्य अनुयायिनौ कृतवान् । अनेन नाटकेन सह यत् खण्डितम् नाटकद्वयम् प्राप्तम् अभवत् तत्र एकम् एतादृषम प्रतीकात्मकम् नाटकम् अस्ति यस्मिन् बुद्धिधृत्यादयः पात्ररूपे विराजन्ते ।

३—कवित्वम्—यद्यपि अश्वघोषः मूलतः दार्शनिकः आसीत् तथापि सः एकः प्रतिभासम्पन्नः महाकविः अपि आसीत् । तस्य कवित्वम् उत्कृष्टम् वर्तते । तस्य द्वयोः अपि महाकाव्ययो :—बुद्धचरितसौन्दरनन्दयोः—प्रायः सर्वाणि महाकाव्योपयोगीनि तत्त्वानि उपलभ्यन्ते । सः कालिदासवत् वैदर्भीरीतेः अस्ति । तेन सरलायाम् भाषायाम् सरलायाम् शैल्याम् च स्वकाव्यरचना कृता यत्र भावाभिव्यक्तिदृष्टचा तस्य कवित्वम् उत्कृष्टम् प्रतीयते, तत्र अलंकारविन्यासादि दृष्टचा अपि तस्य कवित्वम् न्यूनम् नास्ति । यद्यपि अश्वघोषस्य काव्यरचनायाः उद्देश्यम् बौद्धसिद्धान्तानाम् प्रचारः आसीत्, तथापि तेन अस्य उद्देश्यस्य पूर्तिः एतादृशेन नैपुण्येन सह कृता यत् किञ्चिदपवादेन सह प्रायः कवित्वस्य एतद्धेतुकः अपकर्ष नः जातः तेन काव्यरचनायाः स्वकीयम् उक्तम् उद्देश्यम् स्वयमेव सौन्दरनन्दे इत्थम् प्रकटितम्—

'इत्येषा व्युपशान्तये न रतये मोक्षार्थगर्भा कृता
श्रोतॄणां ग्रहणार्थमन्यमनसां काव्योपचारात् कृता ।
यन्मोक्षात् कृतमन्यदत्र हि मया तत् काव्यधर्मात् कृतं
पातुं तिक्तमिवौषधं मधुयुतं हृद्यं कथं स्यादिति ।।

अश्वघोषेन सरलया शैल्या बौद्धसिद्धान्ताः काव्यरूपे प्रकटिताः । उदाहरणार्थम्, सः बौद्धदर्शने स्वीकृतम् निर्वाणम् दृष्टान्तालंकारसाहाय्येन एवम् वर्णयति—

'दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम् ।
दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात् केवलमेति शान्तिम् ।।

तथा कृती निर्वतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद् विदिशं न काञ्चित् क्लेशक्षयात् केवलमेति शान्तिम् ।।'

सः नैतिकानि तथ्यानि अपि सारल्येन काव्यरूपे प्रकटयति; यथा—

'ऋतुर्व्यतीतः परिवर्तते पुनः क्षयं प्रयातः पुनरेति चन्द्रमाः।
गतं गतं नैव तु सन्निवर्तते जलं नदीनाञ्च नृणां च यौवनम् ।।

अश्वघोषेन भावाभिव्यक्तिः अपि सारल्येन प्रभावोत्पादकरूपे कृता उदाहरणार्थम् प्रव्रजितस्य स्वपत्युः विषये चिन्ताम् कुर्वती यशोधरा द्रष्टुम् शक्यते।

सूंचौ शयित्वा शयने हिरण्मये प्रबोध्यमानो निशि तूर्यनिस्वनैः।
कथं वत स्वप्स्यति सोऽद्य मे व्रती पटैकदेशान्तरिते महीतले ।।

अलंकारविन्यासे अपि अश्वघोषः परमकुशलः अस्ति। तेन विन्यस्ताः उपमाः अतीव मनोहराः सन्ति। सः वियुक्तयोः सुन्दरीनन्दयोः वियुक्ताभ्याम् रात्रिचन्द्राभ्याम् सह उपमाम् इत्थम् विन्यस्यति—

'तां सुन्दरी चेन्न लभेत नन्दः सा वा निषेवेत न तं नतभ्रूः।
द्वन्द्वं ध्रुवं तद्विकलं न शोभेतान्योन्यहीनाविव रात्रिचन्द्रौ ।।'

अश्वघोषस्य कवित्वस्य इयम् उल्लेखनीया विशेषता अस्ति यत् तत्र कृत्रिमता क्व अपि न उपलभ्यते।

शारिपुत्रप्रकरणस्य दर्शनेन अश्वघोषस्य नाटकरचनाकौशलम् अपि सूच्यते। अस्मिन् नाटके प्रायः सर्वाणि प्रमुखानि नाटकीयानि तत्त्वानि उपलभ्यन्ते।

४—कालिदाससाम्यम्—कालिदासस्य अश्वघोषस्य च रचनासु कतिपयेषु स्थलेषु साम्यम् दृश्यते। उदाहरणार्थम्, कालिदासेन कुमारसंभवे (५।८५) पार्वत्याः एवम् वर्णनम् कृतम्—

'तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणम् पदमुद्धृतमुद्वहन्ती।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ ।।'

अश्वघोषेण अपि सौन्दरनन्दे (४।४२) नन्दस्य एतादृशम् एव वर्णनम् कृतम्—

'तं गौरवं बुद्धगतं चकर्ष भार्यानुरागः पुनराचकर्ष।
सोऽनिश्चयान्नापि ययौ न तस्थौ तरंस्तरङ्गेष्विव राजहंसः ।।'

कालिदासेन रघुवंशे (७।११) कुमारसंभवे (७।६२) एकम् वर्णनम् इत्थम् कृतम्—

'तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम्।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ।।'

अश्वघोषेण अपि बुद्धचरिते (३।१९) एतादृशम् एव एकम् वर्णनम् इत्थम् कृतम्—

'वातायनेभ्यस्तु विनिःसृतानि परस्परोपासितकुण्डलानि ।
स्त्रीणां विरेजुर्मुखपंकजानि सक्तानि हर्म्येष्विव पंकजानि ।।'

कालिदासः रघुवंशे (२।४७) वर्णयति—'नवं नयः कान्तमिदं वपुश्च' अश्वघोषः अपि बुद्धचरिते (१०।४) वर्णयति—नवं वयः दीप्तमिदं वपुश्च' कालिदासः मेघदूते (११४) कथयति—'कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा', अश्वघोषः अपि एवमेव बुद्धचरिते (११।४३) कथयति—'अतोऽपि नैकान्तसुखोऽस्ति कश्चिन्नैकान्तदुःखः पुरुषः पृथिव्याम्' ।

एवमेव अन्येषु अपि कतिपयेषु स्थलेषु कालिदासस्य अश्वघोषस्य च रचनासु भाषासाम्यम् वर्णनसाम्यम् भावसाम्यम् वा परिलक्ष्यते । इदम् साम्यम् दृष्ट्वा विद्वांसः अनयोः एकम् अपरेण प्रभावितम् मन्यते । किन्तु अत्र विषये विदुषाम् ऐकमत्यम् नास्ति; केचन कालिदासेन अश्वघोषम् केचन च अश्वघोषेण कालिदासम् प्रभावितम् मन्यन्ते । एतदाधारेण एव च ते अनयोः एकम् अपरस्मात् पूर्ववर्तिनम् वा मन्यन्ते । किमपि स्यात्, अत्र सन्देहः नास्ति यत् यादृशम् साम्यम् कालिदासस्य अश्वघोषस्य च रचनासु प्राप्यते तादृशम् अन्यत्र प्रायः दृष्टिगोचरम् न भवति ।

अस्तु ! उक्तेन संक्षिप्तेन अश्वघोषस्य परिचयेन इदम् स्पष्टम् अस्ति यत् सां बौद्धकविषु तु सर्वश्रेष्ठः कविः अस्त्येव, सहैव समस्तेषु संस्कृत-महाकविषु अपि अन्यतमः सन् संस्कृतकाव्यक्षेत्रे एकस्य दार्शनिककवेः रूपे महत्त्वपूर्णम् स्थानम् धत्ते ।

# ५१

## महाकविः भारविः

१—परिचयः—'किरातार्जुनीयम्' इत्याख्यस्य प्रसिद्धस्य संस्कृत-महाकाव्यस्य प्रणेता महाकविः भारविः ईसवीयसप्तमशतकस्य पूर्वार्द्धात् किञ्चित् पूर्वम् एव स्वकीयेन अस्तित्वेन भारतभुवम् अलंकृतवान्, यतो हि ६३४ ईसवीयवर्षस्य एहोलस्य शिलालेखे चालुक्यवंशिनः राज्ञः द्वितीयस्य पुलकेशिनः या प्रशस्तिः लिखिता अस्ति, तस्याम् अस्य महाकवेः अस्मिन् रूपे निर्देशः वर्तते यत्—

'येनायोजि नवेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः॥

अनेन निर्देशेन यत्र इदम् ज्ञायते यत् अस्मिन् काले भारविः दक्षिणभारते प्रसिद्धिम् प्राप्तवान् तत्र, यतः महाकविना बाणेन (६५० ई०) स्वकीये हर्षचरिते अन्यैः कविभिः सह अस्य उल्लेखः न कृतः, अतः इदम् अपि ज्ञायते यत् एतत्कालात् अनन्तरम् बाणस्य काले अपि अयम् उत्तरभारते प्रसिद्धिम् प्राप्तुम् न अशक्नोत्। यतः भारवेः काव्ये कालिदासस्य अनुकरणम् प्रतीयते, अतः इदम् स्पष्टम् अस्ति यत् अयम् कालिदासात् पश्चाद्वर्ती अस्ति, अथ च यतः माघस्य (७०० ई०) काव्ये अस्य काव्यस्य अनुकरणम् दृश्यते, अतः इदम् अपि स्पष्टम् अस्ति यत् अयम् माघात् पूर्ववर्ती अस्ति। 'अवन्तिसुन्दरीकथयाः' आधारे भारविः दाक्षिणात्यः, अथ च द्वितीयस्य पुलकेशिनः अनुजस्य विष्णुवर्धनस्य सभापण्डितः आसीत्। विष्णुवर्धनस्य शासनकालः ६१५ ईसवीयवर्षस्य समीपे मन्यते। इत्थम् उक्तैः प्रमाणैः भारवेः स्थितिकालः ६०० ईसवीयवर्षस्य समीपे सिद्धयति। कतिपयानाम् विदुषाम् अनुसारेण भारविः त्रावणकोरनिवासी आसीत्। अस्य जीवनवृत्तस्य विषये किञ्चित् अपि निश्चितरूपेण ज्ञातम् नास्ति।

**२—रचना**—भारवेः एकमात्रम् एव ग्रन्थः 'किरातार्जुनीयम्' इत्याख्यम् महाकाव्यम् अस्ति। अस्य समग्रा अपि कीर्तिः अस्मिन् एव एकस्मिन् महाकाव्ये आधारिता वर्तते। अस्मिन् महाकाव्ये अष्टादश सर्गाः सन्ति। अस्य कथानकम् महाभारताधारितम् वर्तते। तस्य मूलम् महाभारतष्य वनपर्वणि वर्णितम् कथानकम् अस्ति। अस्य महाकाव्यस्य कथानकस्य सारः अयम् एव अस्ति यत् द्यूते दुर्योधनात् पराजितः पाण्डवाः द्वैतवने निवसन्तः आसन्, यदा च तेषाम् एकेन गुप्तचरेण तेभ्यः दुर्योधनस्य समीचीनायाः शासनव्यवस्थायाः समाचारः श्रावितः। इदम् समाचरम् श्रुत्वा भीमः द्रौपदी च धर्मराजम् युधिष्ठिरम् दुर्योधनेन सह युद्धकरणाय उत्तेजितम् कुरुतः, किन्तु सः तयोः इमम् परामर्शम् न स्वीकरोति। तत्पश्चात् पराशरपुत्रः महर्षिः वेदव्यासः तत्र समागत्य पाण्डवेभ्यः परामर्शम् ददाति यत् अर्जुनः इन्द्रकीलम् पर्वतम् गत्वा तत्र पाशुपतास्त्रप्राप्त्युद्देश्येन पशुपतिप्रसादनाय तपश्चरेत्। अर्जुनः तत्र गत्वा कठोरम् तपश्चरति, पुनश्च सः संयोगवशात् किरातवेषेण शिवेन सह युद्धम् करोति। तस्य साहसेन पराक्रमेण च प्रसन्नः सन् शिवः तस्मै पाशुपतास्त्रम् ददाति। केवलम् एतावत् एव कथानकम् गृहीत्वा कविना महाकाव्यस्य रचना कृता अस्ति। अस्मिन् महाकाव्ये अनेन कथानकेन सह प्रायः तेषाम् सर्वेषाम् अपि वस्तूनाम् वर्णनम् कविना कृतम्, येषाम् च वर्णनम् आलंकारिकैः महाकाव्ये आवश्यकम् मतम्। इत्थम् अनेकेषु सर्गेषु महाकाव्यलक्षणानुसारेण ऋतु-पर्वत-सूर्यास्त-जलक्रीडादीनाम् वर्णनम् कुर्वता कविना काव्यस्य अधिकः विस्तारः कृतः अस्ति।

**(३)—अभिनवशैलीप्रवर्तकत्वम्**—'किरातार्जुनीयम्' इत्याख्यस्य रचनया महाकविना भारविना संस्कृतमहाकाव्यक्षेत्रे एकस्याः अभिनवाया एव कलापक्षप्रधानायाः शैल्याः प्रवर्तनम् कृतम्, यस्याश्च अनुसरणाम् तत्परवर्तिभिः भट्टिमाघश्रीहर्षादिभिः महाकाव्यकारैः कविभिः कृतम्। महाकविना भारविणा प्रवर्तितायाः अस्या शैल्याः वैशिष्टयम् इदम् अस्ति यत् अत्र काव्यस्य भावपक्षस्य अपेक्षया कलापक्षाय अधिकम् प्राधान्यम् दत्तम् वर्तते। अत्र वर्णनीयम् कथावस्तु अभिव्यञ्जनीयम् च रसम् भावम् वा प्रति तादृशम् ध्यानम् दत्तम् न वर्तते, यादृशम् आलंकारिकताम् अभिव्यंजनाशैलीम् वा प्रति दत्तम् वर्तते। यथा च किरातार्जुनीयस्य दर्शनेन ज्ञायते, तत्र केवलम् उक्तम् परिमितम् कथानकम् गृहीत्वा कलात्मकैः उपादानैः एव काव्यस्य महान् विस्तारः कृतः वर्तते। कालिदासस्य काव्येषु भावपक्षस्य कलापक्षस्य च यः समन्वयः प्राप्यते, सः अस्याम् कलापक्षप्रधानायाम् शैल्याम् न उपलभ्यते। अत्र तु कलापक्षेण भावपक्षः प्रायः आक्रान्त एव कृतः अस्ति फलतः, कामम् अस्याम् शैल्याम् विरचितेषु काव्येषु कलात्मिका रमणीयता स्यात्, किन्तु

तादृशी भावात्मिका रमणीयता अथ च भावपक्षकलापक्षसमन्वयजन्या रमणीयता न अनुभूयते या च कालिदासविरचितेषु काव्येषु अनुभूयते ।

४—कवित्वम्—उक्तप्रकारेण भारवेः कवित्वस्य मुख्या विशेषता अलंकृता वर्णनशैली कलाप्रधानता वा वर्तते । अस्याः विशेषतायाः अनुसारेण काव्यम् आलंकारैः, प्राकृतिकवर्णनैः, शाब्दिकचमत्कारैश्च भूषयितुम् भारवेः प्रमुखा प्रवृत्तिः अस्ति । कामम् कथानकम् लघु संक्षिप्तम् वा स्यात्, किन्तु भारविः उक्तैः अलंकारादिभिः साधनैः तत्र चमत्कारस्य कमनीयतायाश्च सन्निवेशम् करोति । वस्तुतः भारविः रुचिरैः अलंकारैः काव्यस्य मण्डने अतीव कुशलः अस्ति । उदाहरणार्थम्, किरातार्जुनीयस्य चतुर्थे सर्गे कृतम् शरदः नैसर्गिकम् हृदयग्राहि च वर्णनम्, अष्टमे सर्गे कृतम् जलक्रीडायाः सुन्दरम् वर्णनम् च इत्यादीनि प्रस्तोतुम् शक्यन्ते । एषु शरदवर्णनस्य एकः अंशः अस्मिन् रूपे द्रष्टुम् शक्यते यत्—

'मुखैरसौ विद्रुमभङ्गलोहितैः शिखाः पिशङ्गीः कलमस्य बिभ्रती ।
शुकावलिर्व्यक्तशिरीषकोमला धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥

(४।३६)

अत्र कीदृशम् संश्लिष्टम् अथ च अलंकृतम् प्रकृतिचित्रणम् अस्ति । जलक्रीडाम् कुर्वतीनाम् अप्सरसाम् एकम् सुन्दरम् अलंकृतम् चित्रम् अस्मिन् रूपे द्रष्टुम् शक्यते—

'तिरोहितान्तानि नितान्तमाकुलैरपां विगाहादलकैः प्रसारिभिः ।
ययुर्वधूनां वदनानि तुल्यतां द्विरेफवृन्दान्तरितैः सरोरुहैः ॥'

(८।४७) ।

भारवेः कवित्वस्य द्वितीया विशेषता ओजस्विता अस्ति, यस्याश्च दर्शनम् किरातार्जुनीयस्य अधिकांशेषु स्थलेषु भवति । विदुषाम् विचारः अस्ति यत् समस्ते संस्कृतसाहित्ये किरातार्जुनीयम् इव अन्यत् किञ्चित् ओजः पूर्णम् उग्रम् च काव्यम् नास्ति । अस्याः विशेषतायाः हेतोः वीररसस्य अभिव्यक्तौ भारवेः अद्वितीया सफलता प्राप्ता अस्ति । किरातार्जुनीयस्य मुख्यः रसः वीररस एव अस्ति, अन्ये शृङ्गारादयश्च रसाः तत्र गौणरूपेण अभिव्यक्ताः सन्ति ।

भारवेः कवित्वस्य तृतीया विशेषता वर्णनाशक्तिः अस्ति, यस्याश्च दर्शनम् अर्जुनतपस्यावर्णे, सुराङ्गनाविहारवर्णने, किरातार्जुनयुद्धवर्णने, एतादृशेषु च अन्येषु विभिन्नेषु भवति ।

भारवेः कवित्वस्य चतुर्थी विशेषता पात्रचित्रणकौशलम् अस्ति, यस्य च दर्शनम् द्रौपदीभीमयुधिष्ठिरादीनाम् विभिन्नानाम् पात्राणाम् तत्कृते चित्रणे कर्तुम् शक्यते । किरातार्जुनीये अपमानज्वालया दह्यमाना द्रौपदी,

प्रचण्डेन क्रोधेन दीप्तः पराक्रमी भीमः, शान्त्या अविचलः धर्मराजः युधिष्ठिरः, साहसेन पराक्रमेण च द्योतितः वीरः अर्जुनः, इत्यादिकानि सर्वाणि अपि प्रधानानि पात्राणि सजीवतया चित्रितानि वर्तन्ते। तत्र चित्रितानि वेद-व्यासः, गुप्तचरः, इत्यादीनि गौणानि पात्राणि अपि सजीवानि वास्तविकानि वा प्रतीयन्ते।

संवादानाम् रोचकत्वम् अपि भारवेः कवित्वस्य एकम् वैशिष्टचम् अस्ति। तस्य काव्यस्य भूयान् भागः रोचकैः संवादैः पूर्णः अस्ति। अयं कविः संवादद्वारा कथानकाय प्रगतेः दानस्य अनुपमम् एवम् प्रकारम् धत्ते।

पाण्डित्यम् बहुविज्ञत्वम् अपि भारवेः कवित्वस्य वैशिष्टचम् अस्ति। तस्य व्याकरणालङ्कारनीतिकास्त्रादीनाम् विभिन्नानाम् शास्त्राणाम् ज्ञानम् तस्य काव्येन स्पष्टतया व्यक्तम् भवति। तेन विन्यस्ताः संवादाः राजनीतेः गूढसिद्धान्तैः पूर्णाः सन्ति। तस्य नीतिसम्बन्धिन्यः सूक्तयः अपि तस्य नीति-ज्ञताम् द्योतयन्ति, यथा—'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्', 'वरं विरोधोऽपि समं महात्मभिः', 'हितं मनोहारि च दुर्लभं वचः', इत्यादयः।

यथा च 'उपमा कालिदासस्य भारवेरर्थगौरवम्' इत्यनया प्रसिद्धया उक्त्या ज्ञायते, विद्वद्भिः भारवेः कवित्वस्य सर्वप्रमुखा विशेषता अर्थगौरवम् मन्यते। तस्य काव्ये भीमस्य कथनस्य प्रशंसाम् कुर्वता युधिष्ठिरेण यत् इदम् उक्तम् यत्—

'स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥'

तत् स्वयम् भारवेः काव्यस्य विषये अपि चरितार्थम् भवति। वस्तुतः यत्र भारविणा आलङ्कारिकतायाः कलाप्रदर्शनस्य वा तीव्रः मोहः परित्यक्तः, तत्र तस्य काव्ये अतीव अर्थगौरवम् वर्तते।

प्रसिद्धस्य टीकाकारस्य मल्लिनाथस्य अनुसारेण भारवेः काव्यम् नारिकेलसमम् वाह्यतः रूक्षम् कठोरम् च सत् अपि स्वकीयेन आन्तरिकेण स्वरूपेण मधुरम् कोमलम् च अस्ति—

'नारिकेलफलसंमितं वचो भारवेः सपदि तद्विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्॥'

भारवेः कवित्वस्य अयम् दोषः अपि वर्तते यत् सः कुत्रचित् अनाव-श्यके अतिमात्रे वा कलात्मके प्रदर्शने अतीव व्यापृतः भवति। उदाहरणार्थम्, किरातार्जुनीयस्य पञ्चदशः सर्गः द्रष्टुम् शक्यते यत्र कविना 'स्वकीयम् चित्रकाव्यनिर्माणकौशलम् प्रदर्शितम् अस्ति। तत्र एतत्कौशलप्रदर्शने कविः

इयान् व्यापृतः जातः यत्ः तेन एकत्र एकेन एव 'न' इति व्यञ्जनेन सम्पूर्णः अपि श्लोकः ग्रथितः, यथा—

'न नोननुन्नो नुन्नोनो नाना नानानना ननु ।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥' (१५।१४)

एतादृशैः उदाहरणैः परिष्कृतायाः रुचेः प्रदर्शनम् न भवति, रमणीयता अपि दूरम् व्रजति ।

अस्तु ! एवम् स्वकालस्य प्रभावेण यत्र कुत्रचित् कृताम् कलात्मकप्रदर्शनस्य अतिमात्राम् विहाय, भारवेः कवित्वम् अनेकाभिः प्रशस्ताभिः विशेषताभिः युक्तम् वर्तते । संस्कृतसाहित्यस्य इतिहासे तस्य नाम अभिनवायाः कलापक्षप्रधानायाः काव्यशैल्याः प्रवर्तकरूपे स्मरणीयम् स्थास्यति । वस्तुतः अस्याः शैल्याः प्रवर्तनम् एव भारवेः संस्कृतकाव्याय मुख्यम् दानम् अस्ति, येन माघादीनाम् परवर्तिनाम् काव्यानि समृद्धानि जातानि ।

# ५२

## महाकविः दण्डी

**१—स्थितिकालः-(अ) काव्यादर्शकारस्य आचार्यस्य दण्डिनः कालः**— दशकुमारचरितकारः महाकविः दण्डी संस्कृतस्य प्रमुखेषु कथाकारेषु गद्यकविषु महत्त्वपूर्णम् स्थानम् अधिकरोति। अयम् कदा कुत्र च अभूत्, इदम् अधुनावधि पूर्णतः निश्चितम् नास्ति। 'काव्यादर्शे' 'सेतुवन्ध' नामकस्य एकस्य प्राकृतकाव्यस्य उल्लेखः अस्ति। इदम् प्राकृतकाव्यम् राज्ञः प्रवरसेनस्य रचना अस्ति। राज्ञः प्रवरसेनस्य समयः ईसवीयः पञ्चमः शतकः मन्यते। इत्थम् 'काव्यादर्शस्य' रचयितुः आचार्यस्य दण्डिनः स्थितिकालस्य पूर्वसीमा ईसवीयात् पञ्चमात् शतकात् पूर्वम् न गन्तुम् शक्नोति। अपरतः, कन्नडभाषायाः एकस्मिन् अलंकारग्रन्थे—कविराजमार्गे—काव्यादर्शस्य पर्याप्तः प्रभावः प्रतीयते, अथ च सिंहलीयभाषायाः एकस्य 'सियवस लकर' (स्वभाषालंकार) नामकस्य अलंकारग्रन्थस्य रचना अपि काव्यादर्शस्य आधारे कृता प्रतीयते। 'कविराजमार्गः' ८१४ ईसवीयवर्षस्य रचना मन्यते, अथ च 'स्वभाषालंकारस्य' रचयितुः राज्ञः प्रथमस्य सेनस्य कालः ८४३-८६६ ईसवीयवर्षाणाम् इतस्ततः मन्यते। एवम् 'काव्यादर्शस्य' रचयितुः आचार्यस्य दण्डिनः स्थितिकालस्य उत्तरसीमा ८०० ईसवीयवर्षस्य समीपे तिष्ठति।

अस्तु! एवम् 'काव्यादर्शस्य' 'रचयितुः आचार्यस्य दण्डिनः स्थितिकालः ५०० ईसवीयवर्षात् ८०० ईसवीयवर्षम् यावत् प्रसृतायाः अवधेः मध्ये पतति।

**(आ) काव्यादर्शकारेण दण्डिना दशकुमारचरितकारस्य दण्डिनः अभिन्नत्वम्**—'काव्यादर्शः' एकः अलङ्कारशास्त्रीयः ग्रन्थः अस्ति, दशकुमारचरितम्' च एकम् कथात्मकम् गद्यकाव्यम् अस्ति। काव्यादर्शे गद्यकाव्यस्य शैलीकथावस्त्वादिसम्बन्धे ये आदर्शभूताः सिद्धान्ताः प्रतिपादिताः सन्ति तेषाम् पालनम् दशकुमारचरिते पूर्णतः कृतम् न वर्तते। अतः केषाञ्चित् विदुषाम् मतम् अस्ति यत् दशकुमारचरितम् काव्यादर्शकारस्य आचार्यस्य दण्डिनः रचना नास्ति। किन्तु इदम् अपि सम्भवम् अस्ति यत् दण्डिना

दशकुमारचरितस्य रचना स्वस्य साहित्यिकजीवनस्य प्रारम्भिके काले कृता स्यात्, काव्यादर्शस्य च रचना पश्चात् साहित्यिक्याम् प्रौढतायाम् प्राप्तायाम् सत्याम् कृता स्यात्, अथ च इत्थम् उत्तरकालीनायाः प्रौढतायाः आधारे पश्चात् निर्धारितानाम् काव्यादर्शप्रतिपादितानाम् नियमानाम् स्वकीयायाम् एव पूर्वकालीनायाम् कृतौ दशकुमारचरिते पूर्णतः पालनम् न जातम् स्यात्।

'शार्ङ्गधरपद्धतौ' राजशेखरस्य नाम्ना उद्धृते 'त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः। त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः।' इत्यस्मिन् श्लोके दण्डिनः त्रयः प्रबन्धाः कथिताः सन्ति, अथ च यद्यपि दण्डिनः तृतीयस्याः रचनायाः सम्बन्धे अधुनावधि पूर्णतः निश्चयः न जातः, किन्तु पुनरपि 'काव्यादर्शः', 'दशकुमारचरितम्' च इति द्वे रचने दण्डिनः कृतिरूपे प्रसिद्धे स्तः, अतः उक्तस्य श्लोकस्य परम्परायाश्च आधारे इदम् एव मन्तुम् उचितम् प्रतीयते यत् काव्यादर्शकारः आचार्यः दण्डी महाकविः दण्डी च एक एव पुरुषः अस्ति। फलतश्च दशकुमारचरितकारस्य महाकवेः दण्डिनः समयः ५०० ईसवीयवर्षस्य ८०० ईसवीयवर्षस्य च मध्ये अस्ति।

(इ) **दण्डिनः बाणात् पूर्ववर्तित्वम्**—यतः काव्यादर्शस्य 'अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः। दृष्टिरोधकरं यूनां यौवनप्रभवं तमः।' (२। १९७) इत्यस्मिन् पद्ये कादम्बर्याश्च 'केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम्' (शुकनासोपदेशः) इत्यस्मिन् वर्णने साम्यम् उपलभ्यते, अतः पीटर्सनः याकोबी च इमम् निष्कर्षम् प्राप्तवन्तौ यत् दण्डी बाणात् परवर्ती अस्ति। किन्तु दशकुमारचरितस्य प्रसादपूर्णा सरला शैली बाणस्य श्लेषगर्भितया शैल्या किञ्चिन्मात्रम् अपि प्रभाविता न प्रतीयते। यदि दण्डी बाणात् परवर्ती अभविष्यत् चेत्, तस्य शैल्याम् उद्भटस्य गद्यकाव्यकारस्य बाणस्य शैल्याः प्रभावः अवश्यम् एव अपतिष्यत्। एतदतिरिक्तम्, दशकुमारचरितस्य भौगोलिकेन वर्णनेन राजनैतिकेन चित्रणेन च अपि अयम् एव संकेतः प्राप्यते यत इयम् कृतिः महाराजात् हर्षवर्धनात् पूर्वकालीना अस्ति। अस्याम् दशायाम् इदम् अपि सम्भवम् प्रतीयते यत् काव्यादर्शस्य कादम्बर्याश्च उक्ते वर्णने कस्मिंश्चित् पूर्वकालीने एकस्मिन् एव रूढे वर्णने आधारिते स्याताम्, अथवा कादम्बर्या एव उक्तम् वर्णनम् काव्यादर्शस्य उक्ते वर्णने आधारितम् स्यात्।

अस्तु! इत्थम् दशकुमारचरितकारस्य महाकवेः दण्डिनः स्थितिकालः ६०० ईसवीयवर्षस्य समीपे प्रतीयते।

२—**जन्मस्थानम्**—काव्यादर्शस्य दशकुमारचरितस्य च वर्णनानाम् आधारे विद्वांसः इमम् निष्कर्षम् प्राप्तवन्तः यत् दण्डी दाक्षिणात्यः आसीत्, अथ च विदर्भदेशस्य निवासी आसीत्।

३—**रचनाः**—यथा च पूर्वम् उक्तम्, राजशेखरस्य 'त्रयो दण्डिप्रबन्धाश्च'

इत्यनेन कथनेन इदम् सूच्यते यत् दण्डी त्रीन् ग्रन्थान् रचितवान्। एषु 'काव्यादर्शः' 'दशकुमारचरितम्' च इति द्वौ तु उपलभ्येते, किन्तु तृतीयः कः, इति निश्चितम् नास्ति। केषाञ्चित् विदुषाम् कथनम् अस्ति यत् 'अवन्तिसुन्दरीकथा' दण्डिनः तृतीया रचना अस्ति, किन्तु अन्ये केचन विद्वाँसः इदम् न मन्यन्ते।

**४—दशकुमारचरितस्य परिचयः**—यद्यपि उक्तप्रकारेण दण्डी आचार्यः अपि अस्ति, अथ च कविः अपि अस्ति, किन्तु यतः तस्य कवित्वस्य एव चर्चा अत्र विवक्षिता वर्तते, अतः अत्र केवलम् तत्प्रणीतस्य प्रसिद्धस्य गद्यकाव्यस्य–दशकुमारचरितस्य–एव कश्चन परिचयः दीयते।

**(अ) स्वरूपम् परिमाणम् वा**—उपलब्धम् 'दशकुमारचरितम्' भागत्रये विभक्तम् अस्ति—पूर्वपीठिका, चरितम्, उत्तरपीठिका च। सर्वप्रथमम् पूर्वपीठिका अस्ति यस्याम् पञ्च उच्छ्वासाः सन्ति। तदनन्तरम् अष्टोच्छ्वासात्मकः चरितभागः अस्ति यश्च दशकुमारचरितस्य मुख्यः भागः अस्ति। अन्ते पञ्चपृष्ठात्मिका उत्तरपीठिका अस्ति। अस्मिन् भागत्रये विद्वद्भिः केवलम् मध्यवर्ती चरितभाग एव दण्डिनः प्रामाणिकी रचना मन्यते, पीठिकाद्वयम् च अन्यस्य कस्यचन परवर्तिनः लेखकस्य रचना मन्यते। तेषाम् अनुसारेण इदम् तथ्यम् भाषायाः शैल्याश्च दृष्टेः चरितभागस्य पीठिकाद्वयस्य च परस्परम् तुलनात्मकेन अध्ययनेन पूर्णतः स्पष्टम् भवति।

**(आ) विषयः**—दशकुमारचरिते, यथा च अस्य नाम्ना एव स्पष्टम् अस्ति, दशानाम् कुमाराणाम् चरितानि वर्णितानि सन्ति। अत्र मगधदेशस्य राज्ञः राजहंसस्य पुत्रः राजवाहनः, मिथिलानरेशस्य प्रहारवर्मणः पुत्रौ अपहारवर्मा उपहारवर्मा च, मगधनरेशस्य राजहंसस्य विभिन्नानाम् मन्त्रिणाम् पुत्राः भ्रातृव्याश्च सोमदत्तः, पुष्पोद्भवः, अर्थपालः, प्रमतिः, मित्रगुप्तः, मन्त्रगुप्तः, विश्रुतश्च, इत्येतेषाम् दशानाम् कुमाराणाम् चरितानाम् वर्णनम् अस्ति।

**५—कवित्वम्—(अ) यथार्थचित्रणम्**—दण्डिनः कवित्वस्य प्रामाणिकरूपेण प्रकाशकम् एकमात्रम् 'दशकुमारचरितम्' अस्ति। यथा च अस्य दर्शनेन स्पष्टम् अस्ति, अस्य आधारे इदम् कथयितुम् शक्यते यत् महाकविः दण्डी एकः यथार्थवादी कथाकारः गद्यकविः अस्ति। 'दशकुमारचरितम्' एकम् यथार्थचित्रणपरम् कथात्मकम् गद्यकाव्यम् अस्ति। यथार्थस्य यादृशम् चित्रणम् अस्मिन् गद्यकाव्ये प्राप्यते, तादृशम् संस्कृतस्य अन्यस्मिन् कस्मिँश्चित् प्राचीने गद्यकाव्ये न उपलभ्यते। अस्मिन् तत्कालीनस्य समाजस्य यथातथम् चित्रणम् कृतम् वर्तते। अस्मिन् वर्णितानि सर्वाणि पात्राणि सजीवानि, अथ च स्वकीयैः गुणदोषैः युक्तानि सन्ति यथार्थस्य धरातले विचरणम् कुर्वन्ति वर्तन्ते। सर्वाणि पात्राणि वास्तविकतया स्वाभाविकतया च ओतप्रोतानि सन्ति। वस्तुतः दशकुमारचरिते प्रस्तुतम् चरित्रचित्रणम् एकम् एतादृशम् यथार्थवादि चरित्रचित्रणम् अस्ति यस्य रूपे तत्कालीनस्य

समाजस्य सर्वेषाम् अपि वर्गाणाम् एकम् जीवज्जागृतम् यथार्थम् चित्रम् स्पष्टतः उपस्थितम् जातम् अस्ति । अस्मिन् चित्रे तपस्वी, ब्राह्मणः, भिक्षुः, भिक्षुणी, राजा, राज्ञी, राजकुमारः, राजकुमारी, ऐन्द्रजालिकः, वेश्या, कुट्टिनी, चौरः, जारः, लम्पटः, कपटी, दम्भी च इत्यादीनाम् प्रायः सर्वेषाम् अपि वर्गाणाम् प्रतिनिधीनाम् सम्मेलनात् हेतोः एका आकर्षिका बहुरूपता स्वत एव समागता अस्ति । यद्यपि दशकुमारचरितस्य कथानके अपि कतिपयानाम् असंभवरूपे प्रतीयमानानाम् अलौकिकघटनानाम् समावेशः अस्ति, पुनरपि तस्मिन् एतादृशम् यथार्थम् अस्ति यत् अस्यै कृतये संस्कृतस्य अन्येभ्यः गद्यकाव्येभ्यः पृथक् विशिष्टम् स्थानम् ददाति ।

**(आ) वर्णन-शैली**—दशकुमारचरिते व्यवहृता महाकवेः दण्डिनः वर्णनशैली अपि स्वकीयस्य कुतूहलपूर्णस्य यथार्थस्य च कथावस्तुनः अनुरूपम् एव अतीव सरला, सरसा, मनोरमा च अस्ति । तस्याम् क्लिष्टतायाः दर्शनम् न भवति । एतदतिरिक्तम्, वर्णने सर्वत्र प्रवाहः प्राञ्जलता च अस्ति, तत्र एतादृशः गत्यवरोधः नास्ति यश्च संस्कृतस्य प्राचीनेषु गद्यकाव्येषु प्रायः प्राप्यते । अत्र अलङ्काराणाम् प्रयोगः अपि स्वाभाविकः अस्ति । भाषा अपि सरला, सानुप्रासा, विषयानुकूला, व्याकरणसम्मता च सती ललितपदावलीयुक्ता वर्तते । पदलालित्यम् तु 'दण्डिनः पदलालित्यम्' इति प्रकारेण भारतीयसमालोचकैः प्रशंसितम् एव वर्तते ।

**(इ) रसाभिव्यक्तिः**—दशकुमारचरिते यद्यपि विभिन्नानाम् रसानाम् अभिव्यञ्जना जाता अस्ति, किन्तु तत्र मुख्यतः अभिव्यक्तः रसः अद्भुत एव अस्ति । अत्र पाठकस्य पदे-पदे अस्य रसस्य अनुभूतिः भवति ।

अस्तु ! उक्तप्रकारेण 'दशकुमारचरितम्' स्वकथानकस्य कुतूहलपूर्णायाः यथार्थतायाः, परिस्थितीनाम् विविधतायाः जटिलतायाश्च, पात्राणाम् सजीवतायाः बहुरूपतायाश्च, वर्णन-शैल्याश्च सरलतायाः रोचकतायाश्च हेतोः समन्वितरूपे एकः उपन्यास इव आनन्दम् प्रददाति । आसाम् विशेषतानाम् हेतोश्च तत् संस्कृतगद्यसाहित्ये स्वकीयम् एकम् विशिष्टम् स्थानम् दधत् स्वस्रष्टारम् महाकविम् दण्डिनम् संस्कृतगद्यकारेषु महत्त्वपूर्णे स्थाने प्रतिष्ठतम् करोति ।

वस्तुतः सरलस्य, सुबोधस्य, ललितस्य च संस्कृतगद्यस्य लेखकरूपे महाकविः दण्डी अनुपमः अस्ति । इदम् एव कारणम् यत् अनेकैः भारतीयैः समालोचकैः तस्य बहुशः प्रशंसा कृता । एषु एकेन कथितम् अस्ति यत् दण्डी एव एकमात्रम् कविः अस्ति—'कविर्दडी कविर्दण्डी कविर्दण्डी न संशयः' । एकेन अन्येन समालोचकेन कथितम् अस्ति यत् दण्डी वाल्मीकिना व्यासेन च सदृशः कविः अस्ति—

जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ।।'

## ५३

# महाकविः बाणभट्टः

१—परिचयः—संस्कृतस्य कथाकारेषु गद्यकविषु महाकवेः वाणभट्टस्य सर्वोत्कृष्टम् स्थानम् अस्ति। अस्य कृतयः संस्कृतगद्यकाव्यस्य चरमोत्कर्षम् प्रदर्शयन्ति। सौभाग्यस्य विषयः अयम् अस्ति यत् अस्य जीवनवृत्तम् स्थितिकालश्च संस्कृतस्य अन्येषाम् अनेकेषाम् साहित्यकाराणाम् इव अविज्ञातौ विवादग्रस्तौ वा न स्तः, अपि तु अधिकांशतया निश्चितरूपेण ज्ञातौ स्तः। अयम् स्वयम् स्वकीयायाः सर्वप्रथमायाः गद्यकृतेः—हर्षचरितस्य—प्रारम्भिके उच्छासत्रये स्वकीयम् परिचयम् दत्तवान् अस्ति, येन ज्ञायते यत् अयम् वत्सगोत्रोत्पन्नः, अथ च संभवतः सारस्वतः ब्राह्मणः आसीत्। कादम्बर्याम् दत्तेन परिचयेन ज्ञायते यत् अस्य एकः पूर्वजः 'कुबेर' नामा आसीत्, यः संस्कृतस्य प्रकाण्डः विद्वान् आसीत्। कुबेरस्य पौत्रः 'अर्थपतिः' वाणस्य पितामहः आसीत्। वाणस्य पितुः नाम 'चित्रभानुः', मातुश्च नाम 'राज्यदेवी' आसीत्।

महाकविः बाणः बाल्यकाले एव मातृपितृरहितत्वात् अभिभावकविहीनः जातः। फलतः अस्य यौवनकालः व्यवस्थितरूपेण व्यतीतः भवितुम् न अपारयत्। अयम् भ्रमणशीलः जातः, भ्रमणे च अनेन अनेकविधानाम् जनानाम् सम्पर्कः प्राप्तः, येन अस्य पर्याप्तः सांसारिकः अनुभवः जातः। प्रवासात् गृहम् प्रत्यावृत्तः सन् यदा अयम् महाराजस्य हर्षस्य राजसभाम् प्राप्तवान्, तदा हर्षः इमम् उपेक्षापूर्णया दृष्ट्या दृष्ट्वा अस्य विषये 'महानयं भुजङ्गः' इति कथितवान्, येन क्षुब्धः सन् अनेन अतीव विनम्रभावेन सह स्वकीयस्य उच्चस्य विद्याध्ययनस्य परिचयः दत्तः, अथ च भविष्यति पूर्णतः सदाचरणपरम् नवीनम् जीवनम् यापयितुम् सङ्कल्पः कृतः। एतदनन्तरम्, कतिषुचित् दिनेषु एव अस्य चरित्रस्य पाण्डित्यस्य च प्रभावः रूढः जातः, फलतश्च महाराजेन हर्षेण अयम् 'वश्यवाणीकविचक्रवर्ती' इति उपाधिना विभूषितः। किञ्चित् अनन्तरम् अनेन 'हर्षचरितस्य' रचना प्रारब्धा। एतदवधि एव वाणस्य जीवनवृत्तम् उपलभ्यते।

विदुषाम् अनुमानम् अस्ति यत् हर्षस्य मृत्योः (६४८ ई०) पश्चात् बाणः कान्यकुब्जात् स्वग्रामम् 'प्रीतिकूटम्' प्रत्यावृत्तः, यत्र अयम् स्वदेहावसानपर्यन्तम् निवसन् साहित्यसाधनारतः अभवत्। स्वस्य चरितनायकस्य महाराजस्य हर्षस्य मृत्योः कारणात् एव संभवतः बाणः स्वकीयम् ग्रन्थम्--हर्षचरितम्—अपूर्णम् एव त्यक्तवान्।

२—स्थितिकालः—यतः इदम् एकम् सुनिश्चितम् तथ्यम् अस्ति यत् बाणः महाराजस्य हर्षस्य सभापण्डितः आसीत्, अतः अस्य स्थितिकालः सारल्येन एव निश्चितः कर्तुम् शक्यते। ऐतिहासिकानाम् अनुसारेण हर्षस्य राज्याभिषेकः ६०६ ईसवीये वर्षे सम्पन्नः अभवत्, अथ च तस्य मृत्युः ६४८ ईसवीये वर्षे अभवत्। एवम्, हर्षस्य समये वर्तमानत्वात् बाणस्य स्थितिकालः ईसवीयसप्तमशतकस्य पूर्वार्द्धः सिद्धयति। बाणेन येषाम् साहित्यकाराणाम् साहित्यिकग्रन्थानाम् च स्वरचनासु निर्देशः कृतः अस्ति, तेषु कश्चन अपि सप्तमात् शतकात् परवर्ती नास्ति। अपरतः, आचार्यवामनेन (८०० ई०) स्वकीयायाम् 'काव्यालङ्कारसूत्रवृत्तौ' कादम्बर्याः 'अनुकरोति भगवतो नारायणस्य' इति उद्धरणम् दत्तम् अस्ति, अथ च पश्चाद्वर्तिभिः आनन्दवर्धनधनञ्जयादिभिः अनेकैः आचार्यैः कविभिश्च बाणेन तत्कृतिभिः वा स्वीयः परिचयः प्रदर्शितः अस्ति। इत्थम् बाणस्य महाराजस्य हर्षस्य सभापण्डितत्वात् अथ च सहैव अन्येभ्यः अन्तरङ्गेभ्यः बहिरङ्गेभ्यश्च प्रमाणेभ्यः प्राप्तस्य आधारस्य वर्तमानत्वात् अस्मिन् मते का अपि विप्रतिपत्तिः न संभाव्यते यत् बाणस्य स्थितिकालः ईसवीयसप्तमशतकस्य पूर्वार्द्धः अस्ति।

३—रचनाः—महाकवेः बाणस्य तिस्रः रचनाः सर्वसम्मतरूपेण प्रामाणिक्यः मन्यन्ते—हर्षचरितम्, कादम्बरी, चण्डीशतकम् च। एतदतिरिक्तम्, 'पार्वतीपरिणय' नामकम् नाटकम् अपि कैश्चित् विद्वद्भिः बाणस्य रचना मन्यते, किन्तु अन्ये विद्वांसः अनया मान्यतया सहमताः न सन्ति। 'चण्डीशतकम्' एका पद्यात्मिका रचना अस्ति यस्याम् पद्यशतकेन भगवत्याः, दुर्गायाः स्तुतिः कृता वर्तते। अन्ये द्वे रचने गद्यकृती स्तः, ययोः 'हर्षचरितम्' एकः आख्यायिकाग्रन्थः अस्ति, 'कादम्बरी' च एकः कथाग्रन्थः अस्ति। 'हर्षचरिते' अष्ट उच्छ्वासाः सन्ति, येषाम् प्रारम्भिकेषु त्रिषु बाणस्य आत्मकथा अस्ति, अवशिष्टेषु च पञ्चसु उच्छ्वासेषु महाराजस्य हर्षस्य जीवनचरितम् अस्ति, 'कादम्बरी' एका कविकल्पनाप्रसूता प्रेमकथा अस्ति। इयम् 'पूर्वभागः' 'उत्तरभागश्च' इति नामभ्याम् द्वयोः भागयोः विभक्ता अस्ति। कादम्बर्याः समाप्तेः पूर्वम् एव बाणः दिवङ्गतः अभवत्, अतः तस्य पुत्रेण अस्याः समाप्तिः कृता। अस्याः सः भागः यः बाणस्य रचना अस्ति, 'पूर्वभागः' अस्ति, अवशिष्टश्च भागः य तत्पुत्रस्य रचना अस्ति, 'उत्तरभागः' अस्ति।

**४—कवित्वम् (अ) गद्यशैली**—महाकविः बाणः संस्कृतगद्यकाव्यस्य सम्राट् अस्ति। अस्य गद्यशैल्याः आदर्शः अस्ति—

'नवोऽर्थो जातिरग्राम्या श्लेषोऽश्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ॥

(हर्षचरितम्)

यद्यपि बाणेन स्वयम् एव अयम् आदर्शः दुर्लभः कथितः, तथापि सः स्वकृतिषु अस्य आदर्शस्य यथाशक्ति पालनस्य प्रयत्नम् कृतवान्, अथ च अयम् एव आदर्शः तत्प्रयुक्तायाः गद्यशैल्याः स्वरूपस्य परिचयम् ददाति। बाणस्य गद्यशैली गद्यरीतिः वा 'पाञ्चाली' अस्ति, यस्याः स्वरूपम् अस्ति—'शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरिष्यते।' सरस्वतीकण्ठाभरण-कारेण भोजेन पाञ्चालीरीतेः उक्तस्य स्वरूपस्य परिचयम् ददता 'बाणोक्तिषु च सा यदि' इति रूपे कथितम् अस्ति यत् बाणस्य उक्तिषु पाञ्चाली रीतिः एव अस्ति। वस्तुतः, बाणेन स्वकृतिषु शब्दस्य अर्थस्य च अपूर्वम् सामञ्ज-स्यम् प्रस्तुतम्। तस्य कृतिषु प्रत्येकम् स्थले भाषा विषयानुवर्तिनी अस्ति; शब्दान्तरेषु, तत्र अनुभूतिः अभिव्यक्तिश्च इति उभे अपि परस्परम् स्नेहसिक्ते भगिन्यौ इव एकाकारे जाते स्तः। तत्र यदि विकटानाम्, कठोराणाम्, भयङ्क-राणाम् वा पदार्थानाम् वर्णनम् प्रस्तुतम् अस्ति चेत् कवेः लेखन्या स्वतः एव विकटपदावल्याः निःसरणम् प्रारब्धम् भवति, अथ च यदि कोमलपदार्थानाम् वर्णनम् प्रसक्तम् चेत् तत् स्वेन सह कोमलपदावलीम् गृहीत्वा एव समागतम् अस्ति। एतदतिरिक्तम्, बाणस्य कृतिषु समग्ररूपे दृष्टासु सतीषु एव स्पष्टम् भवति यत् यद्यपि सः यत्र-तत्र 'वैदर्भी' 'गौडी' च इति रीतिद्वयस्य अपि प्रयोगम् कृतवान्, किन्तु मुख्यतः सः पाञ्चालीम् रीतिम् एव आश्रित-वान् यस्याम् वैदर्भ्याम् इव न तु नितान्तम् श्लेषराहित्यम् प्रासादिकता च भवति, न च गौड्याम् इव क्लिष्टानाम् श्लेषानाम्, समासानाम्, पदानाम् च एव बाहुल्यम् भवति, अपि तु मध्यममार्गस्य अनुसरणम् क्रियते।

**(आ) अलङ्कारप्रयोगः**—बाणेन समुचितरूपेण विन्यस्ताः विविधाः अलङ्काराः तस्य वर्णन-शैल्याः कृते एकाम् अपूर्वाम् रमणीयताम् प्रददति। कतिपयानि अल्पानि स्थलानि त्यक्त्वा, तत्प्रयुक्तेषु अलङ्कारेषु एतादृशी क्लिष्टता नास्ति या पाठकान् व्यथयेत्। तस्य अलंकराणाम् चमत्कारः सरलतया पाठकानाम् गम्यः अस्ति। पाठकाः तदलंकारैः चमत्कृताः सन्तः तेषाम् रमणीयतायाम् तल्लीनाः भूत्वा आनन्दम् एव अनुभवन्ति।

**(इ) प्रकृतिचित्रणम्**—बाणेन प्रस्तुतम् प्रकृतिचित्रणम् अतीव विशदम् अस्ति। यद्यपि तत् प्रायः अलंकृतरूपे एव अस्ति, पुनरपि तत् अतीव सजी-वम् यथार्थम् च अस्ति, अथ च तस्य सूक्ष्मनिरीक्षणशक्तिम् प्रकटयति। बाणेन प्रकृतेः रम्यम् कठोरम् च इति उभयोः अपि रूपयोः चित्रणम् साफ-

ल्येन सह कृतम् अस्ति । इयती वार्ता अवश्यम् अस्ति यत् सः प्रकृतिवर्णनेन सह स्वकीयम् शास्त्रीयम् पौराणिकम् च ज्ञानम् प्रकटयितुम् लोभम् संवरीतुम् न अशक्नोत्, येन प्रकृतेः वास्तविकः बिम्बः पाठकस्य समक्षम् उपस्थातुम् बाधाम् प्राप्तवान् ।

(ई) वस्तुरूपचरित्राणाम् चित्रणम्–बाणेन प्रस्तुतम् वस्तुरूपचरित्राणाम् चित्रणम् अपि अपूर्वम् अस्ति । उज्जयिनी नगरी, शुकनास-प्रासादः, चण्डिकामन्दिरम् च इत्यादीनाम् वर्णनम् इयत्या सूक्ष्मतया सह कृतम् वर्तते यत् एषाम् वस्तूनाम् एकम् भव्यम् रूपम् पाठकस्य समक्षम् उपस्थितम् जायते । एवमेव महाश्वेता, कादम्बरी च इत्यादीनाम् रमणीनाम् रूपवर्णनम् अपि अतीव सूक्ष्मतया सह कृतम् वर्तते । इयती वार्ता अवश्यम् अस्ति यत् इमानि वर्णनानि अनपेक्षितरूपेण विस्तृतत्वात्, अलंकृतत्वात् अतिरञ्जितत्वात् च कथानकस्य प्रवाहम् किञ्चित् शिथिलयन्ति ।

बाणेन स्वकीयानाम् पात्राणाम् चरित्रचित्रणे, अथ च तेषाम् सूक्ष्मातिसूक्ष्मानाम् अनुभूतीनाम् अभिव्यञ्जने अपि किञ्चिदपि नैयून्यम् न कृतम् ।

(उ) रसाभिव्यक्तिः—बाणस्य कृतिषु रसाभिव्यक्तिः अपि अतीव प्रभावोत्पादकरूपे कृता वर्तते । शृङ्गाररसाभिव्यञ्जने तु तेन अपूर्वम् साफल्यम् प्राप्तम् । कादम्बर्याम् कृतम् महाश्वेताकादम्बरीपुण्डरीकादीनाम् प्रेमावस्थदशायाः चित्रणम् शृङ्गाररसाभिव्यञ्जनस्य अपूर्वम् निदर्शनम् अस्ति ।

(५)—कवित्वस्य प्राधान्येन प्रयोगः—यद्यपि बाणः कथाकारः अस्ति, किन्तु तेन उक्तम् सर्वविधम् वर्णनम् केनचित् आधुनिकेन कथाकरेण इव सरलसाधारणरूपे न कृतम्, अपि तु स्वसमयप्रचलितायाः मान्यतायाः अनुसारेण अतीव कवित्वपूर्णे रूपे कृतम् अस्ति । स्वकथायाः अपेक्षया तेन स्वकवित्वाय एव सर्वत्र अधिकतरम् स्थानम् दत्तम्, अत एव च च तस्य गद्यकृती केवलम् आख्यायिके कथे वा न भूत्वा गद्यकाव्यकोटौ समाविशतः । वस्तुतः तस्य गद्यकृत्योः यत् महत्त्वम् अस्ति तत् तयोः कथानक-चरित्रचित्रण-वस्तुविन्यासादीनाम् हेतोः नास्ति, अपि तु कवित्वपूर्णस्य वर्णनस्य रसमयस्य प्रवाहस्य च हेतोः अस्ति । कवित्वेन सरसतया च तस्य गद्यकृती ओत-प्रोते स्तः, सहैव च ते भाषाकौशलेन कल्पनावैचित्र्येण च द्योतमाने स्तः, अथ च स्वकीयानाम् एतेषाम् गुणानाम् हेतोः ते अपूर्वाम् रमणीयताम् प्राप्य सहृदयानाम् कण्ठहाररूपे वर्तेते ।

बाणस्य कवित्वमय्याः कल्पनायाः परिधेः कश्चन अपि विषयः, भावः, अभिव्यक्तेः रूपम् च वहिः स्थातुम् न अशक्नोत् । इदमेव कारणम् यत् सहृदयः समालोचकः 'बाणोच्छिष्टं जगत्सर्वम्' इति घोषयितुम् विवशः अभवत् । बाणस्य विषये श्रीचन्द्रदेवेन इदम् उचितम् एव उक्तम् यत्—

'श्लेषे केचन शब्दगुम्फविषये केचिद् रसे चापरेऽ–
लङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने ।
आः ! सर्वत्र गम्भीरधीरकविताविन्ध्याटवीचातुरी–
संचारीकविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥'

अस्तु ! उक्तप्रकारेण महाकविः बाणः संस्कृत-गद्यकवीनाम् सम्राट् अस्ति, अथ च तस्य गद्यकृती संस्कृतस्य सर्वोत्कृष्टे गद्यकाव्ये स्तः। 'गद्यं कवीनां निकषं वदन्ति' इत्युक्तयनुसारेण गद्यम् कवित्वस्य निकषः अस्ति, अथ च अस्मिन् निकषे कषितम् सत् गद्यकवेः बाणस्य कवित्वम् उत्तरोत्तरम् उज्ज्वलात् उज्ज्वलतरम् एव भवत् भासते। केषाञ्चित् पाश्चात्त्यानाम् आलोचकानाम् बाणस्य वर्णनशैली अवश्यम् किञ्चित् कष्टकरी प्रतीता, यतो हि ते आधुनिकसमालोचनायाः सिद्धान्तानाम् निकषे बाणस्य शैलीम् कषितवन्तः, यत् च उचितम् नास्ति। कश्चन अपि साहित्यकारः स्वसमयमान्यताभिः आदर्शैश्च अप्रभावितः स्थातुम् न शक्नोति, अतः यदि पाश्चात्त्याः आलोचकाः तत्कालीनानाम् मान्यतानाम् प्रकाशे बाणस्य शैलीम् अद्रक्ष्यन् चेत् तत्र ते संभवतः काञ्चन कष्टकरीम् वार्ताम् न अन्वभविष्यन्। बाणस्य समये अलंकृता गद्यशैली एव उत्कृष्टा अमन्यत, अथ च 'ओजः समासभूयस्त्वमतेद् गद्यस्य जीवितम्' इत्यादिरूपे समास-बाहुल्यम् एव गद्यस्य प्राणः अमन्यत। एतेषाम् एव आदर्शानाम् पालनम् बाणः अपि स्वसमयापेक्षया स्वभावतः कृतवान्, अतश्च कामम् पाश्चात्त्यानाम् आलोचकानाम् तस्य शैली कष्टकरी प्रतीता स्यात्, किन्तु एभिः आदर्शैः परिचिताः भारतीयाः समालोचकाः बाणस्य वाणीम् सर्वदा एतादृशैः शब्दैः प्रशंसितवन्तः यत्—

'रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ॥'

## ५४

# महाकविः माघः

१—परिचयः—प्रसिद्धस्य 'शिशुपालवध' नामकस्य महाकाव्यस्य प्रणेता महाकविः माघः संस्कृतमहाकाव्यक्षेत्रे कालिदासात् अनन्तरम् प्रमुखम् स्थानम् धत्ते। अयम् महाकविः राजस्थानीयः आसीत्। प्राप्तैः प्रमाणैः सूच्यते यत् अयम् राजस्थानस्य 'भीनमाल' नामकस्य दक्षिणीयपार्वत्य-प्रदेशस्य निवासी आसीत्। अयम् पार्वत्यप्रदेशः 'डूंगरपुर-बाँसवाड़ा' इति नाम्ना अपि अभिधीयते। विदुषाम् विचारः अस्ति यत् अयम् महाकविः संभवतः श्रीमाली ब्राह्मणः आसीत्। एतत्कृतेन-उत्तेजकेन विलासवर्णनेन विद्वद्भिः अनुमानम् कृतम् अस्ति यत् अयम् धनाढ्यः आसीत्, अथ च अस्य शैशवम् यौवनम् च विलासपूर्णे वातावरणे व्यतीतः अभवत्। सहैव विदुषाम् इयम् अपि मान्यता अस्ति यत् अयम् राजसभासद् कविः आसीत्। अनेन कविना स्वविषये केवलम् इयत् एव कथितम् अस्ति यत् तस्य पितुः नाग दत्तकः, पितामहस्य च नाम सुप्रभदेवः आसीत्, अथ च तस्य पितामहः सुप्रभदेवः 'धर्मनाभ' नामकस्य 'वर्मलात' नामकस्य वा कस्यचन राज्ञः मन्त्री आसीत्। माघस्य इयतोऽधिकम् जीवनवृत्तम् ज्ञातम् नास्ति। यद्यपि तस्य चर्चा 'भोजप्रबन्धे' भोजसमकालीनरूपे वर्तते, किन्तु यतः सः भोजसमकालीनः मन्तुम् न शक्यते, अतः तद्विषयकस्य भोजप्रबन्धवर्णनस्य प्रामाणिकता स्वीकरणीया न प्रतीयते। तेन वर्णनेन इयान् संकेतः प्राप्येत चेत् सः प्राप्तुम् शक्यते यत् महाकविः माघः उदारः स्वाभिमानी च आसीत्। यथा च तस्य काव्यस्य अनुशीलनेन ज्ञायते, सः विपुलेन शास्त्रीयज्ञानेन व्यावहारिकज्ञानेन च सम्पन्नः आसीत्।

२—स्थितिकालः—महाकवेः माघस्य स्थितिकालः विवादास्पदः अस्ति, किन्तु इयत् निश्चितम् वर्तते यत् तस्य कालस्य उत्तरसीमा ८०० ईसवीय-वर्षात् अनन्तरम् नास्ति, यतो हि राष्ट्रकूटेन राज्ञा नृपतुङ्गेन (८१४ ई०) स्वकीये कन्नडभाषाग्रन्थे 'कविराजमार्गे' माघम् कालिदाससमकक्षम स्वीकृत्य तस्य प्रशंसा कृता अस्ति, येन स्पष्टम् भवति यत् नृपतुङ्गस्य समये

(नवमशतकस्य पूर्वार्द्धे) माघः साहित्यजगति प्रतिष्ठितपदम् आरूढः आसीत्। एतदनन्तरम् तु तस्य निर्देशः विभिन्नेषु ग्रन्थेषु प्राप्यते एव। आनन्दवर्धनेन (८५० ई०) स्वकीये 'ध्वन्यालोके' शिशुपालवधस्य पद्यद्वयम् (३।५३;५।२६) उद्धृतम् अस्ति, सोमदेवेन (९५९ ई०) च स्वकीये 'यशस्तिलक' नामके चम्पूग्रन्थे माघस्य उल्लेखः कृतः अस्ति।

माघस्य स्थितिकालस्य पूर्वसीमा ६५० ईसवीयवर्षात् पूर्वम् न गच्छति, यतो हि तेन शिशुपालवधे 'अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना। शब्दविद्येव नो भाति राजनीतिरपस्पशा।' (२।११२) इतिप्रकारेण वृत्तेः–काशिकावृत्तेः–निर्देशः कृतः अस्ति, काशिकावृत्तेश्च रचना वामनजयादित्याभ्याम् ६५० ईसवीयवर्षे कृता आसीत्। अस्मिन् श्लोके न्यासस्य अपि निर्देशः अस्ति। अत्र निर्दिष्टः अयम् न्यासः कः ग्रन्थविशेषः अस्ति, इत्यत्र विदुषाम् वैमत्यम् वर्तते। केषाचित् मतम् अस्ति यत् अत्र काशिकावृत्तेः एव जिनेन्द्रबुद्धिविरचितस्य 'न्यासस्य' (७०० ईसवीयवर्षस्य समीपे) निर्देशः अस्ति, यदा च केषाञ्चित् अन्येषाम् मतम् अस्ति यत्, यथा च बाणेन स्वकीये हर्षचरिते 'कृतगुरुपदन्यासा लोक इव व्याकरणेऽपि' इतिरूपे कृतेन न्यासस्य उल्लेखेन ज्ञायते, बाणात् फलतश्च जिनेन्द्रबुद्धेः पूर्वम् अपि केनचित् अन्येन प्रणीतस्य 'न्यासस्य' अस्तित्वम् आसीत्, यस्यैव च अत्रापि 'न्यास' शब्देन निर्देशः मन्तुम् शक्यते।

माघस्य पितामहस्य सुप्रभदेवस्य आश्रयदातुः राज्ञः वर्मलातस्य ६२५ ईसवीयवर्षस्य एकेन शिलालेखेन ज्ञायते यत् वर्मलातस्य तन्मन्त्रिणः सुप्रभदेवस्य च कालः ६२५ ईसवीयवर्षस्य समीपे आसीत्, अतः सुप्रभदेवस्य पौत्रस्य माघस्य स्थितिकालः ६५० ईसवीयवर्षस्य ७०० ईसवीयवर्षस्य च मध्ये एव सिद्धः भवति। यतो हि अस्य प्रमाणस्य शिशुपालवधस्य उक्तश्लोके प्रस्तुतस्य प्रमाणस्य च, यदि तत्र 'न्यास' शब्देन जिनेन्द्रबुद्धिरचितस्य 'न्यासस्य' निर्देशम् न मत्वा तत्पूर्ववर्तिनः कस्यचित् अन्यस्य न्यासस्य निर्देशः मन्यते, सामञ्जस्यम् अपि स्थितम् भवति, अतः इदम् एव मन्तुम् उचितम् प्रतीयते यत् तस्मिन् श्लोके 'न्यास' शब्देन जिनेन्द्रबुद्धिरचितस्य न्यासस्य निर्देशः नास्ति, अथ च फलतः माघस्य स्थितिकालः प्रायः उक्त एव (५५०-७०० ई०) अस्ति।

३–रचना–महाकवेः माघस्य केवलम् एका एव रचना–शिशुपालवधम्–प्राप्यते। यतः कतिपयेषु सूक्तिसंग्रहेषु कानिचित् एतादृशानि पद्यानि अपि माघप्रणीतरूपे संगृहीतानि उपलभ्यन्ते यानि शिशुपालवधे न सन्ति, अतः इदम् अपि संभाव्यते यत् माघस्य अन्या अपि कापि रचना स्यात् या इदानीम् न उपलभ्यते।

'शिशुपालवधम्' विंशतिसर्गात्मकम् महाकाव्यम् अस्ति। अस्मिन् १६५० श्लोकाः सन्ति। अस्य कथानकम् महाभारतात् गृहीतम् अस्ति,

यच्च संक्षिप्तरूपे इत्थम् अस्ति यत् देवर्षिः नारदः शिशुपालस्य अत्याचारेभ्यः भीतस्य इन्द्रस्य सन्देशम् गृहीत्वा भगवन्तम् श्रीकृष्णम् समागच्छति, तस्मै च इन्द्रस्य इमम् सन्देशम् अभिदधाति यत् सः (इन्द्रः) शिशुपालस्य अत्याचारेभ्यः भीतः अस्ति, अतः सः (भगवान् श्रीकृष्णः) शिशुपालम् हत्वा तम् (इन्द्रम्) निरापदम् कुर्यात्। नारदे निवृत्ते सति श्रीकृष्णः बलरामेण उद्धवेन च सह मन्त्रणाम् करोति यत् एकतस्तु शिशुपालस्य वधः देवानाम् इन्द्रस्य च रक्षार्थम् आवश्यकः वर्तते, अपरतश्च यतः तेन पाण्डवेभ्यः राजसूययज्ञे सम्मेलनाय निमन्त्रणम् अपि प्राप्तम्, अतः अस्मिन् एव समये तत्र अपि गमनम् आवश्यकम् वर्तते; अस्मिन् कार्यद्वैविध्ये उपस्थिते सति किम् विधेयम्। निर्णयः भवति यत् पूर्वम् तु इन्द्रप्रस्थम् गत्वा सर्वैः राजसूययज्ञे सम्मिलितैः भाव्यम्। भगवान् श्रीकृष्णः सपरिकरः इन्द्रप्रस्थम् प्रति प्रस्थानम् करोति। मार्गे रात्रौ जातायाम् रैवतकपर्वतस्य समीपे विश्रामम् कृत्वा पश्चात् इन्द्रप्रस्थम् प्राप्नोति। तत्र राजसूययज्ञे यजमानः युधिष्ठिरः भगवतः श्रीकृष्णस्य अग्रिमाम् पूजाम् करोति, येन शिशुपालः रुष्टः सन् युद्धाय प्रस्तुतः भवति। भगवतः श्रीकृष्णस्य शिशुपालस्य च सेनयोः मध्ये युद्धम् भवति, यत्र श्रीकृष्णः स्वकीयेन सुदर्शनेन चक्रेण शिशुपालस्य शिरश्छेदनम् करोति। शिशुपालस्य तेजः श्रीकृष्णे लीनम् भवति।

इदम् संक्षिप्तम् कथानकम् आश्रित्य शिशुपालवधस्य महाकाव्यस्य रचना जाता अस्ति, यत्र विविधैः विस्तृतैः वर्णनैः विशालत्वम् जातम् अस्ति।

४—भारवेः प्रभावः—यद्यपि माघस्य उपरि तत्पूर्ववर्तिनाम् अन्येषाम् अपि कालिदासादीनाम् प्रभावः अस्ति, किन्तु तस्य उपरि सर्वाधिकः प्रभावः भारवेः अस्ति। माघस्य उपरि भारवेः विविधरूपः गम्भीरः व्यापकश्च प्रभावः अस्ति। सर्वप्रथमम् शिशपालवधस्य रचनायाः आदर्श एव भारवेः किरातार्जुनीयम् अस्ति। किरातार्जुनीये शिशुपालवधे च विविधम् साम्यम् वर्तते। अनयोः उभयोः महाकाव्ययोः कथानकयोः मूलस्रोतः महाभारतम् अस्ति। उभयोः प्रारम्भः 'श्री' शब्देन भवति। किरातार्जुनीयस्य प्रत्येकम् सर्गस्य अन्तः 'लक्ष्मी' शब्देन, अथ च शिशुपालवधस्य प्रत्येकम् सर्गस्य अन्तिमे पद्ये 'लक्ष्मी' पर्यायस्य 'श्री' शब्दस्य प्रयोगः अस्ति। उभयोः प्रथमे सर्गे सन्देशस्य कथनम् अस्ति, अथ च द्वितीये सर्गे राजनीतिविषयकः सम्वादः अस्ति। उभयोः काव्ययोः कश्चन ऋषिः नायकस्य पथप्रदर्शनम् करोति। उभयोः काव्ययोः यस्य कस्यचित् पर्वतस्य यत्किञ्चित्प्रकारकम् आश्रयणम् कृतम् वर्तते। उभयोश्च यस्य कस्यचित् पर्वतस्य सालङ्कारम् वर्णनम् अस्ति। उभयोः काव्ययोः दूतप्रेषणम् अस्ति, उभयोश्च परस्परविरुद्धपक्षधरयोः कयोश्चन द्वयोः मध्ये विवादस्य वर्णनम् अस्ति। उभयोः काव्ययोः चित्रबन्धैः युद्धवर्णनम् अस्ति। उभयोः काव्ययोः द्वन्द्वयुद्धात् पूर्वम् सेनयोः युद्धम् भवति।

उभयोः काव्ययोः अप्सरसाम् विहारस्य, सन्ध्यायाः रात्रेः, चन्द्रोदयस्य, ऋतूनाम्, यात्रायाः, अन्येषाम् च एतादृशानाम् तथ्यानाम्, व्यापाराणाम् दृश्यानाम् वा यथास्थानम् वर्णनम् अस्ति। एतदतिरिक्तम्, उभयोः काव्ययोः वर्णन-क्रमे अपि साम्यम् उपलभ्यते।

माघेन विभिन्नेषु स्थलेषु भारवेः भावाः अपि गृहीताः सन्ति, अथ च तेन काव्यशैली तु प्रायः भारविप्रवर्तिता एव अनुसृता अस्ति। इत्थम् माघः भारविणा गम्भीररूपेण व्यापकरूपेण च प्रभावितः अस्ति।

५—**कवित्वम्**—यतो हि उक्तप्रकारेण माघः विषयस्य वर्णनशैल्याश्च दृष्टया भारवेः व्यापकरूपेण अनुसरणम् करोति, अतः यद्यपि इदम् कथयितुम् शक्यते यत् माघे मौलिकतायाः अभावः वर्तते, किन्तु पुनरपि सः यतो हि स्वकीयया प्रतिभया स्वकीयाम् वर्णनशैलीम् उदात्ताम् कृत्वा उदात्तरूपेण वर्णनीयम् विषयम् प्रस्तौति, अतः अस्मिन् अंशे तस्य मौलिकत्वम् अपि स्वीकर्तुम् शक्यते। एतदतिरिक्तम्, तस्य विभिन्नाः भावाः, विचाराः, कल्पनाः, वर्णनानि च इत्यादिकम् अपि अन्यत् बहु मौलिकम् अस्ति। तस्य कवित्वस्य प्रमुखाः विशेषताः निम्नप्रकारेण प्रस्तोतुम् शक्यन्ते—

**(अ) कलापक्षस्य प्रधान्यम्** यतो हि माघेन भारवेः तस्याः एव शैल्याः अनुसरणम् कृतम् अस्ति यस्याम् इतिवृत्तस्य भावानाम् च अपेक्षया कलात्मकस्य प्रदर्शनस्य एव प्राधान्यम् भवति, अतः माघस्य कवित्वे स्वभावतः कलापक्षस्य प्राधान्यम् अस्ति। माघस्य प्रत्येकम् वर्णनीयम् वस्तु साधारणरूपेण वर्णितम् न सत् अलङ्कारविभूषितरूपे वर्णितम् अस्ति। कलात्मिका रमणीयता माघस्य काव्ये पदे-पदे दृष्टिपथम आयाति। कलापक्षस्य प्राधान्यात् हेतोः माघस्य कवित्वस्य भावपक्षः कलापक्षेण प्रायः आक्रान्तः वर्तते। यद्यपि विभिन्नेषु स्थलेषु तस्य काव्येन अयम् संकेतः दीयते यत् माघस्य भावक्षेत्रे अपि पर्याप्तम् सामर्थ्यम् अस्ति, अथ च यदि सः स्वकालीनानाम् कलाप्राधान्यसमर्थनपराणाम् काव्यसम्बन्धिनीनाम् रूढानाम् मान्यतानाम् वशीभूतः न अभविष्यत् चेत्, तस्य कवित्वम् भावपक्षस्य दृष्टया अपि अतीव उत्कृष्टम् अभविष्यत्, किन्तु वस्तुस्थितिस्तु इयम् एव वर्तते यत् स्वकालप्रभावात् माघे कलापक्षस्य एव प्राधान्यम् वर्तते। कलापक्षस्य दृष्टया माघस्य काव्यम् अतीव उत्कृष्टम् अस्ति। तस्य काव्यशैल्याः मुख्याः गुणा प्रौढता, उदात्तता, ओजस्विता, प्रभावोत्पादकता, लालित्यम्, आलंकारिकता च इत्यादयः सन्ति एतादृश्याः शैल्याः कारणात् तस्य काव्यम् अतीव प्रौढम्, उदात्तम्, ओजस्वि, प्रभावोत्पादकम्, ललितम् अलंकृतम् च अस्ति।

**(आ) चित्रणकौशलम्**—माघे अपूर्वम् चित्रणकौशलम् अस्ति। तस्य भावचित्राणि वस्तुचित्राणि च अतीव रमणीयानि सन्ति। कलापक्षस्य

प्राधान्यात् हेतोः तत्र आलंकारिकता तु न्यूनाधिकरूपेण वर्तते एव। निदर्शनार्थम् एकम् स्निग्धम् भावचित्रम् अस्मिन् रूपे द्रष्टुम् शक्यते यत्—

'यां यां प्रियां प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव।
निःशंकमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरिमं कटाक्षैः॥'

(३।१६)

रैवतकपर्वतस्य चित्रस्य रूपे एकम् सुन्दरम् आलंकारिकम् वस्तुचित्रम्—प्रकृतिचित्रम्—अपि अस्मिन् रूपे द्रष्टव्यम् अस्ति यत्—

'उदयति विततोर्ध्वरश्मिरज्जा-
वहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवारितवारणेन्द्रलीलाम् ॥' (४।२०)

एवमेव माघस्य स्वभावोक्तिपूर्णानि विभिन्नानि चित्राणि अतीव सुन्दराणि सहृदयैः प्रशंसितानि च सन्ति।

(इ) 'माघे सन्ति त्रयो गुणाः'—कस्यचन प्राचीनस्य भारतीयसमालोचकस्य मतम् अस्ति यत् 'उपमा कालिदासस्य भारवेरर्थगौरवम्। दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः।' इतिप्रकारेण माघे कालिदासस्य उपमाविन्यासः, भारवेः अर्थगौरवम्, दण्डिनः पदलालित्यम्, इति त्रयः अपि गुणाः सन्ति। अत्र विषये इदम् वक्तव्यम् अस्ति यत् यद्यपि माघेन उपमायाः अन्येषाम् च सादृश्यमूलकानाम् अलंकाराणाम् सुन्दरः प्रयोगः कृतः अस्ति; किन्तु पुनरपि सः अस्मिन् विषये कालिदासस्य साम्यम् कर्तुम् न शक्नोति। यथा च तत्कृतैः अनपेक्षितरूपेण विस्तृतैः वर्णनैः ज्ञायते, तेन अर्थगौरवाय अपि पर्याप्तम् महत्त्वम् न दत्तम् अस्ति, तेन वस्तुतः स्वेन एव उल्लिखितस्य 'महीयांसः प्रकृत्या मितभाषिणः' इत्यस्य नियमस्य यथावत् पालनम् न कृतम्। यदवधि पदलालित्यस्य सम्बन्धः अस्ति, अयम् गुणः निश्चितरूपेण माघे पर्याप्ततया वर्तते। विभिन्नेषु स्थलेषु तु तस्य सानुप्रासम् पदलालित्यम् अतीव रमणीयम् अस्ति, यथा हि—

'मधुरया मधुवोधितमाधवीमधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥' (६।२०)

वस्तुतः माघस्य संस्कृतभाषायाः उपरि अपूर्वः अधिकारः अस्ति यद्वशात् सः यथेष्टरूपेण ललिताम् पदावलीम् विन्यस्तुम् समर्थः अभवत्।

अस्तु! एवम् माघः कलाप्रधानम् दृष्टिकोणम् दधत् उत्कृष्टः कविः अस्ति। तस्य काव्यम् च विभिन्नेषु स्थलेषु भावरमणीयताम् दधत् अपि तदपेक्षया कल्पनाचमत्कारम् प्रचुरतररूपेण दधत्, अथ च ललिताम् अलङ्कृताम् च पदावलीम् धृत्वा स्वम् रमणीये रूपे उपस्थापयत् कलात्मकतायाः दृष्टेः अतीव उत्कृष्टम् अस्ति।

## ५५

# महाकविः भवभूतिः

१—परिचयः—'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इत्यादिरूपे बहुशः प्रशंसितः महाकविः भवभूतिः महान् नाटककारः सन् संस्कृतस्य महत्सु नाटककारेषु केवलम् कालिदासात् एव द्वितीयः मन्यते। अयम् स्वकीयनाटकानाम् प्रस्तावनासु स्वकीयम् यम् परिचयम् दत्तवान् अस्ति तदनुसारेण अयम् अधुना 'बरार' इति नाम्ना प्रसिद्धस्य विदर्भदेशस्य 'पद्म-पुर' नामकस्य नगरस्य निवासी आसीत्। अयम् उदुम्बरवंशीयः ब्राह्मणः आसीत्। अस्य पितामहस्य नाम 'भट्टगोपालः', 'पितुः नाम 'नीलकण्ठः', मातुश्च नाम 'जातुकर्णी' आसीत्। अनेन स्वस्य निर्देशः 'श्रीकण्ठपदलाञ्छनः' इतिरूपे अपि कृतः अस्ति येन सूच्यते अस्य प्रारम्भिकम् नाम अथवा विरुदम् उपनाम वा 'श्रीकण्ठः इति आसीत्। कल्हणस्य राजतरङ्गिण्या ज्ञायते यत् भवभूतिः कान्यकुब्जाधिपतेः यशोवर्मणः आश्रितः कविः आसीत्।

२—स्थितिकालः—भवभूतेः स्थितिकालस्य उत्तरसीमा ८०० ईसवीय-वर्षात् अनन्तरम् न गच्छति, यतो हि वामनेन (८०० ई०) स्वकीयायाम् काव्यालङ्कारसूत्रवृत्तौ उत्तररामचरितस्य 'इयं गेहे लक्ष्मीः' (१।३८) इति पद्यम् उद्धृतम् अस्ति। एतदनन्तरम् तु तस्य विविधरूपः निर्देशः उपलभ्यते एव। राजशेखरः (९०० ई०) स्वम् भवभूतेः अवतारम् कथितवान् अस्ति। सोमदेवेन (९५९), धनञ्जयेन (९९५ ई०), मम्मटेन (११०० ई०) च स्वकीयासु रचनासु भवभूतिरचनाभ्यः उद्धरणानि दत्तानि सन्ति। भवभूतेः स्थितिकालस्य पूर्वसीमा ईसवीयसप्तमशतकस्य पूर्वार्द्धे वर्तमानात् बाणात् पूर्वम् न गच्छति, यतो हि बाणेन स्वकीये हर्षचरिते भासकालिदासादिभिः प्रसिद्धैः कविभिः सह भवभूतेः उल्लेखः न कृतः अस्ति। इत्थम् भवभूतेः स्थितिकालः प्रायः ६५० ईसवीयवर्षस्य ७५० ईसवीयवर्षस्य च मध्ये प्रतीयते। कल्हणस्य राजतरङ्गिण्याः वाक्पतिराजस्य च 'गौडवहो' इति प्राकृतकाव्यस्य आधारेण इदम् संभावयितुम् शक्यते यत् भवभूतेः स्थितिः ७०० ईसवीय-वर्षस्य समीपे आसीत्।

३—रचना:—भवभूतेः नाटकत्रयम् उपलभ्यते—महावीरचरितम्, मालतीमाधवम्, उत्तररामचरितम् च। एतदतिरिक्तम्, कतिपुचित् प्राचीनेषु सूक्तिसंग्रहेषु तत्प्रणीतरूपे कानिचित् एतादृशानि पद्यानि अपि संगृहीतानि उपलभ्यन्ते यानि तस्य उपलब्धे उक्ते नाटकत्रये न प्राप्यन्ते। उक्ते नाटकत्रये 'महावीरचरितम्' भवभूतेः प्रथमम् नाटकम् अस्ति। अस्मिन् सप्त अङ्काः सन्ति येषु रामायणस्य प्रायः प्रारम्भतः आरम्य वनवासात् प्रत्यावृत्तस्य रामस्य राज्याभिषेकपर्यन्ता कथा वर्णिता अस्ति। 'मालतीमाधवम्' भवभूतेः द्वितीयम् नाटकम् अस्ति। अस्मिन् दश अङ्काः सन्ति येषु मालत्याः माधवस्य च कल्पनाप्रसूता प्रणयगाथा वर्णिता अस्ति। 'उत्तररामचरितम्' भवभूतेः अन्तिमम् नाटकम् अस्ति। अस्मिन् सप्त अङ्काः येषु राज्याभिषेकोत्तरवर्त्ति रामचरितम् वर्णितम् अस्ति। इदम् नाटकम् भवभूतेः उत्कृष्टतमम् नाटकम् अस्ति।

४—नाट्यकला—यथा च अत्रैव पूर्वम् उक्तम्, भवभूतिना केवलम् त्रीणि नाटकानि एव लिखितानि, येन सूच्यते यत् सः नाटकप्रणयने अतिशयिताम् रुचिम् धत्ते स्म। तत्प्रणीतेषु त्रिषु नाटकेषु प्रथमम्—महावीरचरितम्—नाट्यकलायाः दृष्ट्या सफलम् सत् न प्रतीयते। एवमेव तस्य द्वितीयम् नाटकम्—मालतीमाधवम्—अपि उत्कृष्टतम् नाटकम् मन्तुम् न शक्यते, यद्यपि तत्र महावीरचरितस्य अपेक्षया नाट्यकलायाः कश्चन विकासः दृष्टिगोचरः भवति। 'उत्तररामचरितम्' अवश्यम् एव तस्य उक्तस्य नाटकद्वयस्य अपेक्षया अधिकम् उत्कृष्टम् नाटकम् अस्ति। वस्तुतः इदम् नाटकम् एव भवभूतेः नाट्यकलायाः चूडान्तनिदर्शनम् अस्ति, फलतश्च केवलम् अस्य एव नाटकस्य आधारे तस्य नाट्यकलायाः मूल्याङ्कनम् कर्तुम् न्याय्यम् अस्ति। यथा च उत्तररामचरितस्य अध्ययनेन ज्ञायते, यद्यपि भवभूतौ उत्कृष्टस्य नाटककारस्य योग्यता अस्ति, किन्तु यतः तस्य नाट्यकला कवित्वेन अतिशयितरूपेण आक्रान्ता जाता अस्ति, अतः तस्य नाटकीययोग्यतायाः उपयोगः उन्मुक्तरूपेण भवितुम् न अशक्नोत्, फलतः सः नाट्यकलायाः दृष्ट्या उत्कृष्टम् नाटकम् स्रष्टुम् समर्थः न अभवत्। तस्य उत्कृष्टतमम् नाटकम् उत्तररामचरितम् अपि कवित्वस्य दृष्ट्या यावत् उत्कृष्टम् अस्ति, नाट्यकलायाः दृष्ट्या तावत् उत्कृष्टम् नास्ति यद्यपि प्राचीनस्य भारतीयसमीक्षाशास्त्रस्य अनुसारेण नाटकम् अपि दृश्यकाव्यरूपे काव्यस्य एव एका विधा मन्यते, अथ च यद्यपि रसस्य एकस्य नाटकीयतत्त्वस्य रूपे स्वीकरणेन संस्कृतनाटके कवित्वस्य अपि उपयोगः अस्ति, किन्तु पुनरपि यतः नाटकस्य स्वकीयम् असाधारणम् वैशिष्ट्यम् अपि भवति, अतः तत्र कवित्वस्य तावान् एव प्रयोगः अपेक्षितः अस्ति येन तस्य नाटकीयम् वैशिष्ट्यम् न

नश्येत् अर्थात् अन्येषाम् नाटकीयतत्त्वानाम् निर्वाहे बाधा न उपस्थिता स्यात्। भावप्रवणेन भवभूतिना अत्र विषये पर्याप्तम् ध्यानम् न दत्तम् अस्ति।

यद्यपि भवभूतिना एकेन नाटककारेण इव मूलस्रोतसः प्रख्यातम् इतिवृत्तम् आदाय तत्र नाटकानुरूपम् मौलिकम् परिवर्तनम् कृत्वा नाटकोचितरूपेण कथावस्तुनः विन्यासम् कर्तुम् प्रयासः कृतः अस्ति, किन्तु पुनरपि वस्तुसङ्घटने शैथिल्यम् जातम् अस्ति, यतो हि बहुषु स्थलेषु भावानाम् अनपेक्षितरूपे अतिरञ्जितेन अभिव्यञ्जनेन विस्तृतैः वर्णनैश्च वस्तुप्रवाहे उद्वेगकरः अवरोधः जातः अस्ति। वस्तुतः उत्तररामचरिते भावानाम् अन्तर्द्वन्द्वस्तु वर्तते, किन्तु तत्र नाटकीयचमत्कारोत्पादकौ घटनानाम् घात-प्रतिघातौ न स्तः। अनेन एव प्रकारेण उत्तररामचरिते बहुत्र कथोपकथनानाम् प्रायः स्वाभाविकत्वम् नास्ति, यच्च नाटकेषु आवश्यकम् वर्तते। तत्र विन्यस्तानि कथोपकथनानि बहुषु स्थलेषु कवित्वस्य अतिशयितप्रयोगवशात् गद्यकाव्यस्य अंशभूतानि इव अथ च क्लिष्टानि जातानि सन्ति।

उत्तररामचरिते सीतारामादीनाम् मुख्यानाम् पात्राणाम् चरित्र-चित्रणम् तु प्रायः सफलम् एव कथयितुम् शक्यते। अपेक्षितस्य करुणाजनकस्य वातावरणस्य सृष्टौ अपि भवभूतिः सफलः जातः अस्ति, अथ च अस्य नाटकस्य यत् करुणरसाभिव्यञ्जनरूपम् उद्देश्यम् वर्तते, तत्र अपि तेन पूर्णतया साफल्यम् प्राप्तम् अस्ति। इत्थम् इदम् एव कथयितुम् शक्यते यत् कवित्वेन अतिशयितरूपेण आक्रान्ता अपि भवभूतेः नाट्यकला स्वकीयम् पर्याप्तम् प्रकर्षम् प्रदर्शयितुम् शक्ता जाता एव अस्ति।

**५—कवित्वम्**—भवभूतेः कवित्वम् अतीव उत्कृष्टम् वर्तते। यदा तस्य नाटकानि नाटकरूपे न दृष्टानि सन्ति काव्यरूपे दृश्यन्ते, तदा तानि उच्चकोटिकानाम् काव्यानाम् समकक्षताम् कुर्वन्ति प्रतीयन्ते। तस्य 'उत्तररामचरितम्' तु कवित्वस्य दृष्ट्या अतीव अपूर्वम् अस्ति। तत् उत्कृष्टायाः काव्यकलायाः सुन्दरम् निदर्शनम् अस्ति। भवभूतेः कवित्वस्य मुख्याः विशेषताः संक्षिप्ततया निम्नरूपे प्रस्तोतुम् शक्यन्ते—

**(अ) भावपक्षस्य प्राधान्यम्**—भवभूतेः कवित्वस्य मुख्यम् वैशिष्ट्यम् इदम् वर्तते यत् तत्र भावपक्षस्य प्राधान्यम् अस्ति। यद्यपि काव्यक्षेत्रे भारवेः समयात् भावपक्षस्य अपेक्षया कलापक्षस्य प्राधान्यम् जातम् आसीत्, किन्तु भवभूतेः कवित्वम् स्वकालप्रभावात् प्रायः उन्मुक्तम् सत् भावपक्षस्य प्राधान्यम् धत्ते। यद्यपि भवभूतौ पाण्डित्यपूर्णस्य कलात्मकस्य प्रदर्शनस्य अपि यत्र-कुत्रचित् प्रवृत्तिः दृश्यते, किन्तु मूलतः सः भावप्राधान्यवादी एव कविः प्रतीयते। तेन कवित्वस्य पक्षद्वयम्—भावपक्षः कलापक्षश्च—अपि समन्वितरूपेण आश्रित्य कलायाः भावाभिव्यञ्जनस्य अर्थाभिव्यक्तेः वा

अङ्गरूपे साधनरूपे वा एव प्रायः प्रयोगः कृतः अस्ति, केवलम् प्रदर्शनार्थम् तस्याः स्वच्छन्दः प्रयोगः प्रायः न कृतः अस्ति ।

**(आ) गम्भीरा प्रभावोत्पादिका च रसाभिव्यक्तिः**—भावपक्षस्य प्राधान्यम् रक्षता भवभूतिना विभिन्नानाम् रसानाम् भावानाम् च गम्भीरा प्रभावोत्पादिका च रसाभिव्यक्तिः प्रस्तुता अस्ति । अस्मिन् विषये सः पूर्णतः सफलः वर्तते । वस्तुतः मानवीयानाम् भावानाम् विश्लेषणे मार्मिके चित्रणे च भवभूतिः अतीव कुशलः अस्ति । सः भावानाम् गूढतमाम् अपि दशाम् अतीव कुशलतया अभिव्यनक्ति ।

**(इ) 'एको रसः करुण एव'**—यद्यपि भवभूतिना स्वकीयासु कृतिषु विभिन्नानाम् रसानाम् भावानाम् च अभिव्यक्तिः साफल्येन सह कृता अस्ति, किन्तु तेन करुणरसस्य तत्सम्बन्धिनाम् भावानाम् च अभिव्यञ्जने तु स्वकीयम् अभूतपूर्वम् नैपुण्यम् प्रकटितम् अस्ति । अस्य रसस्य अभिव्यञ्जने तस्य उपमा दुर्लभा अस्ति । अत एव सहृदयैः समालोचकैः तस्य अस्मिन् विषये 'कारुण्यं भवभूतिरेव तनुते', इत्यादिरूपेण बहुशः प्रशंसा कृता अस्ति । वस्तुतः भवभूतिः करुणरससम्राट् अस्ति । सः स्वेन अभिव्यक्तस्य करुणरसस्य प्रमुखे अभिव्यञ्जनस्थले 'उत्तररामचरिते' स्वयम् एव कण्ठशः घोषितम् करोति यत्—

'एको: रसः करुण एव निमित्तभेदाद्,
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान् विकरान्,
अम्भो यथा सलिलमेव हि तत्समस्तम् ।।
(उ० च० ३।४७)

इत्थम् भवभूतेः अनुसारेण मूलतः एक एव करुणः रसः अस्ति यः विभिन्नानाम् विभावादीनाम् निमित्तानाम् भेदात् विभिन्नानाम् रसानाम् रूपे तथैव परिणमते यथा जलम् मूलतः एकम् एव सत् निमित्तभेदात् आवर्तबुद्बुदतरङ्गादीनाम् विकाराणाम् रूपे परिणमते ।

उत्तररामचरिते भवभूतिना साफल्येन सह करुणरसस्य अभिव्यञ्जनाय तस्य पृष्ठभूमिः प्रथमे अङ्के एव चित्रदर्शनस्य अथ च तदनन्तरम् रामोत्सङ्गे सीताशयनस्य नियोजनेन प्रस्तुता, यस्याः आधारेण पश्चात् अभिव्यक्तस्य करुणरसस्य अधिकतरा तीव्रता जाता । चित्रदर्शनेन स्मृतिपथम् समागच्छताम् अतीतानाम् वृत्तान्तानाम् स्मरणेन करुणरसस्य बिन्दूनाम् वर्षणम् स्वत एव आरब्धम् । एकस्य चित्रस्य दर्शनेन रामः अश्रून्मोचनपूर्वकम् स्मरति—

'जीवत्सु तातपादेषु नूतने दारसंग्रहे ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ।।' (१।१९)

जनस्थाने वृत्तस्य सीताहरणस्य चित्रम् प्रदर्शयन् लक्ष्मणः सव्यथम् कथयति—

'अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना,
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्यचरितैः,
अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्॥ (१।२८)

इदम् चित्रम् दृष्ट्वा रामस्य हृदये या व्यथा जाता सा इत्थम् हृदयग्राहिरूपे अभिव्यक्ता अस्ति यत्—

'अयं ते वाष्पौघस्त्रुटित इव मुक्तामणिसरः,
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकणः।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया,
परेषामुन्नेयो भवति च भराध्मातहृदयः॥' (१।२९)

पश्चात् तृतीयस्य अङ्कस्य प्रारम्भे तु सीतावियोगजन्यदीर्घशोकसन्तापेन रामस्य दशा एव एतादृशी जाता अस्ति यत्—

'अनिर्भिन्नो गम्भीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः॥' (३।१)

एतदनन्तरम्, रामस्य तु 'अनिर्भिन्नः' करुणः रसः उद्दामम् प्रवहति एव, सहैव सम्पूर्णम् वातावरणम् एव करुणरसमयम् भवति। दीर्घकालीनस्य वियोगस्य अनुभूतेः अनन्तरम् रामम् दृष्ट्वा सीतायाः हृदयस्य एतादृशी विविधभावपूर्णा दशा भवति यत्—

'तटस्थं नैराश्यादपि च कलुषं विप्रियवशात्
वियोगे दीर्घेऽस्मिञ्झटिति घटनात्स्तम्भितमिव।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणम्,
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन् क्षण इव॥' (३।१३)

सीतासख्याः वनदेवतायाः वासन्त्याः हृदये या अन्तर्गूढा व्यथा वर्तते सा एवम् प्रभावोत्पादकरूपेण अभिव्यक्ता वर्तते यत्—

'त्वं जीवितं त्वमसि मे हृदयं द्वितीयम्
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धाम्,
तामेव शान्तमथवा किमिहोत्तरेण॥' (३।२६)।

रामस्य तु व्यथापूर्णा दशा एव विलक्षणा अस्ति याम् च तमसा एवम् अभिव्यनक्ति—

'इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा,
प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति।

स्वयं कृत्वा त्यागं विलपनविनोदोऽस्य सुलभस्-
तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ (३।३०)

स्वयम् रामः स्वकीयाम् इमाम् शोकव्यथापूर्णाम् दशाम् एवम् प्रकटयति—

'दलति हृदयं शोकोद्वेगाद् द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्,
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥' (३।३१)

अथ च

'हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ् मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ (३।३८)

अस्मिन् अङ्के एतादृशम् करुणरसपूर्णम् वातावरणम् उपस्थितम् भवति यत् अस्य अन्ते तमसा भवभूतेः इमाम् मान्यताम् घोषयितुम् विवशा भवति यत्—'एको रसः करुण एव निमित्तभेदात्' इति । एतदनन्तरम् अपि अस्मिन् नाटके विभिन्नेषु स्थलेषु करुणरसस्य प्रभावोत्पादिका अभिव्यञ्जना वर्तते । वस्तुतः भवभूतिः करुणरसस्य आचार्य एव वर्तते । करुणप्राधान्य-वादिना भवभूतिना उदात्तस्य दाम्पत्यप्रेम्णः अभिव्यञ्जनम् करुणरसस्य एव अङ्गरूपे कृतम् अस्ति ।

(ई) चित्रणकौशलम्—भवभूतिः अपूर्वम् चित्रणकौशलम् धत्ते । तेन प्रकृत्यादीनाम् सर्वेषाम् अपि पदार्थानाम् अथ च पुरुषस्य रूपदशादीनाम् स्वाभाविकम् चित्रणम् कृतम् अस्ति । तेन प्रकृतेः रूपद्वयम्—कोमलम् कठोरम् च—अपि स्वाभाविकरूपेण चित्रितम्, यस्य च दर्शनम् मुख्यतः तस्य उत्तररामचरिते प्राप्तुम् शक्यते । अनेन एव प्रकारेण भवभूतिना पुरुषस्य रूपदशादीनाम् चित्रणम् अपि अतीव कुशलतया कृतम् अस्ति । निदर्शनार्थम्, अत्र अस्मिन् रूपे कृतम् कुशस्य वीरोन्वितपुरुषत्वस्य चित्रणम् प्रस्तोतुम् शक्यते यत्—

'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा,
धीरोद्धता नमयतीव गतिर्धरित्रीम् ।
कौमारकेऽपि गिरिवद् गुरुतां दधानः,
वीरो रसः किमयमेत्युत दर्प एव ॥
(उ० च० ६।१९)

एवमेव भवभूतिकृतानि अश्वादीनाम् चित्रणानि अपि अतीव स्वाभा-विकानि सन्ति ।

(उ) **अलङ्काराणाम् स्वाभाविकः प्रयोग**—मूलतः भवभूतिः अलङ्कारान् प्रति कञ्चन विशिष्टम् मोहम् दधत् न प्रतीयते। सः प्रायः अनलङ्कृत-रूपेण एव वर्णनीयस्य वस्तुनः वर्णनम् करोति, अथ च पुनरपि स्वकीयम् वर्णनम् अतीव प्रभावान्वितम् रमणीयम् च सम्पादयति। किन्तु यदि सः कुत्र अपि अलङ्काराणाम् प्रयोगम् करोति, तत्र सः तेषाम् अकृत्रिमम् स्वाभाविकम् वा एव प्रयोगम् करोति। भवभूतिना मौलिकीनाम् उपमानाम् आविर्भावः कृतः अस्ति। उपमाविन्यासे तस्य इदम् वैशिष्ट्यम् वर्तते यत् सः प्रायः द्रव्यस्य उपमायाम् कञ्चन गुणम् प्रस्तौति, अथ वा मूर्तस्य वस्तुनः उपमायाम् कञ्चन अमूर्तम् भावम् प्रस्तौति।

(ऊ) **विषयानुरूपा शैली**—यद्यपि भवभूतेः वर्णनशैली मुख्यतः गौडी वर्तते यस्याम् प्रौढत्वम्, ओजः, समासभूयस्त्वम् च प्रायः भवति, किन्तु सः वर्णनीयविषयानुरूपम् वैदर्भ्याः शैल्याः अपि प्रयोगम् करोति यत्र समास-रहिता सरला, मधुरा, ललिता च पदावली भवति। वस्तुतः भवभूतेः भाषायाम् अपूर्वः अधिकारः अस्ति, अथ च सः शब्दानाम् शोधने विन्यासे च अतीव निपुणः अस्ति येन सः झटिति एव वर्णनीयविषयानुरूपम् स्वकीयाम् भाषाम् शैलीम् च परिवर्तयति। यदा सः भयंकराणाम् युद्धादीनाम् पदार्थानाम्, दृश्यानाम् वा, अथ च प्रकृतेः प्रचण्डस्य रूपस्य वर्णनम् करोति तदा सः ओजस्विनीम् समासबहुलाम् च शैलीम् आश्रयति, अपरतः यदा सः कोमलानाम् भावानाम् व्यञ्जनाम् करोति तदा सः सरलाम्, मधुराम्, ललिताम्, समासरहिताम् च शैलीम् आश्रयति।

(ए) **अर्थानुरूपः नादः**—भवभूतिः अभिव्यञ्जनीयस्य वर्णनीयस्य वा अर्थस्य अनुरूपम् पद्येषु नादम् उत्पादयितुम् अपि अतीव निपुणः अस्ति। तस्य शब्दैः वर्ण्यस्य वस्तुनः स्वरूपम् स्वत एव आभासितम् ध्वनितम् वा भवति।

अनेन एव प्रकारेण भवभूतेः छन्दःकौशलम् अपि अपूर्वम् अस्ति। सः कदाचित् छन्दसः नादात्मकगत्या एव अभिव्यञ्जनीयम् भावम् अभिव्यक्तम् करोति।

अस्तु! उक्तप्रकारेण भवभूतिः स्वकीयासु कृतिषु भावपक्षस्य कलापक्षस्य च अपूर्वेण समन्वयेन उत्कृष्टम् कवित्वम् प्रकटयति येन सः उच्चकोटिकानाम् कालिदासादीनाम् महाकवीनाम् पङ्क्तौ स्थानम् अधिकर्तुम् योग्यः अस्ति। सः उत्कृष्टः नाटककारः अस्ति न वा, इत्यत्र कामम् विवादः स्यात्, किन्तु सः उत्कृष्टः महाकविः अस्ति, इत्यत्र तु कश्चन विवाद एव न भवितुम् शक्नोति।

## ५६

# महाकविः श्रीहर्षः

१—परिचयः—प्रसिद्धस्य 'नैषधीयचरितस्य' महाकाव्यस्य रचयिता महाकविः श्रीहर्षः संस्कृतसाहित्ये सम्माननीयम् स्थानम् अधिकरोति। अयम् स्वकृतिषु स्वकीयम् कञ्चन परिचयम् दत्तवान् अस्ति। तदनुसारेण अस्य पितुः नाम 'श्रीहीरः' मातुश्च नाम 'मामल्लदेवी' आसीत्। अयम् विभिन्नेषु शास्त्रेषु अतीव विचक्षणः आसीत्। दर्शनशास्त्रे अथ च तत्रापि विशिष्टतः अद्वैत-वेदान्ते अस्य अद्भुता गतिः आसीत्। अयम् कान्यकुब्जेश्वरस्य जयचन्द्रस्य सभायाम् अतीव सम्मानितरूपे तिष्ठति स्म। यथा च तत्कृतेन 'ताम्बूलद्वय-मासनं च लभते यः कान्यकुब्जेश्वरात्' इति उल्लेखेन ज्ञायते, कान्यकुब्जे-स्वरः जयचन्द्रः तस्मै ताम्बूलद्वयम् आसनम् च दत्त्वा तम् सम्मानयति स्म।

२—स्थितिकालः—ऐतिहासिकानाम् अनुसारेण कान्यकुब्जेश्वरस्य जयचन्द्रस्य राज्यकालः ११६९-११९५ ईसवीयवर्षेषु आसीत्, अतः तत्सम-कालीनस्य श्रीहर्षस्य स्थितिकालः निर्विवादरूपेण ईसवीयद्वादशशतकस्य उत्तरार्धः मन्यते।

३—रचनाः—महाकविना श्रीहर्षेण अनेकेषाम् ग्रन्थानाम् रचना कृता अस्ति। 'नैषधीचरितम्' तस्य प्रसिद्धम् महाकाव्यम् अस्ति। 'खण्डन-खण्डखाद्यम्' तस्य उत्कृष्टकोटिकः दार्शनिकः ग्रन्थः अस्ति। एतत्प्रसिद्ध-ग्रन्थद्वयातिरिक्तम् अपि तेन स्थैर्यविचारणम्, नवसाहसाङ्कचम्पूः, शिवशक्ति-सिद्धिश्च इत्यादीनाम् ग्रन्थानाम् रचना कृता अस्ति। एतेषु, नैषधीयचरितम्' द्वाविंशतिसर्गात्मकम् महाकाव्यम् अस्ति, यस्मिन् नलदमयन्त्योः प्रेम्णः विवाहस्य च कथा वर्णिता अस्ति। अस्याः कथायाः मूलस्रोतः महाभारतस्य 'नलोपाख्यानम्' अस्ति।

४—कवित्वम्—महाकवेः श्रीहर्षस्य कवित्वस्य प्रकाशकम् मुख्यतः तस्य 'नैषधीयचरितम्' महाकाव्यम् अस्ति। अस्य महाकाव्यस्य अनुशीलनेन ज्ञायते यत् काव्यक्षेत्रे भारवेः समयात् या कलाप्रधाना कलाप्रदर्शनात्मिका

वा शैली प्रवृत्ता अभवत्, तस्याः चरमः प्रकर्षः अस्मिन् महाकाव्ये प्राप्यते। भारविसमये प्रवृत्तायाः उक्तायाः शैल्याः माघस्य काव्ये पर्याप्तः विकासः जातः, किन्तु श्रीहर्षम् प्राप्य तु सा स्वीयम् चरमोत्कर्षम् एव प्राप्तवती। श्रीहर्षस्य कवित्वस्य मुख्याः विशेषताः संक्षेपतः निम्नरूपे प्रस्तोतुम् शक्यन्ते—

**(अ) कलापक्षस्य प्राधान्यम्**—उक्तप्रकारेण उक्तायाः कलाप्रधानायाः शैल्याः परमोत्कृष्टरूपस्य आश्रयणात् हेतोः श्रीहर्षस्य कवित्वे कलापक्षस्य पूर्णतः प्राधान्यम् वर्तते। कलापक्षस्य प्राधान्यम् भारवेः माघस्य च कवित्वे अपि वर्तते, किन्तु पुनरपि तत्र भावपक्षः कलापक्षेण एतावता बलेन प्रकर्षेण वा सह न आक्रान्तः वर्तते यावता बलेन प्रकर्षेण वा सः श्रीहर्षस्य कवित्वे आक्रान्तः वर्तते। एतदेव कारणम् यत् भारतीयैः समालोचकैः समानाम् कलाप्रधानाम् शैलीम् आश्रयत्सु कलाप्राधान्यवादिषु भारविमाघश्रीहर्षेषु कलात्मकप्रदर्शनस्य दृष्ट्या श्रीहर्षः 'तावद् भा भारवेर्भाति यावद्माघस्य नोदयः। उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥' इत्यादिरूपे उत्कृष्टतमः घोषितः अस्ति। यतो हि अत्र तुलनार्थम् भावप्राधान्यवादिनाम् कालिदासादीनाम् कवीनाम् परिग्रहणम् न कृतम् अस्ति, अपि तु कलाप्रधान्यवादिनाम् एव कवीनाम् परिग्रहणम् कृतम् अस्ति, अतः स्पष्टम् अस्ति यत् उक्तरूपेषु समालोचनावाक्येषु कलात्मकप्रदर्शनस्य दृष्ट्या एव श्रीहर्षस्य उत्कृष्टत्वम् घोषितम् अस्ति। फलतः एतादृशानाम् वाक्यानाम् इदम् अपि तात्पर्यम् सूचितम् भवति यत् कलापक्षस्य न्यूनताया अनुपातेन भावपक्षस्य प्राधान्यस्य दृष्ट्या एतेषाम् कवीनाम् उत्कृष्टतायाम् क्रमविपर्ययः स्वत एव अस्ति अर्थात् श्रीहर्षात् माघः, अथ च माघात् भारविः उत्कृष्टः अस्ति। अस्तु! श्रीहर्षस्य कवित्वस्य इदम् मुख्यम् वैशिष्ट्यम् अस्ति यत् तत्र कलापक्षस्य भावपक्षस्य उपरि पूर्णः साम्राज्यम् वर्तते। कलात्मकम् प्रदर्शनम् एव श्रीहर्षस्य कवित्वस्य परमम् उद्देश्यम् प्रतीयते। इदमेव कारणम् अस्ति यत् इतिवृत्तस्य परमसंक्षिप्तत्वात् अपि कलात्मकप्रदर्शनस्य माध्यमभूतैः विभिन्नैः विस्तृतैः अथ च कदाचित् पुनरुक्तैः अपि वर्णनैः नैषधीयचरितस्य महाकाव्यस्य द्वाविंशतिसर्गात्मकम् विशालम् परिमाणम् जातम् अस्ति।

**(आ) कल्पनाचमत्कारः**—कलापक्षस्य प्राधान्यात् हेतोः श्रीहर्षस्य कवित्वे इदम् वैशिष्ट्यम् स्वभावत एव वर्तते यत् तत्र अद्भुतानाम् कल्पनानाम् चमत्कारः अस्ति। किमपि वस्तु स्यात्, तस्य वर्णने श्रीहर्षः विभिन्नाः अद्भुताः कल्पनाः उद्भावयति। वस्तुतः अस्मिन् विषये तस्य उपमा दुर्लभा एव अस्ति। दमयन्तीमुखसौन्दर्यस्य वर्णनम् कुर्वन् श्रीहर्षः कल्पनाम् उद्भावयति यत्—

'हृतसारमिवेन्दुमण्डलं दमयन्ती वदनाय वेधसा।
कृतमध्यविलं विलोक्यते धृतगम्भीरखनीखनीलिम ॥' (२।२५)

दमयन्तीशरीरे कुचद्वयस्य उपयोगितायाः विषये कविः कल्पनाम् करोति यत्—

'अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम्।
स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥' (२।३१)

'अपवर्गे तृतीया' इति पाणिनिसूत्रस्य प्रतिपाद्यस्य विषये कविः कल्पनाम् उद्भावयति यत्—

'उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः।
अपवर्गे तृतीयेति भणतः पाणिनेरपि ॥' (१७।७०)

अनेन उदाहरणेन स्पष्टम् अस्ति यत् श्रीहर्षेण उद्भावितासु कल्पनासु चमत्कारस्तु अस्ति एव, सहैव तत्र विनोदः व्यङ्ग्यम् च अपि वर्तते।

(इ) अलङ्कारविन्यासनैपुण्यम्—श्रीहर्षः विभिन्नानाम् अलङ्काराणाम् विन्यासे अतीव निपुणः अस्ति। सः स्वकीयम् काव्यम् प्रायः सर्वत्र एव अलंकारैः अलंकृतवान् अस्ति। कलापक्षस्य प्राधान्यात् हेतोः श्रीहर्षस्य अलंकारविन्यासः तावान् स्वाभाविकः नास्ति यावान् सः कलाप्रदर्शनहेतुकः वर्तते। फलतः सः स्वकीयम् अलंकारविन्यासकलानैपुण्यम् प्रदर्शयितुम् बहुशः श्लेषालङ्कारम् विन्यस्य स्वकीयम् काव्यम् क्लिष्टम् अपि करोति। पुनरपि इयती वार्त्ता अवश्यम् अस्ति यत् अद्भुतानाम् कल्पनानाम् उद्भावनात् हेतोः श्रीहर्षेण प्रयुक्तेषु अर्थालङ्कारेषु अपूर्वम् सौन्दर्यम् समागतम् अस्ति।

(ई) पदलालित्यम्—श्रीहर्षस्य पदलालित्यम् 'नैषधे पदलालित्यम्' इत्यादिरूपे बहुशः प्रशंसितम् वर्तते। वस्तुतः श्रीहर्षः ललितायाः पदावल्याः प्रयोगस्य विषये उत्कृष्टः कलाकारः अस्ति। तत्प्रयुक्ता ललिता पदावली पदे-पदे पाठकान् विमोहयति। यतः अस्याः पदावल्याः निदर्शनम् प्रायः समग्रम् अपि नैषधीयचरितम् अस्ति, अतः तत्र एव अस्याः दर्शनम् कर्तुम् उचितम् अस्ति।

(उ) पाण्डित्यम्—श्रीहर्षस्य पाण्डित्यम् उत्कृष्टम् आसीत्। यथा च अत्रैव पूर्वम् उक्तम्, सः विभिन्नेषु शास्त्रेषु अतीव विचक्षणः आसीत्, अथ च दर्शनशास्त्रे तस्य अद्भुता गतिः आसीत्। फलतः तस्य कवित्वस्य इदम् अपि वैशिष्ट्यम् जातम् अस्ति यत् तत् अपूर्वेण पाण्डित्येन युक्तम् अस्ति। बहुषु स्थलेषु अतिशयितरूपे पाण्डित्यप्रदर्शनात् हेतोः तस्य काव्यम् क्लिष्टम् अपि जातम् अस्ति, किन्तु इयम् क्लिष्टता एतादृशी नास्ति या स्वत एव समागता स्यात्, अपि तु एतादृशी वर्तते या कविना ज्ञानपूर्वकम् प्रयत्नात् समानीता अस्ति, यथा च सः स्वयम् एव कथयति—

'ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया,
प्राज्ञंमन्यमना हठेन पठिती मास्मिन् खलः खेलतु ।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय—
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ।।

इत्थम् पाण्डित्यपूर्णत्वात् हेतोः नैषधम् विदुषाम् वस्तु जातम् अस्ति; फलतश्च तस्य विषये समालोचकैः 'नैषधं विद्वदौषधम्' इत्यादिरूपाः उद्गाराः प्रकटिताः सन्ति ।

अस्तु इत्थम् महाकविः श्रीहर्षः कलाप्राधान्यवादी उत्कृष्टः कविः अस्ति, अथ च तत्प्रणीतम् महाकाव्यम्—नैषधीयचरितम्—कलात्मकेन दृष्टिकोणेन उत्कृष्टम् काव्यम् अस्ति । यद्यपि इदम् काव्यम् भावानुभूतिलालसान् सहृदयान् रमणीयभावाभिव्यक्तिमाधुर्येण रसनिर्भरान् कृत्वा प्रभावितान् न करोति, तथापि तत् कलाचमत्कारप्रियान् जनान् कल्पनायाः चमत्कारेण चमत्कृतान् कृत्वा पूर्णतः प्रभावितान् कर्त्तुम् शक्तम् अस्ति, फलतश्च स्वस्य, अनेन वैशिष्टयेन हेतुना तत् 'उदिते नैषधे काव्ये क्व माघः क्व च भारविः' इत्यादिरूपे बहुशः प्रशंसितम् अपि जातम् अस्ति ।

## ५७

## 'सत्यं शिवं सुन्दरम्'

१—स्रोतसः परिचयः—आधुनिकीनाम् भारतीयभाषाणाम् साहित्य-समीक्षा-क्षेत्रे कस्माच्चित् कालात् 'सत्यं शिवं सुन्दरम्' इत्यस्य चर्चा अधिकम् श्रूयमाणा वर्तते। यतः अस्याः पदावल्याः स्वरूपम् एतादृशम् वर्तते येन अत्र भारतीयत्वम् प्रतिभाति, अतः अनया आपाततः इयम् प्रतीतिः भवति यत् इयम् पदावली मूलतः प्राचीनस्य भारतीयसमीक्षाशास्त्रस्य संस्कृतसमीक्षाशास्त्रस्य वा कस्यचित् ग्रन्थस्य पदावली अस्ति, अथवा कस्य अपि संस्कृतकाव्यस्य पदावली अस्ति, अथवा कस्यचित् भारतीयदर्शन-शास्त्रसम्बन्धिनः ग्रन्थस्य पदावली अस्ति, अथ च यदि इयम् पदावली उक्तेषु ग्रन्थेषु कस्यचित् नास्ति चेत् तदा अस्याम् निहितः सिद्धान्तः मूलतः कश्चन भारतीयदर्शनशास्त्रीयः भारतीयसमीक्षाशास्त्रीयः वा सिद्धान्तः अस्ति; किन्तु, यथा च हिन्द्यादीनाम् भारतीयभाषाणाम् आचार्यरामचन्द्र-शुक्लादिभिः साहित्यसमीक्षकैः अपि स्वकीयेषु ग्रन्थेषु स्पष्टीकृतम् अस्ति, वस्तुतः न तु इयम् पदावली एव मूलतः कस्यचित् भारतीयस्य संस्कृत-ग्रन्थस्य वर्तते, न च अस्याम् निहितः सिद्धान्त एव मूलतः कश्चन भारतीय-दर्शनशास्त्रीयः भारतीयसमीक्षाशास्त्रीयः वा सिद्धान्तः अस्ति, अपि तु अस्याम् पदावल्याम् निहितः भावः मूलतः विदेशीयसाहित्यसमीक्षाक्षेत्रे—संभवतः आङ्ग्लसाहित्यसमीक्षाक्षेत्रे—उद्भूतः, यश्च भारतीयैः अपि समालोचकैः आधुनिकीनाम् भारतीयभाषाणाम् साहित्यसमीक्षाक्षेत्रे गृहीतः, अथ च सः अनया संस्कृतपदावल्या अभिव्यक्तः। यतो हि अस्याम् पदावल्याम् निहितः भावः भारतीयायाः परम्परागतायाः विचारधारायाः प्रतिकूलः नास्ति, अपि तु तस्याः आदर्शम् पूर्णतया अप्राप्नुवन् अपि तया समञ्जसः भवति, अतः अयम् आधुनिके भारतीयसमीक्षाशास्त्रे ससम्मानम् गृहीतः चर्चितश्च वर्तते।

२—समीक्षाशास्त्रस्य सम्बन्धेन स्वरूपस्य परिचयः—अस्याम् पदा-वल्याम् निहितस्य भावस्य सिद्धान्तस्य वा विदेशीयसमीक्षाशास्त्रे आधुनिके

च भारतीयसमीक्षाशास्त्रे यथा व्यवहारः कृतः वर्तते तदनुसारेण अस्य स्वरूपम् अस्ति यत् काव्यादिके भाववाङ्मये अभिव्यक्तम् तथ्यम् वस्तु वा 'सत्यम्', 'शिवम्', 'सुन्दरम्' च स्यात् अर्थात् तत् तथ्यम् वस्तु वा 'सत्यम्' अर्थात् यथार्थम् स्यात्, यथार्थात् अपेतम् न स्यात्, सहैव तत् 'शिवम्' अर्थात् हितकरम् कल्याणकरम् वा स्यात्, व्यक्तेः, समाजस्य, राष्ट्रस्य, मानवतायाः, जगतः कस्य अपि अंशस्य वा अहितम् न कुर्यात्, अथ च तत् 'सुन्दरम्' अर्थात् एतादृशे कलात्मके रूपे अभिव्यक्तम् स्यात् येन तत् सुन्दरम् प्रतीयमानम् सत् रञ्जनम् कुर्यात्।

अत्र 'सत्यम्' इति पदम् अर्थपक्षेण अनुभूतिपक्षेण वा सम्बन्धम् दधत् निर्दिशति यत् प्रतिपाद्यः अर्थः अभिव्यङ्ग्यः वा भावः यथार्थः स्यात्, 'शिवम्' इति पदम् मुख्यतः उक्तेन एव पक्षेण, किन्तु सहैव अभिव्यक्तिपक्षेण अपि सम्बन्धम् दधत् निर्दिशति यत् विद्यमानेषु अनन्तेषु तथ्यभूतेषु अर्थेषु भावेषु वा केवलम् ते एव प्रतिपादनाय अभिव्यञ्जनाय वा उपादेयाः ये जगद्धितकराः स्युः, केन अपि प्रकारेण जगतः अहितम् सम्पादयन्तः अर्थाः भावाः वा परिहार्याः, अथ च तथ्यभूतानाम् एषाम् शिवानाम् अर्थानाम् भावानाम् च अभिव्यक्तिः अपि एतादृशे रूपे करणीया येन जगद्धितम् सम्पद्येत; 'सुन्दरम्' इति पदम् मुख्यतः अभिव्यक्तिपक्षेण, किन्तु सहैव अर्थपक्षेण अनुभूतिपक्षेण वा सम्बन्धम् दधत् निर्दिशति यत् तथ्यभूतानाम् शिवानाम् सुन्दराणाम् भावानाम् च एतादृशी कलात्मिका अभिव्यक्तिः सम्पाद्या येन ते सुन्दररूपे अभिव्यक्ताः सन्तः स्वकीयेन सौन्दर्येण हेतुना ग्राह्याः स्युः, तत्फलस्वरूपम् च जगत्कल्याणम् स्यात्। एवम् अस्य सिद्धान्तस्य अनुसारेण काव्यस्य भाववाङ्मयस्य वा 'शिवम्' अर्थात् जगत्कल्याणम् एव मुख्यम् उद्देश्यम् अस्ति।

अत्र 'सत्यम्' इति पदम् यथार्थात् अपेतस्य काल्पनिकस्य आदर्शस्य परिहारम् कुर्वत् यथार्थस्य प्रतिष्ठाम् करोति, 'शिवम्' इति पदम् अहितसम्पादकस्य घोरस्य यथार्थस्य परिहारम् कुर्वत् वास्तविकस्य अर्थात् यथार्थयुक्तस्य आदर्शस्य प्रतिष्ठाम् करोति, अथ च 'सुन्दरम्' इति पदम् एतादृशम् आदर्शम् ग्राह्यरूपे सम्पादयति। एवम्, अत्र समन्वयात्मकः दृष्टिकोणः वर्तते।

केवलम् 'सत्यम्' दर्शनस्य विज्ञानस्य च विषयः अस्ति, 'सत्यम्' 'शिवम्' च धर्मशास्त्रस्य अन्येषाम् च सामाजिकानाम् शास्त्राणाम् विषयः अस्ति, अथ च 'सत्यम्', 'शिवम्', 'सुन्दरम्' च काव्यस्य भाववाङ्मयस्य वा विषयः अस्ति।

**३—लोकेन सम्बन्धः**—उक्तस्य भावस्य सिद्धान्तस्य वा लोकेन अपि सम्बन्धः वर्तते। लोके हि सत्यस्य प्रतिष्ठा अस्ति। कामम्, जनाः लोक-

व्यवहारे यस्मिन् कस्मिन् अंशे न्यूनाधिकरूपेण असत्यस्य प्रयोगम् कुर्युः, किन्तु पुनरपि सर्वे परतः सत्यस्य एव अपेक्षाम् कुर्वन्ति, ते असत्यम् न वाञ्छन्ति, यतो हि लोकः सत्ये प्रतिष्ठितः वर्तते, यदि सर्वे जनाः असत्यस्य एव व्यवहारम् कुर्युश्चेत् लोकस्य विप्लव एव जायते। अतः सत्यम् तु मूलतः अपेक्षितम् वर्तते। किन्तु लोके सर्वम् सत्यम् शिवम् एव नास्ति अथवा सर्वम् सत्यम् सर्वस्मै शिवम् नास्ति, अतः जनाः लोकव्यापकात् सत्यात् तावदेव सत्यम् गृह्णान्ति, यावत् तेभ्यः शिवम् भवति अथवा सत्यस्य एतादृशे रूपम् प्रयोगम् उपयोगम् वा कुर्वन्ति येन तत् तेभ्यः शिवरूपम् स्यात्। इयदवधि लोके उपयोगितायाः क्षेत्रम् अस्ति। किन्तु यतः जनानाम् हृदये सौन्दर्यम् अनुभवितुम् परमा तृष्णा वर्तते, अतः'ते शिवम् उपयोगि वा अपि तदेव सत्यम् उपयोगाय अन्विष्यन्ति यत् सुन्दरम् अपि भवति अथवा उपयोजनीयम् सत्यम् रुच्यनुकूलम् सुन्दरम् कृत्वा उपयुञ्जते। इदम् कलायाः क्षेत्रम् अस्ति।

केषाञ्चित् मतम् अस्ति यत् प्रत्येकम् सत्यम्, शिवम् सुन्दरम् च भवति, किन्तु इदम् कामम् कस्य अपि उत्कृष्टस्य तत्त्वज्ञस्य अनुभूतेः विषये वस्तुभूतं स्यात्, किन्तु सामान्यतः ग्राह्यं न प्रतीयते। यदि सर्वम् अपि सत्यम्, शिवम् सुन्दरम् च स्वीक्रियते चेत् 'सत्यम्' इति कथनेन एव 'शिवम्' 'सुन्दरम्' च इत्यपि कथितम् भवति, पुनः 'शिवम्' 'सुन्दरम्' च इति विशेषणभूतयोः पदयोः आनर्थक्यम् एव भवति। एतदतिरिक्तम्, यतः सत्यम् देशकालव्यक्तिपरिस्थित्यादिनिरपेक्षम् सत् सर्वत्र, सदा, सर्वेभ्यः, सर्वासु परिस्थितिषु च सत्यम् एव तिष्ठति, अथ च तस्य शिवत्वम् सुन्दरत्वम् च देशकालादिसापेक्षम् सत् यदा एकत्र, एकदा, एकस्मै, एकस्याम् परिस्थितौ च तिष्ठति अनुभूयते वा तदा अन्यत्र, अन्यदा, अन्यस्मै, अन्यस्याम् परिस्थितौ च न तिष्ठति अनुभूयते वा, अतः सत्यत्वस्य, शिवत्वस्य, सुन्दरत्वस्य च अन्तरम् स्पष्टम् अस्ति। यत्र सत्यत्वम् वस्तुनः स्वरूपनिरूपकम् तत्त्वम् अस्ति, तदा शिवत्वम् सुन्दरत्वम् च वस्तुनः स्वरूपविशेषके तत्त्वे स्तः। एवम् 'सत्यम्' 'शिवम्', 'सुन्दरम्' च इति त्रयाणाम् अपि पदानाम् भिन्नप्रवृत्तिनिमित्तत्वेन पूर्वोक्ता सोद्देश्यता च अपि यथावद्रूपेण तिष्ठति।

**४—साधनाक्षेत्रेण सम्बन्धः**—'सत्यं शिवं सुन्दरम्' इत्यत्र निहितस्य भावस्य साधनाक्षेत्रेण अपि सम्बन्धः अस्ति। ज्ञानमार्गिणाम् मुख्यतः सत्येन प्रयोजनम् अस्ति, कर्ममार्गिणाम् धर्मानुष्ठानपरायणानाम् वा शिवेन सत्येन प्रयोजनम् अस्ति, यदा च भक्तिमार्गिणाम् भक्तानाम् वा शिवेन सुन्दरेण च सत्येन प्रयोजनम् अस्ति, अतः सत्यस्वरूपः मङ्गलमयश्च भगवान् तेभ्यः सुन्दररूपे सदा एव नित्ये लोके विराजते, अत्र च यथावसरम् अवतीर्णः भवति। यतः काव्ये भक्तौ च समानरूपेण 'सत्यं

शिवं सुन्दरम्' इति पूर्णरूपे अपेक्षितम् भवति, अतः अस्मिन् विषये अनयोः परस्परम् कश्चन सम्बन्धः अपि भासमानः भवति, यः समीक्षकैः अनुसन्धेयः वर्तते ।

**५—भारतीयेन आदर्शेन तुलना**—'सत्यं शिवं सुन्दरम्' इत्यत्र निहिते आदर्शे, एतत्समाने च 'सत्यं प्रियहितञ्च यत्' इत्यादिरूपे अभिव्यक्ते भारतीये परम्परागते आदर्शे इयत् अन्तरम् वर्तते यत् यद्यपि भारतीये आदर्शे 'सत्यम्', हितरूपम् 'शिवम्' च यथावद्रूपेण स्वीक्रियेते, किन्तु तत्र 'सुन्दरम्' इत्यस्य स्थाने 'प्रियम्' इति स्वीक्रियते, यतो हि सुन्दरत्वस्य अपेक्षया प्रियत्वस्य हृदयेन अधिकः सम्बन्धः अस्ति । इदम् अनिवार्यम् नास्ति यत् सुन्दरे मनः रमताम् अथ च एवम् तत् रमणीयम् स्यात् एव, किन्तु मनसः प्रिये स्वभावत एव अनिवार्यतः तत् रमते; फलतः सुन्दरम् कदाचित् रमणीयम् न सत् ग्राह्यम् न भवेदपि, किन्तु प्रियम् तु सदैव रमणीयम् सत् अवश्यम् एव ग्राह्यम् भवति । इदम् सर्वविदितम् अस्ति यत् अनेकशः सुन्दरम् अपि प्रियम् न भवति, फलतश्च तत् ग्राह्यम् अपि न भवति, पुनः एतादृशेन सुन्दरेण किम् यत् प्रियम् न सत् ग्राह्यम् न भवेत् । इत्थम् 'सुन्दरम्' इत्यस्य कदाचित् अग्राह्यत्वे तदा तस्य उद्देश्यस्य एव समाप्तत्वेन तत् निरर्थकम् भवति, यदा च 'प्रियम्' इत्यस्य सर्वदा ग्राह्यत्वेन तस्य उद्देश्यस्य कदापि समाप्तत्वाभावात् तत् सर्वदा सार्थकम् तिष्ठति । एवम् भारतीये आदर्शे अधिकतररूपेण सार्थकता, व्यापकता, तथ्यानुकूलता च वर्तते । वस्तुतः इदम् सांस्कृतिकम् अन्तरम् वर्तते । यत्र विदेशीयाः संस्कृतयः भौतिक्यः सत्यः वाह्यरूपप्रधानाः सन्ति, तत्र भारतीया संस्कृतिः आध्यात्मिकी सती आभ्यन्तरभावप्रधाना अस्ति । फलतः विदेशीयासु संस्कृतिषु वाह्यरूपद्योतकम् 'सुन्दरम्' इति अङ्गीकृतम् वर्तते, तत्र भारतीयायाम् संस्कृतौ आभ्यन्तरभावद्योतकम् 'प्रियम्' इति स्वीकृतम् वर्तते ।

अस्तु ! उक्तप्रकारेण 'सत्य शिवं सुन्दरम्' इत्यत्र निहितः सिद्धान्तः एतादृशः व्यापकः सिद्धान्तः वर्तते यः काव्ये, लोके, साधनाक्षेत्रे च समानरूपेण व्यवहर्तुम् शक्यते, किन्तु पुनरपि अस्मिन् अधिकतराम् व्यापकताम्, अथ च भारतीयसंस्कृतेः आदर्शस्य अनुकूलताम् सम्पादयितुम् अस्मिन् अयम् परिष्कारः आवश्यकः वर्तते यत् 'सुन्दरम्' इत्यस्य स्थाने 'प्रियम्' इति अङ्गीकृत्य अस्य द्योतिका पदावली एवंविधा स्यात् यत्—

'सत्यं शिवं सुप्रियम्' इति

## ५८

# हिन्द्याम् संस्कृतस्य प्रभावः

**१—संस्कृतस्य हिन्द्याः जीवनाधायकत्वम्**—यदि कः अपि हिन्द्याम् संस्कृतस्य प्रभावम् पृच्छेत् चेत् अयम् प्रश्नः तथैव भविष्यति, यथा च कः अपि 'आत्मा वै जायते पुत्रः' इति वचनानुसारेण पितुः स्वस्य एव रूपान्तरे इव जाते पुत्रे तज्जनकस्य प्रभावम् पृच्छेत्। वस्तुतः यथा पुत्रस्य सम्पूर्णम् मौलिकम् स्वरूपम् पितृस्वरूपस्य एव रूपान्तरम् अस्ति, तथैव हिन्द्याः सम्पूर्णम् अपि मौलिकम् स्वरूपम् संस्कृतस्वरूपस्य एव रूपान्तरम् वर्तते। यथा वालः स्वपितुः स्वकीयम् मौलिकम् स्वरूपम् समादाय इतस्ततः किञ्चिद् वाह्यम् रूपम् अपि गृह्णाति, तथैव हिन्दी स्वकीयम् सम्पूर्णम् अपि मौलिकम् स्वरूपम् संस्कृतात् गृहीत्वा इतस्ततः किञ्चित् बाह्यम् रूपम् अपि गृहीतवती अस्ति, किन्तु तस्याः जीवनाधायकम् सर्वम् अपि रूपम् संस्कृतस्य एव वर्तते।

**२—शब्दावल्याः दृष्टेः हिन्द्याः संस्कृताधारकत्वम्**—कस्याः अपि भाषायाः द्विविधम् रूपम् भवति-स्वकीयम् भाषासम्वन्धि रूपम्, स्वसाहित्य-सम्वन्धि रूपम् च। भाषासम्बन्धिनि स्वकीये रूपे शब्दावली एव प्रमुखायते। हिन्दीभाषायाः शब्दावलीम् दृष्ट्वा अस्मिन् तथ्ये सन्देह एव न अवशिष्यते यत् तस्याः स्वरूपम् संस्कृताधारकम् एव अस्ति। तस्याः शब्दावल्याम् सर्वाधिका संख्या संस्कृतशब्दानाम् एव वर्तते। तेषु अपि बहवस्तु 'तत्सम' पदवाच्याः स्वरूपे एव वर्तमानाः सन्तः हिन्दीभाषायाम् प्रयुज्यन्ते, यथा—'नगर', 'पुस्तक' 'विद्यालय' इत्यादिकाः, अन्ये च बहवः संस्कृते प्रयुज्यमानात् स्वकीयात् मौलिकस्वरूपात् काञ्चन प्रच्युतिम् प्राप्य 'तद्भव' रूपे प्रयुज्यमानाः विराजन्ते, यथा—'गाँव', 'मुँह', 'हाथ' इत्यादिकाः। अवशिष्टाः अल्पीयांसः शब्दाः हिन्दीभाषायाः स्वतन्त्राः भाषान्तरीयाः वा शब्दाः वर्तन्ते; यथा—'झोंपड़ी', 'सड़क', 'शहर' इत्यादिकाः किन्तु उक्तप्रकारेण तस्याः शब्दावल्याम् साम्राज्यम् तु संस्कृतशब्दानाम् एव वर्तते। यदि सर्वेऽपि संस्कृतशब्दाः हिन्दीतः वहिर्गच्छेयुश्चेत् तस्याः किञ्चिदपि स्वरूपम्

तथैव न अवशिष्टम् स्यात् यथा मृण्मयात् घटात् मृदः वहिर्गमने घट एव न अवशिष्येत ।

**३—व्याकरणस्य दृष्ट्या हिन्द्याः संस्कृताधारकत्वम्**—कस्याश्चित् अपि भाषायाः भाषासम्वन्धिनि स्वकीये रूपे अपरम् मुख्यम् अङ्गम् व्याकरणम् भवति । हिन्दीभाषायाः व्याकरणम् कियत् संस्कृतव्याकरणाधारकम् वर्तते, इति कथनस्य एव आवश्यकता नास्ति । तस्य सर्वम् अपि सङ्घटितम् स्वरूपम् संस्कृताधारकम् एव अस्ति । संज्ञासर्वनामविशेषणक्रियाव्ययादिकाः सर्वेऽपि विभिन्नाः वाक्याङ्गाः, तेषाम् च लिङ्गवचनकारकादीनि, परस्परम् सम्वन्धप्रकारश्च इत्येतत् सर्वम् यत्किञ्चित् अन्तरेण अपवादेन वा सह संस्कृतव्याकरणाश्रितम् एव वर्तते ।

**४—साहित्यस्य दृष्ट्या हिन्द्याः संस्कृताधारकत्वम्**—यदा हिन्दीभाषायाः साहित्यसम्वन्धिरूपम् समवलोक्यते, तदापि अस्य एव तथ्यस्य पुष्टिः भवति यत् हिन्दीसाहित्यम् संस्कृतसाहित्यस्य एव परम्पराम् वहुदूरपर्यन्तम् धारयत् वर्तते । साहित्यशास्त्रीयाः ये नियमाः संस्कृतसाहित्यशास्त्रे मौलिकरूपेण समुद्भूताः पल्लविताश्च, ते एव यथावत् हिन्दीसाहित्यशास्त्रेण अपि गृहीताः तेषाम् एव च हिन्दीसाहित्यसर्जने पालनम् कृतम् क्रियमाणम् च वर्तते । साहित्यस्य विभिन्नानाम् काव्यनाटककथाख्यायिकादीनाम् विधानाम् अङ्गानाम् वा स्वरूपम्, शब्दार्थसम्बन्धः, शब्दशक्तयः, रस-भाव-रसाभास-भावाभास-रीति-गुण-दोषालङ्कारादयश्च, इत्येतत् सर्वम् संस्कृतसाहित्यशास्त्रीयम् एव अस्ति, यच्च हिन्दीसाहित्यशास्त्रे परिगृहीतम् हिन्दीसाहित्यरचनायाम् च अनुगम्यमानम् वर्तते । यद्यपि साम्प्रतम् हिन्दीसाहित्यशास्त्रे साहित्यशास्त्रान्तरेभ्यः अपि किञ्चित् अभिनवम् गृह्यमाणम् नवीने हिन्दीसाहित्ये च अनुगम्यमानम् जातम्, किन्तु पुनरपि तत्र मूलाधारभूतम् तु संस्कृतसाहित्यशास्त्रीयम् तत्त्वम् अस्ति ।

एतदतिरिक्तम्, हिन्दीसाहित्ये यत्किञ्चिदपि वर्ण्यमानम् वस्तुजातम् अस्ति, तस्य अपि सर्वाधिकः भागः संस्कृतसाहित्यात् एव गृहीतः वर्तते । उदाहरणार्थम्, सूरसाहित्यम् श्रीमद्भागवतपुराणम् आधारम् कृत्वा, तुलसीसाहित्यम् च संस्कृतभाषायाम् निबद्धानि विभिन्नानि वाल्मीकीयरामायणादीनि रामायणानि समाश्रित्य रचितम् वर्तते ।

अस्तु ! इत्थम् स्वयम् भाषास्वरूपस्य दृष्टचा समीक्ष्येत तत्साहित्यस्वरूपस्य दृष्टचा वा समीक्ष्येत, सर्वथा एव हिन्दी संस्कृतेन प्रभाविता गोचरीभवति । प्रभाविता एव नहि, अपि तु सा स्वकीयेषु अपि रूपेषु संस्कृतस्य एव भूमिकाम् विशिष्टेन वेषेण सह अभिनयन्ती वर्तते :

## ५६

# महापुरुषचरितम्

१—**महापुरुषाणाम् वन्दनीयत्वम्**—अखिलकोटिब्रह्माण्डनायकस्य भगवतः स्तुतिषु गीतम् वर्तते यत्—'वन्दे महापुरुष ते चरणारविन्दम्' इति। यद्यपि इदम् वाक्यम् भगवतः विषये सूक्तम् वर्तते, किन्तु अस्मिन् विश्वे प्रादुर्भूतानाम् महापुरुषाणाम् विषये अपि इदम् सूक्तम् भवति, यतो हि ते अपि महापुरुषस्य भगवतः कस्याश्चन विभूतेः अंशभूता एव भवन्ति, यथा च स्वयम् भगवता श्रीकृष्णेन स्वीयायाम् गीतायाम् उक्तम् अस्ति—

'यद् यद् विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥ (१०।)

एवञ्च महापुरुषाः वन्दनीयचरणा एव भवन्ति। महापुरुषाणाम् सताम् सङ्गेन तेषाम् सेवया च मानवस्य सर्वविधम् कल्याणम् भवति। सः स्वविषयकम् जगद्विषयकम् परमात्मविषयकम् च यथार्थम् ज्ञानम् प्राप्तुम् शक्नोति येन सः तत्त्वज्ञः सन् दुरितात् विरतः भवति, स्वकीयम् वैयक्तिकम् भौतिकम् आध्यात्मिकम् च कल्याणम् संसाध्य समाजस्य, राष्ट्रस्य, विश्वस्य च उक्तम् उभयविधम् कल्याणम् साधयितुम् शक्नोति। वस्तुतः सताम् सङ्गः सर्वम् अपि साधयितुम् समर्थः, अत एव नीतिशास्त्रकारैः कथितम् अस्ति—

'सत्सङ्गतिः कथय किं न करोति पुंसाम्।'

२—**महापुरुषाणाम् असाधारणत्वम्**—अस्मिन् निखिले अपि विश्वे जनानाम् जननमरणे प्रतिक्षणम् भवतः, न जाने, कियन्तः जनाः प्रतिक्षणम् उत्पद्यन्ते, कियन्तश्च म्रियन्ते। किन्तु वस्तुतस्तु जातः स एव मन्यते येन जातेन 'स जातो येन जातेन याति वंशः समुन्नतिम्' इत्यादिप्रकारेण कुलम्, देशः, विश्वस्य सकला अपि जातिश्च समुन्नतिम् प्राप्नोति, यस्मात् मानव-जातिः कञ्चन प्रकाशम् प्राप्नोति, किञ्चित् पथप्रदर्शनम् प्राप्नोति, यस्य च प्रेरणया सर्वः अपि जनः स्वात्मकल्याणाय प्रयतते। महापुरुषाः एतादृशा

एव भवन्ति। तेषाम् जन्म साधारणानाम् जनानाम् इव जन्ममात्रम् न भवति, अपि तु तेषाम् जन्मनः रूपे एकम् एतादृशाम् अद्वितीयम् दिव्यम् ज्योतिः एव जार्गात यत् सर्वस्मिन् अपि काले मानवजातये प्रकाशम् वितरति। महापुरुषाः असाधारणव्यक्तित्वसम्पन्नाः पुरुषाः भवन्ति, फलतश्च तेषाम् कर्माणि साधारणानि न भूत्वा पूर्णतः असाधारणानि भवन्ति। यथा भगवता श्रीकृष्णेन स्वविषये 'जन्म कर्म च मे दिव्यम्' इति उक्तम्, तथैव सर्वेषाम् अपि महापुरुषाणाम् विषये इदम् कथयितुम् शक्यते यत् तेषाम् जन्म कर्म च दिव्यम् एव भवति।

महापुरुषाः एतावत्शक्तिसम्पन्नाः असाधारणाः पुरुषाः भवन्ति यत् तेषाम् कृते मोक्षप्राप्त्यै अपि सर्वसाधारणवत् गृहत्यागस्य आवश्यकता नास्ति, अपि तु ते स्वकीयेन ज्ञानबलेन निरपेक्षभावेन च गृहे एव सन्तः मोक्षम् अपि साधयन्ति; यथा च उक्तम् अस्ति—

'गृहेऽपि मोक्षः पुरुषोत्तमानाम्।'

**३—महापुरुषचरितस्य असाधारणरूपेण शिक्षाप्रदत्वम्**—मानवजातिः शास्त्राणाम् उपदेशेभ्यः तथा शिक्षाम् ग्रहीतुम् न शक्नोति, यथा च सा महापुरुषचरितेभ्यः शिक्षाम् गृह्णाति। एतदेव च कारणम् वर्तते यत् उपदेशकेषु विभिन्नेषु शास्त्रेषु सत्सु अपि भगवान् स्वात्मचरितेन मानवजातिम् शिक्षिताम् कर्तुम् आविर्भूतः भवति। यदा यदा लोकजीवनधारकम् धर्मम् प्रति जनानाम् अरुचिः भवति, लोकजीवनविनाशकम् च अधर्मम् प्रति तेषाम् अभिरुचिः भवति, तदैव च भगवतः भगवद्विभूतिभूतानाम् वा महापुरुषाणाम् आविर्भावः भवति। महापुरुषाः असाधारणेन आदर्शभूतेन वा स्वात्मचरितेन मानवजीवनस्य आदर्शम् प्रदर्श्य लोकजीवनमर्यादाम् स्थापयन्ति, यथा च भगवता रामेण आदर्शभूतम् मानवजीवनम् यापयता लोकजीवनमर्यादा स्थापिता यत्फलस्वरूपम् च सः 'मर्यादापुरुषोत्तमः' इति विरुदेन समलङ्कृतः वर्तते। भगवतः रामस्य आदर्शभूतम् चरितम् विभिन्नैः कविभिः स्वकाव्येषु संग्रथितम् यस्य अनुशीलनम् कृत्वा जनः स्वजीवनस्य आदर्शम् जानाति, आदर्शभूतम् च जीवनम् यापयितुम् प्रेरणाम् गृह्णाति।

प्रत्येकम् महापुरुषे कापि एतादृशी असाधारणता असाधारणः गुणः वा भवति, येन जीवनस्य किमपि क्षेत्रम् अवश्यम् एव प्रकाशितम् भवति। कोऽपि महापुरुषः साहसस्य मूर्तिः भवतिः, जनाश्च तच्चरितेन शुभोद्योगाय साहसम् कर्तुम् प्रेरणाम् गृह्णन्ति। कोऽपि त्यागमूर्तिः भवति, जनाश्च तच्चरितेन त्यागाय प्रेरिताः भवन्ति। एवमेव विभिन्नानाम् महापुरुषाणाम् जीवनेषु विभिन्नाः गुणाः असाधारणरूपेण अभिव्यक्ताः भवन्ति, जनाश्च फलतः तेषाम् चरितैः प्रेरिताः सन्तः तान् गुणान् स्वजीवने अवतारयितुम्

प्रयतन्ते, येन ते अपि महापुरुषवत् किञ्चित् साफल्यम् प्राप्य स्वजीवनम् सफलम् कुर्वन्ति । भगवतः रामस्य, भगवतः कृष्णस्य, शिविहरिश्चन्द्रादीनाम् पौराणिकानाम् राज्ञाम्, गौमतबुद्धमहावीरतिलकगान्धिसदृशानाम् महात्मनाम् बहूनाम् देशभक्तानाम् वीरपुरुषाणाम् वीराङ्गनानाम् च, बहूनाम् साधुपुरुषाणाम् साध्वीनाम् च महिलानाम् चरितेभ्यः मानवजातिः विपुलाम् प्रभावशालिनीम् शिक्षाम् ग्रहीतुम् शक्नोति । एतदेव च कारणम् विद्यते यत् एतेषाम् गौरवान्वितम् चरितम् विभिन्नेषु ग्रन्थेषु वर्णितम् अस्ति, यतो हि तेन भविष्यन्तः अपि जनाः सदैव शिक्षाम् ग्रहीतुम् शक्नुयुः । अस्माकम् देशे भारते तु रामायणमहाभारतपुराणादयः विशालाः ग्रन्थाः महापुरुषाणाम् चरितैः एव पूर्णाः वर्तन्ते ।

महापुरुषाः 'मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम्' इत्यादि—रूपेण प्रतिपादितस्य आदर्शस्य एव निदर्शनम् प्रायः प्रस्तुवन्ति । ते अल्पीयसा एव कालेन तादृशानि असाधारणानि कार्याणि सम्पादयन्ति यादृशानि साधारणजनाः अनेकैः जन्मभिः अपि सम्पादयितुम् न शक्नुवन्ति । उदाहरणार्थम्, श्रीमता शंकराचार्येण स्वल्पेन एव कालेन सनातनस्य वैदिकधर्मस्य पुनरुत्थानम् कृतम्, अतिगम्भीराणाम् ग्रन्थानाम् रचना कृता अथ च वेदान्तस्य एतादृशी एका अद्वैतवादिनी विचारधारा प्रवाहिता या इदानीम् अपि जनान् प्रभावितान् कुर्वती वर्तते ।

'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजनः' इतिवाक्यानुसारेण साधारणाः जनाः महापुरुषाणाम् आचरणस्य एव अनुकरणम् कुर्वन्ति । यद्यपि विभिन्नेषु शास्त्रेषु सदाचरणस्य विभिन्नाः उपदेशाः वर्तन्ते, किन्तु तेषाम् तादृशः प्रभावः जनेषु न भवति, यादृशः प्रभावः महापुरुषचरितस्य भवति, यतो हि शास्त्राणाम् उपदेशाः केवलम् शब्दमयाः सिद्धान्ताः सन्ति, यदा च महापुरुषाणाम् चरितम् तेषाम् एतादृशम् व्यावहारिकम् प्रत्यक्षम् उदाहरणम् भवति येन इदम् निश्चितम् भवति यत् अमुकम् कार्यम् करणीयम् कर्त्तुम् शक्यम् वर्तते, अतः जनाः तदेव अनुसरन्ति । अतएव सूक्तम् वर्तते यत्—

'श्रुतिर्विभिन्ना स्मृतयो विभिन्ना
नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥'

अस्तु ! इत्थम् स्वजीवनम् आदर्शभूतम् सफलम् च कर्तुम् जनैः सर्वदा महापुरुषचरितम् अनुशीलनीयम् अनुकरणीयम् च । यतः यादृशी यथार्था शिक्षा प्रेरणा च महापुरुषचरितानाम् अनुशीलनेन प्राप्ता भवति तादृशी केन अपि अन्येन उपायेन प्राप्तुम् न शक्यते, अतः अस्माभिः सततम् महापुरुषचरितम् अनुशीलनीयम् एव ।

## ६०

## 'सङ्घे शक्तिः कलौ युगे'

१—वर्तमानकाले सङ्घस्य एव शक्तिमत्त्वम्—इयम् पौराणिकी उक्तिः वर्तते यत्—'सङ्घे शक्तिः कलौ युगे' इति। अस्याम् उक्तौ वर्तमानः काल एव पौराणिक्याम् भाषायाम् 'कलौ युगे' इति रूपेण अभिहितः वर्तते। फलतश्च अस्याः उक्तेः तात्पर्यम् अस्ति यत् वर्तमाने काले युगे वा सङ्घे सङ्घटने वा एव शक्तिः वर्तते, न तु कस्याञ्चित् एकस्याम् एव व्यक्तौ। वर्तमानकालीनानाम् विभिन्नानाम् समाजराजनीत्यादिसम्बन्धिनीनाम् व्यवस्थानाम् समीचीनतया निरीक्षणेन अस्याः उक्तेः सत्यम् पूर्णतया स्पष्टम् भवति। अद्य यत्र-कुत्र अपि शक्तिः दृश्यते सा केवलम् सङ्घबलेन एव, न तु व्यक्तिबलेन।

प्राचीनानाम् इतिहासपुराणसम्बन्धिनाम् ग्रन्थानाम् अवलोकनेन ज्ञायते यत् पुरातने काले एकः अपि पुरुषः विलक्षणेन सामर्थ्येन सम्पन्नः सन् गुरुतराणि कार्याणि कर्तुम् समर्थः वभूव। तस्मिन् काले वहवः पुरुषाः स्वशरीरेण महाबलिष्ठाः आसन्, यथा रामायणे वर्णिताः रावणदयः, महाभारते च वर्णिताः भीमादयः। ते एकाकिन एव स्वबलेन महत् कार्यम् कर्त्तुम् शक्ताः बभूवुः। बहवः पुरुषाः स्वास्त्रविद्याकौशलेन शक्तिसम्पन्नाः सन्तः अतिमानवम् चरितम् कर्त्तुम् समर्थाः अभवन्, यथा रामायणे वर्णिताः रामलक्ष्मणादयः, महाभारते च वर्णिताः कृष्णार्जुनादयः। बहवश्च पुरुषाः स्वयोगवलेन स्वतपस्याबलेन च एकाकिन एव अपारशक्तिसाध्यानि विचित्रतराणि कार्याणि कर्त्तुम् समर्थाः बभूवुः, यथा रामायणमहाभारतपुराणेषु वर्णिताः वसिष्ठविश्वामित्रव्यासादयः महर्षयः। किन्तु साम्प्रतम् न तु स्वशरीरेण एव महाबलिष्ठः कोऽपि पुरुषः वर्तते, न च अस्त्रविद्याकौशलयुक्तः एतादृशः कोऽपि वर्तते यः केवलम् स्वयम् एव अस्त्रविद्याबलेन शक्तिसाध्यानि विचित्राणि कार्याणि कर्त्तुम् पारयेत्, न च एतादृश एव कोऽपि पुरुषः वर्तते यः स्वयोगबलेन तपस्याबलेन वा स्वकीयाम् काम् अपि अघटितघटनापटीयसीम् शक्तिम् प्रदर्शयेत्। इदानीम् तु सर्वाणि कर्याणि सङ्घबलेन एव साधनीयानि

दृश्यन्ते। फलतश्च सर्वत्र सङ्घस्य एव माहात्म्यम् श्रूयते, यस्मिन् कस्मिन् सङ्घे संगमनाय एव च मानवानाम् प्रवृत्तिः परिलक्ष्यते।

२—**सामाजिके क्षेत्रे सङ्घस्य शक्तिः**—वर्तमानकाले सर्वासु सामाजिकीषु व्यवस्थासु सङ्घबद्धानाम् एव जनानाम् प्रावल्यम् वर्तते। ये जनाः संघटिताः सन्ति, ते याम् काम् अपि सामाजिकीम् परम्परागताम् रीतिम् रूढिम् वा परित्यक्तुम् शक्नुवन्ति, न कोऽपि तान् निवारयितुम् आलोचयितुम् वा शक्तः भवति। किन्तु यदि कोऽपि व्यक्तिविशेषः व्यक्तिगतरूपेण काम् अपि रीतिम् परित्यजति चेत् तस्य बहिष्कारः भवति। अनेन एव प्रकारेण नवीनाम् अपि कामपि रीतिम् सङ्बद्धाः पुरुषाः समाजे प्रवर्तयन्ति, अन्ये च पुनः तान् अनुगच्छन्ति एव, न तु तत्र विरोधम् प्रदर्शयन्ति। पूर्वम् याः निम्नाः जातयः समाजे तिरस्कृताः अभवन्, ताः इदानीम् सङ्घबद्धीभूय उच्चजातिभिः सह समानताम् अनुभवन्त्यः वर्तन्ते। इदम् सङ्घशक्तेः एव महात्म्यम्। एवमेव इदानीम् समाजे छात्राणाम् विभिन्नाः सङ्घाः वर्तन्ते, शिक्षकाणाम् अपि सङ्घाः सन्ति, कवीनाम् अपि सङ्घाः विद्यन्ते, अन्येषाम् अपि साहित्यिकानाम् सङ्घाः राजन्ते, संगीतज्ञानाम् अन्येषाम् च विभिन्नानाम् कलाकाराणाम् अपि सङ्घाः विराजन्ते, किम् बहुना, अद्यावधि लज्जावतीरूपे मन्यमानानाम् महिलानाम् अपि विभिन्नाः सङ्घाः विलसन्ति। तात्पर्यम् इदम् यत् इदानीम् समाजे सङ्घानाम् सङ्घ एव उत्थितः वर्तते। एतादृशी अवस्था कथम् जाता इति चेत्— 'सङ्घे शक्तिः कलौ युगे'।

३—**आर्थिके क्षेत्रे सङ्घस्य शक्तिः**—आर्थिकेषु क्षेत्रेषु अपि दृश्यते यत् सर्वत्र विभिन्नाः सङ्घा एव विराजन्ते। यदि कोऽपि एकाकी श्रमिकः भवति चेत्, तस्य तु कोऽपि समीचीनतया वार्ताम् अपि न शृणोति, किन्तु यदैव एकाकिनः श्रमिकाः सङ्घटिताः भवन्ति, तदैव ते शक्तिशालिनः जायन्ते, अथ च तथा एव मन्यन्ते। सर्वे तेषाम् सम्मानम् कुर्वन्ति, तेषाम् वार्ताम् च आदरेण सह शृण्वन्ति। विभिन्नाः राजनैतिकाः नेतारः तेषाम् चरणचुम्बनम् कुर्वन्ति। तेषाम् स्वामिनः तेषाम् वेतनवृद्धिम् कुर्वन्ति। शासकीयाः जनाः अपि तेभ्यः बिभ्यति। तेषाम् कल्याणाय च विभिन्नाः योजनाः घोषयन्ति। फलतश्च इदानीम् देशे श्रमिकाणाम् असंख्याः सङ्घाः समुत्पन्नाः सन्ति। अनेन एव प्रकारेण विभिन्नानाम् व्यवसायिनाम् अपि विभिन्नाः सङ्घाः वर्तन्ते। प्रकाशकानाम् सङ्घाः सन्ति, व्यवसायिनाम् लेखकानाम् अपि सङ्घाः सन्ति, विभिन्नानाम् कर्मचारिणाम् अपि च सङ्घाः विराजन्ते। 'बैङ्क' पदवाच्यानाम् अधिकोषाणाम् अपि सङ्घाः समुत्पन्नाः सन्ति। उद्योगिनाम् अपि सङ्घाः सन्ति। एवम् सर्वत्र एव आर्थिकेषु क्षेत्रेषु सङ्घानाम् महिमा व्याप्तः अस्ति।

आर्थिके क्षेत्रे सङ्घस्य इयत् प्रबलम् माहात्म्यम् जातम् अस्ति यत् इदानीम् सम्पत्तौ कस्य अपि वैयक्तिकः अधिकारः सैद्धान्तिकदृष्टया उचितः न मन्यते, अपि तु तस्याम् जनसङ्घस्य समग्रस्य राष्ट्रस्य वा सामूहिकः अधिकारः उचितः मन्यमानः वर्तते। फलतः एतादृशस्य अधिकारस्य अधिकात् अधिकतरे रूपे सम्पादनाय विश्वस्य विभिन्नेषु देशेषु प्रबलानि आन्दोलनानि संचाल्यमानानि वर्तन्ते। अनेकेषु देशेषु इमानि आन्दोलनानि सफलानि अपि जातानि। अस्माकम् देशे भारते अपि एतादृशी भावना शनैःशनै तरङ्गायमाना वर्तते। फलतः अद्य अत्रापि इदम् सिद्धान्तरूपेण मन्यमानम् वर्तते यत्—'समाजवादोऽभ्युदयैकहेतुः' इति।

**४—राजनैतिके क्षेत्रे सङ्घस्य शक्तिः**—राजनैतिकेषु क्षेत्रेषु तु सङ्घशक्तेः प्रबलता प्रसिद्धा एव वर्तते। राजनैतिकेषु क्षेत्रेषु सङ्घाय इयद् महत्त्वम् दत्तम् वर्तते यत् प्राचीनकाले मध्यकाले वा एकस्य राज्ञः रूपे व्यक्तिविशेषेण जनतायाः शासनस्य या प्रथा आसीत् ताम् इदानीम् कोऽपि सोढुम् प्रस्तुतः नास्ति। इदानीम् तु सर्वत्र एव प्रायः इयम् एव भावना वर्तते यत् स्वयम् समग्रायाः जनतायाः सङ्घेन एव तस्याः शासनम् स्यात्। एतत्फलस्वरूपम् अद्य विश्वस्य कस्मिन् अपि देशे एकस्य राज्ञः रूपे व्यक्तिविशेषस्य राज्यम् नास्ति, यदि कुत्र अपि राज्ञः पदम् वर्तते अपि चेत् तत् केवलम् नाम्ने एव वर्तते। वस्तुतः तत्र तेन शासनम् न क्रियते, अपि तु जनतायाः सङ्घेन निर्वाचितेन मन्त्रिमण्डलेन क्रियते। इदानीम् तु अस्मिन् विषये प्रायः सर्वत्र इदम् एव सिद्धान्तरूपे मन्यमानम् वर्तते यत्—

'सर्वेषाम् राज्यतन्त्राणां लोकतन्त्रं विशिष्यते।'

लोकतन्त्रस्य स्वरूपम् अस्ति यत् समग्रेण अपि लोकेन अर्थात् राज्यस्य समग्रायाः जनतायाः समूहेन सङ्घेन वा लोकस्य तन्त्रम् अर्थात् शासनम् लोकाय अर्थात् तस्य कल्याणाय स्यात्। यद्यपि लोकतन्त्रम् अङ्गीकृतवत्सु देशेषु अस्य लोकतन्त्रस्वरूपस्य पूर्णतया निर्वाहः कृतः न वर्तते, किन्तु तथापि तत्र सङ्घस्य शक्तिवशात् न्यूनातिन्यूनम् सैद्धान्तिकरूपेण तु लोकतन्त्रम् एव स्वीकृतम् वर्तते। एतदतिरिक्तम्, यत्र लोकतन्त्रम् नास्ति, तत्र अपि व्यक्तिविशेषस्य शासनम् नास्ति, अपि तु यस्मिन् कस्मिन् रूपे सङ्घस्य एव शासनम् वर्तते। इदम् राजनैतिकेषु क्षेत्रेषु स्वीकृतस्य सङ्घस्य परमस्य महत्त्वस्य प्रमुखम् निदर्शनम् अस्ति।

राजनैतिकेषु क्षेत्रेषु सङ्घस्य इयम् शक्तिः सुविदिता एव वर्तते यत् यः एकाकी भवति तम् तत्र कोऽपि पृच्छति एव नहि, कामम् सः महाविद्वान् भवेत्, चरित्रवान् भवेत्, परोपकारी भवेत्, देशभक्तः भवेत्, जनसेवकः वा भवेत्; किन्तु यदैव कोऽपि पुरुषः सङ्घम् सङ्घटनम् वा विधाय तस्य नेता भवति, तदा कामम् सः अशिक्षितः अर्धशिक्षितः वा स्यात, सः

विभिन्नासु विधानसभादिकासु संस्थासु सदस्यत्वेन निर्वाचितः भवति, मन्त्रि पदम् अपि च अलङ्करोति । ग्रामसभानाम् ग्रामपञ्चायतनानाम् वा निर्वाचने, नगरपालिकानाम् नगरनिगमानाम् वा निर्वाचने, क्षेत्रीयविकाससमितेः 'जिला' पदवाच्यस्य मण्डलस्य परिषदश्च निर्वाचने, विधानसभाविधानपरिषदोः, लोकसभायाः, राज्यसभायाश्च निर्वाचने, राष्ट्रपतिपदस्य च निर्वाचने स एव जनः निर्वाचितः भवति यस्य सङ्घः भवति । मन्त्रिमण्डलस्य अध्यक्षः सदस्यश्च अपि स एव भवति येन सह स्वानुयायिनाम् सङ्घस्य शक्तिः भवति । फलतः विभिन्नराजनैतिकदलरूपाः विभिन्नाः राजनैतिकाः सङ्घाः देशे प्रसृताः सन्ति । किम् बहुना, इदानीम् तु केषाञ्चित् राष्ट्राणाम् अपि विभिन्नाः 'नाटो-सीटो' इत्यादिकाः सङ्घाः सन्ति, अथ च सर्वेषाम् विश्वराष्ट्राणाम् अपि एकः महान् सङ्घः 'संयुक्तराष्ट्रसङ्घः' इत्यभिधया सह विराजते ।

अस्तु ! इत्थम् वर्तमानकाले सर्वत्र सङ्घे एव शक्तिः वर्तते । फलतश्च इदानीम् सङ्घस्य महत् माहात्म्यम् जातम् अस्ति । अस्माभिः अपि 'सङ्घे शक्तिः कलौ युगे' इति उक्तिम् अनुसृत्य सर्वदा सङ्घटितैः एव भाव्यम्, न तु कदाचिद् विघटितैः, यतो हि सङ्घटिताः जना एव इदानीम् स्वम् अभीष्टम् सम्पादयितुम् पारयन्ति ।

## ६१

## 'धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्'

१—आरोग्यस्य पुरुषार्थसाधारणम् प्रति मूलसाधनत्वम्—'धर्मार्थ-काममोक्षणामारोग्यं मूलमुत्तमम्' इत्यादीनाम् सूक्तीनाम् अभिप्राय: स्पष्ट एव वर्तते यत् सर्वेषाम् पुरुषार्थानाम् मूलसाधनम् आरोग्यम् एव अस्ति। भारतीयपद्धत्यनुसारेण पुरुषस्य सर्वेऽपि अभीष्टा: पदार्था: धर्म:, अर्थ:, काम: मोक्ष:, इति चतुर्षु पुरुषार्थपदवाच्येषु वर्गेषु त्रिभाजिता: सन्ति। एषाम् पुरुषार्थानाम् प्राधान्याप्राधान्यदृष्टया केचन कमपि एकम् पुरुषार्थम् प्रधानम् मन्यन्ते, केचन कमपि अपरम् पुरुषार्थम् प्रधानम् मन्यन्ते। यथा अर्थ-प्राधान्यवादिनाम् कथनम् अस्ति यत्—'अर्थ एवैक: पुरुषार्थ:।' अन्येषाम् मतम् अस्ति यत्—'धर्मार्थकामा: सममेव सेव्या:' इति। वस्तुतस्तु मोक्ष एव भारतीयसंस्कृतौ परमपुरुषार्थ: मन्यते, अन्ये च पुरुषार्था: गौणा: पुरुषार्था: मन्यन्ते, किन्तु एतेऽपि उपेक्षणीया: न सन्ति। अस्तु! एतेषाम् चतुर्णाम् पुरुषार्थानाम् यानि विभिन्नानि साधनानि सन्ति, तेषु यत्किञ्चित् साधनम् यस्मै कस्मैचित् एकस्मै पुरुषार्थाय आवश्यकम् वर्तते, तत् तदन्यस्मै पुरुषार्थाय अपि आवश्यकम् स्यात् इति अनिवार्यनियम: नास्ति, अपि तु कदाचित् एकस्य पुरुषार्थस्य सिद्धये यत् साधनम् अनिवार्यरूपेण साधकत्वेन अपेक्षितम् भवति, तदेव पुरुषार्थान्तरस्य सिद्धौ बाधकम् भवति। किन्तु पुनरपि एकम् साधनम् एतादृशम् वर्तते यत् सर्वेषु पुरुषार्थेषु समान-रूपेण सर्वप्रमुखतया च अनिवार्यत: अपेक्षितम् भवति। तत् साधनम् एतादृशम् अस्ति यत् तेन विना कस्यापि पुरुषार्थस्य सिद्धि: शशश्रृङ्गाय-माणा एव भवति, यतो हि तेन बिना विविधपुरुषार्थप्राप्त्यपेक्षितानि विभि-न्नानि साधनानि उपादातुम् सम्पादयितुम् च शक्यन्ते एव नहि। फलतश्च तत् साधनम् विविधपुरुषार्थसाधनानाम् आधारभूतम् साधनम् सत् पुरुषा-

र्थानाम् परममूलसाधनत्वम् बिभर्त्ति। किम् तत् साधनम् यत् उक्तप्रकारेण गौरवशालि सत् सर्वेषाम् पुरुषार्थानाम् परमम् मूलम्? अस्यैव प्रश्नस्य समुचितम् उत्तरम् 'धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्' इत्यादिकासु सूक्तिषु दत्तम् आस्ते।

२—**आरोग्यस्य धर्मम् प्रति मूलसाधनत्वम्**—वस्तुतः सर्वेषाम् पुरुषार्थानाम् आरोग्य एव परमम् मूलम्। निदर्शनार्थम्, यदि पुरुषः धर्मकामः अस्ति चेत् तस्य सर्वप्रथमम् अपेक्षितम् वस्तु आरोग्यम् एव अस्ति। धर्मार्जनार्थम् शुद्धाः उदात्ताश्च हार्दिकाः भावाः आवश्यकाः भवन्ति, ततश्च तेषाम् अभिव्यक्तिः क्रियासु परिणतिः वा समपेक्षिता भवति। किन्तु यः जनः रुग्ण एव वर्तते तस्य हृदये प्रायः खिन्नता, निराशता, उदासीनता, अवसन्नता च इत्यादीनाम् मलिनानाम् अनुदात्तानाम् च एव भावानाम् साम्राज्यम् भवति, धर्मक्रियाप्रेरणाप्रदानाम् उदात्तानाम् भावानाम् तु तत्र जन्म एव प्रायः सुदुर्लभम् अस्ति। यदि कथञ्चित् तत्र धार्मिकाः उदात्ताः भावाः उद्भूताः अपि सन्तु नाम, तथापि तेषाम् लोकसेवा-लोकसंग्रह-यज्ञ-दान-तपः-पूजा-परोपकारादिकासु धार्मिकीषु क्रियासु परिणतिस्तु नितराम् असम्भवा एव भवति। रुग्णो हि जनः वाञ्छन् अपि कथम् श्रमसाध्यानाम् उक्तानाम् क्रियाणाम् सम्पादने समर्थः भविष्यति। इत्थम् धर्मार्जने आरोग्यस्य परममूलसाधनता स्पष्टा वर्तते। अत एव सूक्तिरियम् समुचितम् एव प्रतिपादयति यत्—'शरीरमाद्यं खलु धर्मसाधनम्' इति।

३—**आरोग्यस्य अन्यपुरुषार्थान् प्रति मूलसाधनत्वम्**—धर्मात् अन्येषाम् पुरुषार्थानाम् विषयेऽपि आरोग्यस्य आवश्यकता स्वप्रतिपादनाय अतिवर्णनम् न अपेक्षते। रुग्णो हि जनः पूर्वम् तु अर्थोपार्जनाय समीचीनतया समुत्सहते एव न, यदि समुत्सहतेऽपि चेत् तदा स बहुलायासप्रयाससाध्यानाम् अर्थसाधनानाम् सम्पादने स्वात्मानम् पूर्णतया असमर्थम् एव प्राप्नोति। एवमेव रुग्णः जनः पूर्वम् तु कामोपभोगोत्साहरहित एव भवति, यथाकथञ्चित् कामोपभोगतृष्णोऽपि भवति चेत्, कामानाम् सम्पादने सम्पादितकामानाम् च उपभोगे नितराम् असमर्थ एव भवति। मोक्षसाधनेऽपि रुग्णः जनः अक्षम एव, यतो हि सः स्वास्थ्यम् विना कथम् अन्तःकरणशोधकानाम् कर्मणाम् अनुष्ठानम् करिष्यति? कथञ्च पुनः मोक्षसाधनभूतानाम् यम-नियमासन-प्राणायाम-प्रत्याहार-धारणाध्यान-समाधीनाम् श्रवण-मनन-निदिध्यासनानाम् च नियमतः अनुष्ठानम् विधास्यते? अस्वस्थ एव सन् कथम् तदा एव स्वस्थः अर्थात् स्वरूपस्थः भविष्यति?

इत्थम् उक्तप्रकारेण पुरुषार्थचतुष्टये कस्यापि सिद्धिः स्वास्थ्यम् विना न सम्भवति। वस्तुतः जीवनस्य किमपि कार्यम् स्वास्थ्यम् विना साफल्येन सह सम्पादयितुम् एव न शक्यते। जीवनस्य कस्मिन् अपि क्षेत्रे

प्रवेशः क्रियताम्, कुत्रापि च कर्मणि प्रवृत्तिः विधीयताम्, सर्वत्र एव स्वास्थ्यस्य परमावश्यकता भवति, नीरोगता सर्वत्र एव अपेक्षिता भवति। अतः पुरुषार्थकामेन जीवनसाफल्यकामेन वा जनेन 'शरीरमाद्यं खलु धर्मसाधनम्', 'धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम्' इत्यादिवचनेषु निहितम् हितोपदेशम् अनुसृत्य सर्वदा स्वशरीरारोग्यम् सम्पादनीयम्, कथमपि च स्वास्थ्यम् न विनाशनीयम्। स्वास्थ्यम् हि जीवनस्य परमम् रत्नम् अस्ति, अस्मिन् च रत्ने नष्टे जीवने किमपि न अवशिष्यते।

## ६२

## व्यायामः स्वास्थ्यसाधनम्

१—**व्यायामस्य अवश्यविधेयत्वम्**—इदम् तु सुविदितम् एव यत् स्वास्थ्येन विना जीवनस्य किमपि कार्यम् समीचीनतया साफल्येन च न सम्पादयितुम् शक्यते। अस्वस्थो हि जनः पदे-पदे विफलताम् अनुभवति। स्वास्थ्यम् जीवनस्य अमूल्यम् रत्नम् वर्तते। अस्य अमूल्यस्य रत्नस्य संरक्षणाय यथा समुचितभोजनादिकानि विभिन्नानि वस्तूनि आवश्यकानि सन्ति, तथैव व्यायामोऽपि परमावश्यकः वर्तते। वस्तुतः शरीरस्य प्रत्येकम् अङ्गानाम् व्यवस्थितरूपेण सम्वर्धनाय, स्वास्थ्यस्य संरक्षणाय, शरीरस्य च बलवत्त्वसम्पादनाय व्यायामः अतीव आवश्यकः अस्ति। एतदेव च कारणम् विद्यते यत् स्वाभाविकरूपेण एव बालकैः शैशवकाले व्यायामः सम्पाद्यते। शिशवः सर्वदैव स्वकीयानाम् हस्तपादादिकानाम् अङ्गानाम् आयामम् कुर्वते, अयम् एव च तेषाम् व्यायामः वर्तते। शिशूनाम् अनया चेष्टया प्रकृतिः शिक्षाम् ददाति यत् 'सर्वदैव व्यायामः विधेयः' इति।

२—**शारीरिकबलस्य अथ च तत्सम्पादनहेतुत्वेन व्यायामस्य महत्त्वम्**—यद्यपि अद्य शारीरिकबलस्य तादृशम् महत्त्वम् न दृश्यते यादृशम् प्राचीनकाले आसीत्, यदा हि शारीरिकबलसम्पन्न एव पुरुषः विजयी भूत्वा स्वकार्याणि साधयितुम् शक्तः भवति स्म, यदा च पुरुषस्य सर्वम् अपि जीवनम् केवलम् शारीरिकबले निर्भरम् आसीत्; किन्तु पुनरपि शारीरिकबलस्य आवश्यकता साम्प्रतम् अपि नगण्या नास्ति। वस्तुतः शारीरिकबलस्य सार्वकालिम् महत्त्वम् अस्ति। अद्यापि तेन विना जीविकोपार्जनात् आरभ्य राष्ट्रसंरक्षणपर्यन्तम् किमपि कार्यम् विधातुम् न शक्यते। अद्यापि जीवनसङ्ग्रामः कठिन एव वर्तते। यो हि अधिकम् परिश्रमम् कर्त्तुम् शक्नोति, स एव सफलीभवति। अधिकश्च परिश्रमः शारीरिकबलेन एव कर्त्तुम् शक्यते। दुर्बलो हि पुरुषः शीघ्रम् एव श्रान्तः भूत्वा स्वकार्यात् विरमति, बलवाँश्च पुरुषः बहुकालपर्यन्तम् कार्यनिरतः सन् साफल्यम् प्राप्नोति। दुर्बलः पुरुषः संघर्षेषु व्यथितः भवति, फलतश्च सः पदे-पदे

खिन्नः भवति, अन्ततश्च सः आत्मविश्वासहीनोऽपि जायते। अपरतश्च, बलवान् पुरुषः सर्वान् संघर्षान् उत्तरति, समागताः विपत्तीश्च धैर्येण सहते, सर्वदा च उत्साहेन, साहसेन, आत्मविश्वासेन च युक्तः तिष्ठति। एवञ्च इदानीम् अपि जीवनसाफल्यस्य तत्त्वम् शरीरिके बले निहितम् वर्तते। शारीरिकबलस्य च सम्पादनस्य परमम् साधनम् व्यायामः अस्ति। फलतः शारीरिकबलसम्पादनाय स्वास्थ्यसंरक्षणाय च व्यायामस्य अनल्पा उपयोगिता वर्तते।

**३—व्यायामस्य प्रकाराः**—व्यायामस्य अनेके प्रकाराः भवन्ति, यथा-भ्रमणम्, कूर्दनम्, जलसन्तरणम्, सूर्यनमस्कारः, शरीरस्य दण्डायमानता-सम्पादनम्, शरीरस्य उत्थापन - स्थापन - क्रिया, विभिन्नानि आसनानि, विभिन्नाश्च क्रीडाः, इत्यादयः। एतेषु भ्रमणम् अतीव सरलम् सर्वसाध्यम् च सत् परमलाभकारि वर्तते। आत्मरुचेः अनुसारेण कोऽपि व्यायामप्रकारः अङ्गीकर्त्तुम् शक्यते, किन्तु व्यायामः अवश्यम् एव करणीयः वर्तते।

**४—व्यायामस्य नियमाः**—व्यायामसम्पादनाय कतिपयानाम् नियमानाम् अपि पालनम् आवश्यकम् वर्तते। सर्वप्रथम् तु व्यायामस्म विषये अयम् नियमः पालनीयः वर्तते यत् व्यायामः सर्वथा मुक्ते वाते वातावरणे वा स्यात्। तादृशे स्थले यत्र वातावरोधः वर्तते, व्यायामकरणेन कोऽपि लाभः नास्ति, अपि तु तद्विपरीतम् हानेः एव सम्भावना भवति।

द्वितीयश्च नियमः ध्येयः अस्ति यत् प्रायः सर्वेषाम् अपि अङ्गानाम् व्यायामः जायेत येन सर्वाङ्गानाम् लाभः स्यात्।

तृतीयश्च नियमः अस्ति यत् व्यायामः नियतरूपेण स्यात्। एकस्मिन् दिने व्यायामः कृतः, पुनः सप्ताहानाम् अवकाशः गृहीतः, एतेन कोऽपि लाभः नास्ति, शरीराङ्गपीडा एव हस्तगता भविष्यति। एवमेव व्यायामः प्रतिदिनम् नियते समये करणीयः।

चतुर्थोऽयम् नियमोऽस्ति यत् 'अति सर्वत्र वर्जयेत्' इति उक्तिम् अनुसन्धाय व्यायामातिरेकम् न कुर्यात्। तावान् एव व्यायामः आवश्यकः, यावता शरीरे साधारणो श्रान्तिः समुत्पद्येत। श्रान्तेः अतिरेकेण हानेः सम्भावना भवति, अङ्गानि च शिथिलानि भवन्ति। व्यायामस्य मात्रया शनैः शनैः वर्धनीयम्, न तु एकपदे एव। मानसिकपरिश्रमम् कुर्वद्भिः जनैः एतादृशाः व्यायामप्रकाराः सम्पादनीयाः येषु मनोरञ्जनम् अपि स्यात्। एतेभ्यः भ्रमणम् परमोपयुक्तम् वर्तते, मनोरञ्जनकर्यः क्रीडाश्च अपि उपयोगिन्यः सन्ति।

उक्तनियमानाम् पालनेन सह व्यायामसम्पादनेन परमः लाभः भवति, स्वास्थ्यम् सुरक्षितम् तिष्ठति, बलवत्ता वर्धते, मनः प्रसन्नम् तिष्ठति, कार्येषु रुचिः वर्धते, जीवने च सफलता चरणचुम्बनम् करोति। फलतः सदैव नियतरूपेण व्यायामः विधेयः। स्वास्थ्येन सर्वम् साध्यते, किन्तु स्वास्थ्यस्य विषये अपि इदम् ध्येयम् वर्तते यत्—'व्यायामः स्वास्थ्यसाधनम्' इति।

## ६३

# 'नास्त्युद्यमसमो बन्धुः'

१—उद्यमस्य बन्धुत्वम्—जनस्य जीवने विविधानाम् साध्यानाम् साधने, आपतताम् कष्टानाम् निवारणे, उपस्थितानाम् गूढानाम् समस्यानाम् च समाधाने ये सहायकाः भवन्ति, ते एव तस्य 'बन्धवः' इति उच्यन्ते। अत एव मातापितरौ, गुरवः, सखायः, कौटुम्बिकाः परिजनाः, सम्बन्धिनः, सहयात्रिणः, स्वदेशवासिनः, अन्येऽपि च सर्वे सहायकाः जनाः बन्धुकोटौ समाविशन्ति। यतः उक्तेषु विषयेषु स्वकीयः उद्यमः अपि सहायकः भवति, अतः सोऽपि एकः 'बन्धुः' अस्ति। जनस्य वर्तमानेषु एतेषु विभिन्नेषु बन्धुषु महत्तमः बन्धु कः अस्ति यः सर्वदा एव तस्य अनिवार्यतः सहायकः वर्तते चेत् इत्येव कथनीयत्वेन आपतति यत्-'नास्त्युद्यमसमो बन्धुः' इति।

२—उद्यमस्य सर्वेषु बन्धुषु उत्कृष्टतमत्वम्—वस्तुतः जनस्य जीवने स्वसाध्यसाधनाय, कष्टनिवारणाय, समस्यासमाधनाय, जीवनसंघर्षोत्तरणाय च यावान् सहायकः स्वोद्यमः भवति, न तावान् अन्यः कोऽपि। माता सर्वान् बन्धून् अतिशेते, किन्तु यदि स्तनन्धयः बालः स्तन्यपानार्थम् स्तनचूषणे स्वोद्यमम् न कुर्यात् चेत् माता किम् करिष्यति। यदा अनेन प्रकारेण स्तनन्धयैः अपि सामर्थ्यहीनैः बालैः सर्वेषु मातापित्रादिषु बन्धुषु वर्तमानेषु अपि स्वोद्यमेन एव स्वसाध्यम् साधयितुम् शक्यते, पुनः अन्येषाम् सामर्थ्ययुक्तानाम् प्रौढानाम् जनानाम् का कथा। तैस्तु नितराम् स्वसाध्यसाधनाय स्वोद्यम एव सर्वथा समाश्रयणीयः। तेषाम् तु सहायतार्थम् बन्धवः अपि तथा सर्वदा उपस्थातुम् न शक्नुवन्ति, यथा ते स्तनन्धयस्य बालस्य सहायतार्थम् पदे-पदे वर्तन्ते।

पिता धनस्य कियतीम् अपि मात्राम् पुत्राय संरक्षिताम् निदध्यात्, किन्तु यदि पुत्रस्य तद्रक्षणे तत्सम्वर्धने च उद्यमः न स्यात् चेत् तत् धनम् अवश्यम् एव अशेषतः नाशम् गच्छेत्। गुरुः कियता अपि स्नेहेन अध्यवसायेन च सह शिष्याय विद्याम् दद्यात्, किन्तु यदि शिष्यस्य तद्ग्रहणधारणयोः उद्यमः न स्यात् चेत् सर्वा अपि गुरुदत्ता विद्या विफला एव भवति।

एवमेव सखायः, कौटुम्बिकाः परिजनाः, सम्बन्धिनः, स्वदेशवासिनः, राजपुरुषाः, राजानः, अन्येऽपि च सर्वे जनाः कियतीम् अपि सहायताम् कुर्युः, यदि जनस्य स्वोद्यमः नास्ति चेत् सर्वा अपि सहायता व्यर्था एव भवति। न कोऽपि बन्धुः सर्वदा जनस्य समीपे स्थातुम् शक्नोति, समीपे स्थित्वा अपि न जनस्य सर्वाम् स्थितिम् ज्ञातुम् शक्नोति, ताम् ज्ञात्वा अपि च न सर्वदा तदनुरूपम् कार्यम् कर्त्तुम् शक्नोति। सर्वेषु कालेषु सर्वासु अवस्थासु च जनः स्वयम् एव केवलम् स्वात्मना सह आस्ते, अतः स्वोद्यम एव स्वस्य वास्तविकः बन्धुः वर्तते, न अन्यः कोऽपि। अत एव भगवता गीताकारेण समीचीनम् एव उपदिष्टम्—'आत्मैव ह्यात्मनो बन्धुः' इति।

**३—स्वोद्यमः जगदीश्वरश्च**—जगदीश्वरः भगवान् यद्यपि जनस्य सर्वोत्तमः बन्धुः मन्यते, किन्तु सोऽपि जनस्य स्वशरणवरणाय उद्यमम् अपेक्षते। सोऽपि तस्य एव सहायताम् करोति यः स्वसहायतायै स्वोद्यमम् करोति। भगवान् जनाय स्वप्राप्तिम् अपि तदा एव कारयति यदा सः समुचितम् उद्यमम् करोति, अन्यथा 'नायमात्मा बलहीनेन लभ्यः' इत्युपनिषद्वचनानुसारेण सः स्वोद्यमरूपेण बलेन विना भगवत्प्राप्तेः विरहित एव तिष्ठति। एवम् स्वोद्यमः सर्वाधिकः बन्धुस्तु भवति एव, सः परमेश्वराधिकोऽपि बन्धुः भवति। एवञ्च इदम् सूक्तम् एव वर्तते यत् 'नास्त्युद्यमसमो बन्धुः' इति,

**४—उद्यमस्य सर्वेषु क्षेत्रेषु साफल्यजनकत्वम्**—अयम् दैनन्दिनः अनुभवः वर्तते यत् यः जनः सर्वदा उद्योगपरायणः वर्तते, सः सर्वत्र एव स्वकीये वैयक्तिके, सामाजिके, आर्थिके, राजनैतिके च जीवने साफल्यम् प्राप्नोति; सः स्वोद्योगेन एव विद्यायाः धनस्य च उपार्जनम् कृत्वा विद्वान् धनवांश्च भवति, समाजे च सम्मानितः भवति, सः स्वोद्योगेन जनानाम् सङ्घटनम् कृत्वा तेषाम् मतबलेन विभिन्नासु राजनैतिकीषु संस्थासु उच्चपदानि अधिकरोति, शासने च अधिकारम् गृह्णाति। वस्तुतः सर्वविधा लक्ष्मीः तस्य एव पुरुषस्य वरणम् करोति, यः सततम् उद्योगपरायणः वर्तते, यथा च उक्तम् अस्ति—'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः' इति।

इदानीम् विकासोन्मुखेषु विभिन्नेषु राष्ट्रेषु विभिन्नाः योजनाः प्रवर्तिताः सन्ति। शासनस्य महान् अभिनिवेशः वर्तते यत् आसाम् योजनानाम् साफल्यम् स्यात्, किन्तु यदि राष्ट्रवासिनः जनाः उदासीनाः उद्योगविहीनाश्च वर्तन्ते चेत्, सर्वाः अपि योजनाः विफला एव भवन्ति। अपरतश्च, यदि जनानाम् समुद्योगः भवेत् चेत् सम्पूर्णस्य राष्ट्रस्य समुन्नतिः भवति, जनानाम् अपि वैयक्तिकम् कल्याणम् भवति। तात्पर्यम् इदम् यत् जीवनस्य यावन्तः अपि साध्याः धर्मार्थकामादयः वर्तन्ते, राष्ट्राणाम् च समष्टिरूपेण यावन्ति प्राप्तव्यानि लक्ष्याणि वर्तन्ते, तत् एतत् सर्वम्

उद्योगसाध्यम् एव वर्तते । यदि जनः स्वकीयम् पौरुषम् उद्योगम् वा उपेक्ष्य केवलम् स्वभाग्ये एव निर्भरः भवति चेत् तस्य विनाश एव निश्चितः भवति । भाग्यम् तु यत् करिष्यति तत् करिष्यति एव, जनेन स्वपौरुषम् अपि समीचीनतया उपयोजनीयम्, येन पुरुषत्वस्य सार्थकता स्यात्—'दैवं निहत्य कुरु पौरुषामात्मशक्त्या' । विश्वेऽस्मिन् यावन्तः अपि महापुरुषाः अभवन् ते स्वोद्योगेन एव तादृशाः अभवन्, न तु हस्तस्य उपरि हस्तस्य निधानेन । वयम् अपि यदि अभिलषामः यत् जीवने साफल्यम् प्राप्नुयाम चेत् अस्माभिः अपि सर्वदा उद्योगपरायणैः भाव्यम् अर्थात् सर्वदा सर्वोत्तमः बन्धुः स्वोद्यमः समाश्रयणीयः ।

कतिचन जनाः 'सन्तोष एव पुरुषस्य परं निधानम्' इतिसदृशानि वाक्यानि अनुसृत्य यथाप्राप्तेन एव पदार्थेन यथाप्राप्त्या एव स्थित्या वा सन्तोषम् कृत्वा प्रगतये न प्रयतन्ते, किन्तु इयम् मनःस्थितिः उचिता नास्ति । उक्तस्य वाक्यस्य इदम् एव तात्पर्यम् वर्तते यत् कस्मैचित् अपि पदार्थाय अतितृष्णा न कर्तव्या अथ च प्राप्तुम् अशक्याय पदार्थाय तृष्णा न कर्तव्या । अस्य इदम् तात्पर्यम् नास्ति यत् प्रगतये दुःस्थितिनिवारणाय वा प्रयत्न एव न कर्त्तव्यः ।

कतिचन जनाः 'सर्वङ्कषा भगवती भवितव्यतैव', 'भाग्यं फलति सर्वत्र न च विद्या न च पौरुषम्' इतिसदृशानि वाक्यानि अनुसृत्य सर्वम् भाग्यस्य उपरि निक्षिप्य प्रयत्नात् विरताः भवन्ति, किन्तु इयम् अपि मनःस्थितिः उचिता नास्ति । यथा च इदानीम् एव पूर्वम् कथितम्, भाग्यम् तु यत् करिष्यति तत् करिष्यति एव, जनेन अपि तु स्वप्रगतये किञ्चित् विधेयम् । अत्र विषये इदम् ध्येयम् वर्तते यत् भाग्यम् अपि स्वतन्त्रम् वस्तु नास्ति, अपि तु 'पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते' इतिरीत्या कर्मणः उद्यमस्य वा एव एकम् अपरम् रूपम् वर्तते । अतः उद्यम एव प्राधान्यम् धत्ते । स एव भाग्यम् अपि निर्मापयाति ।

अस्तु ! इत्थम् इदम् पुनरावर्तयितुम् आवश्यकता नास्ति यत् सर्वाभिः दृष्टिभिः जनस्य उद्यम एव तस्य सर्वोत्तमः बन्धुः अस्ति, अतः स एव सर्वात्मना समाश्रयणीयः वर्तते ।

६४

## आदर्शः नागरिकः

**१—राष्ट्राय आदर्शनागरिकस्य महत्त्वम्**—सामान्यतया कस्यापि राज्यस्य प्रत्येकम् सदस्यः, यस्य राज्यात् कतिचन अधिकाराः प्राप्ताः भवन्ति, यस्य च राज्यम् प्रति कानिचित् कर्त्तव्यानि पालनीयानि भवन्ति, तस्य राज्यस्य नागरिकः भवति, किन्तु राज्यस्य सर्वेऽपि नागरिकाः आदर्श-नागरिकाः न भवन्ति, आदर्शे नागरिके किञ्चित् अधिकम् अपेक्षितम् वर्तते। समाजस्य राज्यस्य च सुखम्, शान्तिः, कल्याणम्, सुव्यवस्था, समुन्नतिः, शक्तिः, गौरवम् च इत्येतत् सर्वम् आदर्शनागरिकेषु एव अवलम्बितम् वर्तते। यस्मिन् समाजे राज्ये च आदर्शनागरिकाणाम् यावदेव आधिक्यम् भवति, तावदेव तस्य समाजस्य राज्यस्य च सुखित्वम्, कल्याणवत्त्वम्, समुन्नतत्वम् सुव्यवस्थितत्वम्, शान्तिमत्त्वम्, बलवत्त्वम्, गौरवपूर्णत्वम् च भवति।

**२—आदर्शनागरिकस्य साधारणनागरिकात् विशिष्टत्वम्**—आदर्श-नागरिके साधारणात् नागरिकात् निश्चितरूपेण किञ्चित् वैशिष्टयम् भवति। यथा च इदानीम् एव उक्तम्, सर्वसाधारणः नागरिकः राज्यात् कतिचन अधिकारान् प्राप्नोति, राज्यम् प्रति च केषाञ्चित् कर्त्तव्यानाम् पालनम् तस्मात् अपेक्षितम् भवति। सर्वसाधारणः नागरिकः राज्यात् प्राप्तानाम् अधिकाराणाम् प्रयोगम् समुचितरूपेण न करोति, राज्यम् प्रति स्वकर्त्तव्या-नाम् पालनम् च समीचीनतया न करोति। किन्तु आदर्शः नागरिकः स्वकी-यम् उत्तरदायित्वम् समीचीनतया जानाति, सः स्वाधिकाराणाम् प्रयोगम् स्वकर्त्तव्यानाम् च पालनम् सर्वदा सम्यग् रूपेण एव विदधाति। उदाहरणा-र्थम्, प्रत्येकम् नागरिकाय राज्यात् अयम् अधिकारः दत्तः वर्तते यत् सः शासनस्य अनुचितानाम् कार्याणाम् समालोचनम् कर्त्तुम् शक्नोति अथ च तदनुसारेण उचितरीत्या शासनस्य नीतेः विरोधम् कर्त्तुम् शक्नोति, किन्तु बहवः नागरिकाः स्वम् उत्तरदायित्वम् अविगणय्य स्वाधिकारस्य च सीमानम् अविज्ञाय असंयतायाम् अशिष्टायाम् च भाषायाम् असयतरूपेण शासनस्य आलोचनाम् तस्मिन् वैयक्तिकान् आक्षेपाँश्च कुर्वन्ति, येन जनहितस्य स्थाने

जनानाम् अहितम् एव भवति, अशान्तिश्च वर्धते । आदर्शः नागरिकः अस्य अधिकारस्य प्रयोगम् समुचितरूपेण कुर्वन् फलतश्च शासनम् तदनुचितकार्याणि प्रति ध्यानम् दातुम् प्रेरयन् जनहितम् साधयति ।

अनेनैव प्रकारेण प्रत्येकम् नागरिकाय राज्यात् मताधिकारः दत्तः वर्तते येन सः गुणयुक्तान् योग्यान् जनसेवकान् स्वमतबलेन राज्यशासनाधिकारे नियुक्तान् करोति । बहवः नागरिकाः अस्य अधिकारस्य महत्त्वम् अनाकलय्य धनलोभेन, संकुचितसाम्प्रदायिकभावनया, अनुचितप्रभावादिकेन अन्येन कारणेन वा यस्मै कस्मैचन गुणविहीनाय अयोग्याय जनाय स्वमतम् ददति येन समाजस्य राज्यस्य वा अहितम् एव भवति । किन्तु आदर्शः नागरिकः स्वमताधिकारस्य महत्त्वम् पूर्णरूपेण जानन् प्रत्याशिनाम् गुणदोषान् समीचीनतया समीक्षते, पुनश्च स्वेच्छया, न तु केनचित् अनुचितेन प्रभावेण गुणयुक्ताय प्रत्याशिने स्वमतम् ददाति, येन जनकल्याणम् एव भवति ।

प्रत्येकम् नागरिकस्य अयम् अपि अधिकारः प्राप्तः वर्तते यत् सः राज्यस्य विभिन्नासु संसदादिकासु संस्थासु जनमतबलेन गत्वा शासने स्वयोगदानम् करोति । किन्तु बहवः नागरिकाः तत्र गत्वा स्वार्थसाधनम् एव कुर्वन्ति, जनहितम् च सर्वदा एव उपेक्षन्ते । अपरतश्च आदर्शः नागरिकः निर्वाचितः सन् स्वस्य उत्तरदायित्वस्य समीचीनतया निर्वाहम् कुर्वन् स्वार्थभावनाम् समूलम् निरस्य सर्वदा जनहितसाधनाय एव प्रयतते ।

आदर्शः नागरिकः स्वाधिकारान् इव स्वकर्त्तव्यानि प्रति अपि सदा जागरूकः भवति । सर्वेषाम् नागरिकाणाम् इदम् कर्त्तव्यम् वर्तते यत् ते राज्यस्य विधानस्य विधीनाम् च पालनम् कुर्युः, राज्याय करम् दद्युः, राज्यकार्येषु रुचिम् निधाय तत्र सहयोगम् दद्युः, राष्ट्रगौरवम् च सर्वथा रक्षेयुः । किन्तु बहवः नागरिकाः विधानस्य उल्लङ्घनम् कुर्वन्ति, विधीनाम् च पालनम् न कुर्वन्ति, करापहरणम् कुर्वन्ति, राज्यकार्येषु काञ्चन अपि रुचिम् न दधते, राज्याय सहयोगदानस्थाने तत्र विघ्नम् उपस्थापयन्ति, सहैव च एतादृशानि अनेकानि कार्याणि कुर्वते येन राष्ट्रगौरवम् हीनम् भवति, अपरतश्च आदर्शः नागरिकः एतेषाम् सर्वेषाम् अपि कर्त्तव्यानाम् पालनम् निष्ठया सह करोति । तात्पर्यम् इदम् यत् यत्र सर्वसाधारणः नागरिकः राज्यसम्बन्धिनाम् साधारणानाम् अपि स्वकीयानाम् अधिकाराणाम् प्रयोगम् कर्त्तव्यानाम् च पालनम् समीचीनतया न करोति, तत्र आदर्शः नागरिकः एतत् सर्वम् पूर्णेन उत्तरदायित्वेन सह निष्ठया करोति । इदम् एव च आदर्शनागरिकस्य साधारणनागरिकात् वैशिष्ट्यम् अस्ति ।

**३—आदर्शनागरिकस्य गुणाः**—यथा च आदर्शनागरिकस्य उक्तेन

वैशिष्ट्येन स्पष्टम् अस्ति, तस्मिन् कतिचन गुणाः अपेक्षिताः भवन्ति। सर्वप्रथमम् तु तस्य स्वराष्ट्रेण सह पूर्णम् तादात्म्यम् आवश्यकम् वर्तते। तस्य सर्वम् अपि कार्यजातम् राष्ट्रहिताय एव भवेत्, राष्ट्रस्य हिताहितम् तस्य स्वकीयम् हिताहितम् स्यात्। राष्ट्रीयतायाः भावना तस्मिन् मूर्त्तरूपेण सर्वदा जागृता तिष्ठेत्। राष्ट्रगौरवम् तस्य सर्वोपरिभूतम् लक्ष्यम् स्यात्। स्वकीयराष्ट्राभिमानम् सः स्वाभिमानरूपेण मन्येत। फलतश्च स्वार्थस्य, स्वपरिवारहितस्य, साम्प्रदायिकतायाः, प्रान्तीयतायाः, दलबन्धनस्य च संकुचिताः भावनाः तस्य हृदये अस्मिन् रूपे न तिष्ठेयुः येन राष्ट्रस्य अहितम् स्यात्। सः स्वार्थम् साधयितुम्, स्वपरिवारहितम् च कर्त्तुम्, अथ च स्वभाषाम्, स्वजातिम्, स्वसम्प्रदायम्, स्वप्रान्तम्, स्वदलम् च प्रति निष्ठाम् रक्षितुम् स्वतन्त्रः अस्ति, किन्तु इयम् स्वतन्त्रता कदापि राष्ट्रहितस्य राष्ट्र-निष्ठायाश्च मार्गे बाधिका न स्यात्, अपि तु सर्वदा एव तदङ्गरूपेण तिष्ठेत्। तस्य राष्ट्रहितभावना राष्ट्रनिष्ठा च एतादृशी स्यात् यत् सः आवश्यकता-याम् सत्याम् राष्ट्ररक्षार्थम् स्वबलिदानम् अपि कर्त्तुम् सदा सन्नद्धः स्यात्।

आदर्शे नागरिके अन्ये गुणाः ते एव स्युः ये च आदर्शे मानवे अपेक्षिताः भवन्ति। निदर्शनार्थम्, सः स्वशरीरेण स्वस्थः भवेत्, अस्वस्थो हि जनः न तु स्वकल्याणम् एव कर्त्तुम् समर्थः भवति, न च जातेः, समाजस्य, राष्ट्रस्य वा एव कल्याणम् कर्त्तुम् शक्नोति। सः स्वमनसा अपि स्वस्थः तिष्ठेत्, स्वस्थेन एव मनसा जनः सर्वम् निष्ठया विवेकेन च कर्त्तुम् पारयति, न तु अस्वस्थेन मनसा।

आदर्शः नागरिकः सुशिक्षितः अपि स्यात्। तस्य शिक्षायाः प्रधानम् उद्देश्यम् च इदमेव स्यात् यत् सः आदर्शः मानवः नागरिकश्च सन् स्वस्य समाजस्य, राष्ट्रस्य, विश्वस्य च भौतिकम् आध्यात्मिकम् च कल्याणम् यथाशक्यम् साधयेत्। महिलानाम् अपि नागरिकत्वात् तासाम् अपि शिक्षायाः इदम् प्रधानम् उद्देश्यम् स्यात्। पुरुषाणाम् महिलानाम् च शिक्षायाः एतद-तिरिक्तम् उद्देश्यम् विशिष्टरूपेण स्वस्वक्षेत्रसम्बन्धि भवितुम् शक्नोति, अथ च तेन भाव्यम् अपि, किन्तु उभयेषाम् शिक्षायाः समानरूपेण प्रमुखम् उद्देश्यम् तु उक्तम् एव स्यात्। एतेन 'स्त्रीशिक्षा कीदृशी स्यात्' इति प्रश्नस्य अपि उत्तरम् दत्तम् भवति।

एतदतिरिक्तम्, आदर्शः नागरिकः प्रमुखतः ज्ञानशक्तिसम्पन्नः, विवेक-युक्तः विचारवान्, चरित्रवान्, उदारहृदयः, संयमी, जनसेवापरायणः, परोपकारी, सत्यनिष्ठः, आप्तः, उत्तरदायित्वयुक्तश्च स्यात्।

उक्तैः गुणैः सम्पन्नाः आदर्शाः नागरिकाः एव राष्ट्रस्य विभूतयः

भवन्ति। तेषाम् आधारे एव राष्ट्रस्य जीवनम् गौरवम् च सुरक्षितम् भवति। तेषाम् आधारे एव लोकतन्त्रम् सफलम् भूत्वा अस्मिन् रूपे प्रशंसनीयम् भवति यत्—

'सर्वेषां राज्यतन्त्राणां लोकतन्त्रं विशिष्यते।'

फलतः अस्माकम् इदम् सर्वप्रथमम् कर्त्तव्यम् अस्ति यत् वयम् सर्वदा आदर्शनागरिकगुणान् स्वात्मनि विकासयेयुः येन वयम् वर्तमानस्य लोकतन्त्रस्य साफल्यम् सम्पादयन्तः राष्ट्रकल्याणेन सह स्वात्मकल्याणम् साधयितुम् समर्थाः स्याम।

## ६५

# 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'

१—**प्रास्ताविकम्**—'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इत्यत्र यद्यपि जननी जन्मभूमिश्च, इत्यनयोः उभयोः अपि शब्दशः स्वर्गात् गरीयस्त्वप्रतिपादनात् मुख्यविषयत्वम् प्रतीयते, किन्तु यतः जनन्याः वत्सलत्वात् सुखप्रदत्वेन स्वर्गतुल्यत्वम् सर्वसाधारणजनानुभाव्यम् अस्ति, अथ च अपरतः जन्मभूमेः सुखप्रदत्वेन स्वर्गतुल्यत्वम् जनन्यपेक्षया न्यूनतररूपेण एव जनानुभाव्यम् अस्ति, एवञ्च जन्मभूमेः स्वर्गस्य च स्थानविशेषत्वनिरूपितम् समानत्वम् अपि अस्ति, अतः स्पष्टम् अस्ति यत् अत्र जन्मभूमिः एव प्रस्तुतः मुख्यः वा विषयः अस्ति, अथ च अत्र जननी केवलम् तस्याः इव जन्मभूमेः स्वर्गात् गरीयस्त्वसूचनाय अप्रस्तुतरूपे परिगृहीता वर्तते। यतो हि अलङ्कारविन्यासेन सह समत्तधर्मयोः प्रस्तुताप्रस्तुतयोः एकधर्माभिसम्बन्धः कथ्यते एव, अतः अत्रापि अलंकारस्य विन्यासेन प्रस्तुतभूतायाः जन्मभूमेः अप्रस्तुतभूतायाश्च जनन्याः 'स्वर्गादपि गरीयसी' इतिरूपे एकः समानः धर्मः कथितः अस्ति। इत्थम् अस्याम् उक्तौ जन्मभूमेः एव मुख्यविषयत्वात् तस्याः एव विषये अत्र किञ्चित् वक्तव्यम् अस्ति।

२—**जन्मभूमेः स्वरूपम्**—यद्यपि सर्वा अपि विश्वभूमिः अखण्डरूपेण एका एव वर्तते, अतश्च विश्वेऽस्मिन् यत्र कुत्रापि जातानाम् जनानाम् सर्वा अपि विश्वभूमिः जन्मभूमिः एव कथयितुम् शक्यते, किन्तु यतो हि स्वयम् 'जन्मभूमिः' इति शब्द एव सूचयति यत् स्वजन्मभूमिम् अतिरिच्य अन्याः अपि भूमयः वर्तन्ते यदपेक्षया जनस्य जन्मनः भूमिः एव एका वैशेष्येण 'जन्मभूमिः' इति कथ्यते, न इतरा, अन्यथा एकस्याम् एव अखण्डायाम् भूमौ सत्याम् उक्तशब्दप्रयोगस्य आवश्यकता एव न अनुभूयमाना स्यात्, अतः स्वेतरभूमिभिन्ना स्वतन्त्रस्वरूपयुक्ता एका विशिष्टा भूमिः एव जनस्य जन्मभूमिः भवति। का इयम् भूमिः या अखण्डायाम् अपि विश्वभूमौ वैशेष्येण 'जन्मभूमिः' इति कथ्यते, इति जिज्ञासायाः समाधानार्थम् तथ्यम् इदम् अनुसन्धानीयम् भवति यत् सर्वा अपि विश्वभूमिः भौगोलिकदृष्ट्या

विभिन्नेषु भागेषु विभक्ता वर्तते। सर्वेषाम् भूभागानाम् परस्परभिन्नम् भौगोलिकम् वातावरणम् स्वरूपम् च अस्ति। अत एव एकस्मिन् भूभागे जातः जनः भागान्तरेषु जातेभ्यः जनेभ्यः स्वत एव भिन्नः सन् एवम् परिचीयते यत् अयम् तद्भूभागीयः जनः, इति। एकस्मिन् भूभागे जातानाम् जनानाम् एका सांस्कृतिकी परम्परा अपि भवति या भूभागान्तरीयाभ्यः विभिन्नाभ्यः सांस्कृतिकपरम्पराभ्यः पृथक् स्वानुरूपतया स्वतन्त्ररूपेण विकसितम् स्वकीयम् स्वतन्त्रम् स्वरूपम् धत्ते। एतत्स्वरूपानुकूलम् एव जनाः स्वकीयाम् भाषाम्, वेशभूषाम्, विचारधाराम्, विभिन्नेषु धार्मिक-सामाजिक-राजनैतिकादिक्षेत्रेषु व्यावहारिकीम् पद्धतिम् च आत्मीयरूपेण दधते। फलतश्च ते कुत्रापि गत्वा स्वम् आन्तरिकम् स्वरूपम् न तु स्वतः विस्मरन्ति, न च तत् स्वेतरभिन्नासु सांस्कृतिकपरम्परासु पालितेभ्यः जनेभ्यः तिरोहितम् एव भवति। प्रत्येकम् भूभागे राजनैतिकम् अपि च एकम् रूपम् भवति यदनुसारेण सर्वेऽपि भूभागाः नितान्तम् एव परस्परभिन्नत्वेन तिष्ठन्ति। एवम् प्रत्येकम् भूभागः भौगोलिक-सांस्कृतिक-राजनैतिक-दृष्टिभिः स्वेतरभूभागभिन्नम् स्वतन्त्रम् स्वरूपम् धत्ते, अतः स एकः स्वतन्त्रव्यक्तित्ववान् भभागः सन् 'देशः', 'राष्ट्रम्' वा इति व्यवह्रियमाणः स्वतन्त्ररूपेण विराजते, अथ च स एव तत्र जातानाम् जनानाम् 'जन्मभूमिः' इति व्यवह्रियते।

राष्ट्राणाम् भौगोलिकदृष्टया यत् स्वतन्त्रम् भौतिकम् व्यक्तित्वम् वर्तते, तत् तेषाम् शरीरम् अस्ति, यच्च तेषाम् राजनैतिकदृष्टया स्वतन्त्रम् शासकीयम् राजकीयम् वा व्यक्तित्वम् वर्तते, तत् परिधानमात्रम् अस्ति, किन्तु यत् तेषाम् सांस्कृतिकदृष्टया आध्यात्मिकम् आन्तरिकम् स्वतन्त्रम् व्यक्तित्वम् वर्तते, तत् तेषाम् वास्तविकम् जीवनाधायकम् स्वरूपम् अस्ति। एतादृशाः स्वतन्त्रव्यक्तित्ववन्तः अनेके परस्परभिन्नाः देशाः एकस्याम् अपि विश्वभूमौ सन्ति। फलतश्च जनानाम् स्वजन्मदेश एव तेषाम् जन्मभूमिः भवति, न तु सर्वा अपि विश्वभूमिः।

**३—जन्मभूमेः स्वर्गात् गरीयस्त्वस्य हेतुः**—जनस्य पूर्णम् अपि व्यक्तित्वम् स्वजन्मदेशव्यक्तित्वस्य एव एकः अंशः भवति, अतः अंशभूतः जनः स्वांशिभूताय स्वजन्मदेशाय स्वत एव स्वाभाविकरूपेण स्निह्यति। कोऽपि जनः स्वजन्मदेशात् वियुक्तः सन् तम् प्राप्तुम् तथैव त्वरते, यथा कोऽपि स्तनन्धयः बालः स्वजननीवियुक्तः ताम् प्रति त्वरते, यतो हि जनः सर्वतोभावेन तथैव स्वजन्मदेशाश्रितः भवति यथा बालः सर्वथा स्वजनन्याश्रितः भवति। स्वदेशात् बहिः जनः स्वस्वरूपेण एव विच्छिन्नमूलः भवति, अतः स्वात्मस्नेही जनः स्वत एव स्वराष्ट्रस्नेही भवति।

स्वकीया ममतामयी जननी, हितसाधनतत्परः वत्सलः जनकः, स्नेहसुस्निग्धहृदयाः भ्रातरः, रमणीया रसधारास्रोतस्विनी प्रियतमा पत्नी,

अङ्कालङ्करणोपकरणस्वरूपाः प्रियाः वत्साः, समसुखदुःखाः स्नेहिनः कौटुम्बिकाः परिजनाः, सखायः, सम्बन्धिनश्च, इत्येवंरूपम् स्वगृहस्य यत् आन्तरिकम् आध्यात्मिकम् स्वरूपम् अस्ति, तत् किमाधारकम् किंमूलकम् वा अस्ति ? इदम् स्वजन्मदेशरूपमहागृहाध्यात्मिकस्वरूपाधारकम् एव । अतः स्वगृहस्नेही जनः स्वदेशस्नेही भवति ।

परम्परागतरूपेण बहोः कालात् निवसताम् पूर्वपुरुषाणाम् सन्तानस्वरूपाः, समानाचारविचारपरायणाः, सामाजिक-राजनैतिक-सांस्कृतिकादिसूत्रेषु समानरूपेण परस्परम् निबद्धाश्च स्वदेशवासिनः भ्रातरः अपि स्वजन्मदेशाधारका एव सन्ति, स्वदेशात् बहिः ते क्व उपलब्धुम् शक्याः ? अतः समानसूत्रनिबद्धस्वजनस्नेही जनः स्वत एव स्वदेशस्नेही भवति ।

उक्तेभ्यः विभिन्नेभ्यः हेतुभ्यः जन्मभूमिः स्वाभाविकस्य अतिशयितस्नेहस्य विषयः भवति, यच्च एतादृशस्य स्नेहस्य प्रेम्णः वा विषयः अर्थात् स्वाभाविकरूपेण अतिप्रियम् भवति तत् स्वभावत एव परमाह्लादकम् परमानन्ददायकम् वा भवति, यच्च परमानन्ददायकम् भवति तत् सुखदायकरूपे मन्यमानात् स्वर्गात् अपि अधिकतरम् आनन्दम् वितरत् तस्मात् गरीयः भवति । फलतः जन्मभूमिः स्वाभाविकरूपेण प्रियत्वात् स्वर्गात् अपि अधिकतरम् आनन्दम् वितरन्ती तस्मात् अपि गरीयसी वर्तते ।

**४—जन्मभूमेः स्वर्गात् गरीयस्त्वे जननीतुल्यत्वम्**—स्वाभाविकस्य अतिशयितस्नेहस्य विषयत्वेन परमानन्ददायकत्वात् स्वर्गात् गरीयस्त्वे स्वजन्मभूमिः स्वकीयजननी इव अथवा अपरा जननी एव वर्तते, यतो हि जनन्याः उत्सङ्गे इव तस्याः सुविस्तीर्णे विशाले वा मङ्गलमये उत्सङ्गे सर्वेऽपि तत्पुत्राः स्नेहिनः भ्रातर इव निश्चिन्तरूपेण प्रेम्णा क्रीडन्तः, विचरन्तः, खादन्तः, पिबन्तश्च, अथ च सहैव कदाचित् कलहायमानाः अपि यथोत्तरम् वर्द्धमानाः पुष्टाः भवन्ति, स्वर्गापेक्षया अपि च अत्र अधिकतरम् सुखम् अनुभवन्ति ।

अस्तु ! इत्थम् केन अपि जननीजन्मभूमिभक्तेन यत् इदम् अनुभूतम् यत्—'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी' इति, तत् यथार्थम् एव अनुभूतम् । यस्य एतादृशः दिव्यः अनुभवः नास्ति स एकः दुर्भग एव पुत्रः वर्तते स्वजन्मभूमिरूपिण्याः जनन्याः ।

## ६६

# अस्माकम् देशः[1]

१—'अस्माकम् देशः' इति प्रयोगस्य विषयः—यद्यपि सकलम् अपि विश्वम् अखण्डरूपेण एकम् एव वर्तते, अतश्च निखिलम् अपि विश्वम् सर्वेषाम् जनानाम् 'अस्माकम् देशः 'इति प्रयोगस्य विषयः भवितुम् शक्नोति, किन्तु तथापि यतो हि सर्वम् अपि विश्वम् भौगोलिकदृष्टचा विभिन्नेषु भागेषु विभक्तम् वर्तते, यद्वशात् सर्वेषाम् भूभागानाम् परस्परभिन्नम् भौगोलिकम् वाताकरणम् स्वरूपम् च अस्ति, सहैव च प्रत्येकम् भूभागानाम् स्वतन्त्ररूपेण विकसितम् स्वकीयम् सांस्कृतिकम् राजनैतिकम् च स्वरूपम् वर्तते, अथ च एवम् प्रत्येकम् भूभागः भौगोलिकसांस्कृतिक-राजनैतिक-दृष्टिभिः स्वेतरभूभागभिन्नम् स्वतन्त्रम् स्वरूपम् धत्ते, अतः स एकः स्वतन्त्रव्यक्तित्वसम्पन्नः भूभागः सन् 'देशः' 'राष्ट्रम्' वा इति व्यवह्रियमाणः स्वतन्त्ररूपेण विराजते, स एव च तत्र जातानाम् जनानाम् 'अस्माकम् देशः' इति प्रयोगस्य विषयः भवति।

२—अस्माकम् देशः भारतवर्षम्—अस्माकम् देशः भारतवर्षम् अपि विश्वस्य एतादृशेषु विभिन्नेषु भागेषु अन्यतमः वर्तते। सोऽपि भौगोलिक-सांस्कृतिक-राजनैतिक-दृष्टिभिः स्वेतरभूभागभिन्नम् स्वतन्त्रम् स्वरूपम् धत्ते। स्वतन्त्रव्यक्तित्वसम्पन्नः अयम् देशः विश्वस्य प्राचीनतमेषु महत्सु देशेषु अन्यतमः अस्ति। विश्वेऽस्मिन् वर्तमानकाले विद्यमानानाम् बहूनाम् राष्ट्राणाम् यदा अस्तित्वम् अपि नासीत्, तदापि भारतवर्षम् गौरवपूर्णेन स्वकीयेन व्यक्तित्वेन सह विराजते स्म। राष्ट्राणाम् भौगोलिकदृष्टचा यत् स्वतन्त्रम् भौतिकम् व्यक्तित्वम् भवति, तत् तेषाम् शरीरस्थानीयम् भवति, यच्च तेषाम् राजनैतिकदृष्टचा स्वतन्त्रम् शासकीयम् राजकीयम् वा व्यक्तित्वम्

---

१—अथवा—'धन्या भारतभूः प्रकामवसुधा प्रत्ना च तत्संस्कृतिः।'

अथवा

'धन्योऽयं भारतो देशः प्रत्ना तस्य च संस्कृतिः।'

भवति, तत् तेषाम् परिधानमात्रम् भवति, किन्तु यत् तेषाम् सांस्कृतिक-दृष्ट्या आन्तरिकम् स्वतन्त्रम् व्यक्तित्वम् वर्तते, तत् तेषाम् वास्तविकम् जीवनाधायकम् स्वरूपम् अस्ति। विश्वेऽस्मिन् साम्प्रतम् वर्तमानानाम् बहूनाम् राष्ट्राणाम् तु भौगोलिकम् व्यक्तित्वम् अपि स्वल्पकालीनम् एव वर्तते, व्यक्तित्वप्राचीनतायाम् भारतवर्षेण सह तेषाम् कापि तुलना एव नास्ति। यदा तेषाम् शरीरस्थानीयम् भौगोलिकम् व्यक्तित्वम् एव स्वल्पकालीनम् वर्तते, तदा तेषाम् आत्मस्थानीयस्य आन्तरिकस्य सांस्कृतिकस्य स्वरूपस्य कथा एव का ! तत्तु राष्ट्राणाम् भौगोलिकव्यक्तित्वस्य प्राप्तेः अपि अनन्त-रम् उद्भूतम् विकसितम् च भवति। अपरतश्च भारतवर्षस्य भौगोलिकम्, राजनैतिकम्, सांस्कृतिकम् च व्यक्तित्वम् अतिशयितरूपेण प्राचीनम् वर्तते।

**३—भारतवर्षस्य शरीरस्थानीयम् भौगोलिकम् व्यक्तित्वम्**—भारत-वर्षस्य शरीरस्थानीयम् भौगोलिकम् व्यक्तित्वम् अतीव पुष्टम् मनोहारि च वर्तते। विभिन्नैः हिमालयादिभिः पर्वतैः, गङ्गा-सिन्धु-नर्मदा-कावेरी-ब्रह्मपुत्र-सरयू-यमुनादिकाभिः पवित्रसलिलाभिः सरिताभिः, सर्वतः प्रसृता-भिश्च वनराजिभिः समन्वितम् समुद्रपरिवृतम् च अस्य भौगोलिकम् विशालम् व्यक्तित्वम् पुष्टम् सत् सर्वर्तु मनोहरम्, धनधान्यसम्पन्नम्, सुजलम्, सुफलम्, सस्यश्यामलम् च विराजते। अत एव च तत् बहूनाम् विदेशीया-नाम् शासकानाम् आकर्षणस्य वस्तु जातम्।

भारतवर्षस्य भौगोलिकम् व्यक्तित्वम् विभिन्नैः असंख्यैः तीर्थैः सम-न्वितम् सत् तीर्थीभूतम् एव वर्तते यस्य तीर्थरूपाणाम् विभिन्नानाम् स्थलानाम् यात्राम् कृत्वा जनाः विविधान् धार्मिकाध्यात्मिकादीन् लाभान् प्राप्नुवन्ति।

**४—परिधानस्थानीयम् राजनैतिकम् व्यक्तित्वम्**—भारतवर्षस्य परि-धानस्थानीयम् राजनैतिकम् व्यक्तित्वम् अपि सदैव गौरवपूर्णम् अतिष्ठत्। प्राचीनकाले शौर्यपराक्रमसम्पन्नैः आर्यैः इदम् सर्वथा एव दुर्दमनीयम् कृतम्। यद्यपि मध्यकाले भारतस्य राजनैतिकम् रूपम् किञ्चित् विशृङ्खलितम् जातम्, विदेशीयैश्च शासकैः स्वायत्तीकृतम्, किन्तु वर्तमानकाले पुनस्तत् स्वकीयायाम् वास्तविक्याम् गौरवयुक्तायाम् स्थितौ वर्तते। अद्य भारतम् एकस्य व्यापकस्य लोकतन्त्रस्य रूपे विशालेन परिधानेन सह विराजमानम् विश्वस्य राजनैतिके मञ्चे गौरवेण सह सुशोभते।

**५—जीवनाधायकम् सांस्कृतिकम् व्यक्तित्वम्**—अस्माकम् देशस्य भारतस्य जीवनाधायकम् यत् आन्तरिकम् सांस्कृतिकम् व्यक्तित्वम् वर्तते, तत् अतीव प्राचीनम्, महिमान्वितम्, तेजोमयम् च वर्तते। इदम् व्यक्तित्वम् प्रागैतिहासिककालीनम् वर्तते। इदम् एतावत् प्राचीनम् यत् यदा बहूनाम् राष्ट्राणाम् जन्म अपि न जातम्, जातानाम् च राष्ट्राणाम् यदा आन्तरिकम् स्वकीयम् सांस्कृतिकम् स्वरूपम् अपि न उद्भूतम् विकसितम् वा, तदा

अस्माकम् देशः स्वकीयेन तेजस्विना सांस्कृतिकेन स्वरूपेण विराजमानः विश्वे स्वप्रभया प्रकाशमानः आसीत् । तदा पृथिव्याम् वर्तमानाः मानवाः चारित्रिकीम् शिक्षाम् भारतात् एव गृहीतवन्तः आसन्, यथा च धर्मशास्त्रकारेण मनुना स्मृतम्—

'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

भारतवर्षस्य चारित्रिकी शिष्टाचारसम्बन्धिनी वा शिक्षा अतीव उच्चस्तरीया अनुकरणीया च वर्तते । अत्र 'मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव ।' इत्यादिरूपेण अयम् उपदेशः दत्तः वर्तते यत् मातापितरौ आचार्यः अतिथिश्च, एते सर्वे देवरूपे अनुभाव्याः सेव्याश्च सन्ति । सहैव 'पितुर्दशगुणा माता गौरवेणातिरिच्यते' इत्यादिवाक्यानुसारेण माता परमगौरवशालिनी वर्तते । अत्र 'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुः साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नमः ।' इत्यादिरूपेण गुरुः आचार्यः वा परमश्रद्धेयः परममान्यश्च मतः । अत्र 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।' इत्यादिरीत्या इयम् अपि शिक्षा दत्ता वर्तते यत् जनैः नारीणाम् यथोचितम् सम्मानम् कार्यम्, तासाम् तिरस्कारः न विधेयः । तात्पर्यम् इदम् यत् अत्र जीवनस्य विभिन्नेषु क्षेत्रेषु व्यवहरणीया उन्नता चारित्रिकी शिक्षा दत्ता वर्तते या भारतीयसंस्कृतेः गौरवम् प्रकटयति । इयम् अपरा वार्ता यत् इदानीम् भारतीयाः अस्याः शिक्षायाः यथोचितरूपेण पालनम् कुर्वन्ति न वा ।

प्रागैतिहासिके काले वैदिकानाम् महर्षीणाम् अपि पूर्वजैः यस्याः आधारशिला स्थापिता, यस्याश्च मूलतत्त्वानि विश्वस्य प्राचीनतमे वेदचतुष्टयात्मके वाङ्मये सुनिहितानि विद्यन्ते, सा भास्वती भारतीया संस्कृतिः विभिन्नकालानुरूपम् स्वविकासम् कुर्वती साम्प्रतम् अपि संघर्षसङ्कुलाय विश्वाय किमपि दातुम् समर्था तिष्ठति ।

अस्माकम् देशस्य भारतस्य सांस्कृतिकम् व्यक्तित्वम् एतावत् प्रभावशालि दुर्दमनीयम् च वर्तते यत् राजनैतिकदृष्ट्या कदाचित् पराभूतम् अपि भारतम् सांस्कृतिकदृष्ट्या कदापि पराभूतम् न अभूत्, अपि तु अनया दृष्ट्या तु स्वयम् तेन एव न केवलम् विश्वस्य विभिन्नानि राष्ट्राणि एव प्रभावितानि कृतानि, अपि तु स्वयम् विदेशीयाः स्वशासकाः अपि प्रभाविताः कृताः । अतएव च भारतस्य तस्य प्राचीनायाः संस्कृतेश्च विषये इदम् समुचितरूपेण कथनीयत्वेन आपतति यत्—

'धन्या भारतभूः प्रकामवसुधा प्रत्ना च तत्संस्कृतिः ।'[1]

---

१. अथवा—'धन्योऽयं भारतो देशः प्रत्ना तस्य च संस्कृतिः' ।

६—अस्माकम् देशस्य गौरवम्—अस्माकम् गौरवपूर्णः देशः, यस्मिन् विश्वस्य प्राचीनतमम् वेदस्वरूपम् वाङ्मयम् भारतीयवाङ्मयरूपेण विराजते, यस्मिन् विविधतत्त्वप्रकाशकानि शास्त्राणि विद्यन्ते, यस्य सम्पूर्णम् अपि वाङ्मयम् विश्ववाङ्मयस्य अपूर्वः निधिः वर्तते, यत्र मननशीलाः मुनयः, तत्त्वद्रष्टारः महर्षयः, योगध्यानपरायणाः योगिनः, तपोनिरताः तपस्विनः, स्वचरित्रेण मानवजीवनस्य आदर्शप्रकाशकाः महापुरुषाः महात्मानश्च, शौर्यपराक्रमयुक्ताः अपि क्षमाशीलाः अनुकरणीयचरित्राः राजानश्च जन्म गृहीतवन्तः, यत्रत्या संस्कृतिः मानवसंस्कृतेः एकम् आदर्शभूतम् स्वरूपम् अस्ति, यत्रत्यैः महानुभावैः विश्वेऽस्मिन् सदा शान्तिसन्देशः प्रसारितः, यः सदैव शरणागतरक्षकः अभूत्, यस्य आत्मा बहुशः आक्रान्तः अपि सन् दुर्दमनीयरूपेण जीवन् अतिष्ठत्, यः इदानीम् अपि जगते किमपि दातुम् योग्यः सन् तत् दातुम् प्रस्तुतः वर्तते, अस्माकम् गौरवस्य हार्दिकस्नेहस्य च वस्तु अस्ति। इमम् प्रति अस्माकम् तथैव आत्मीयता अस्ति यथा जन्मदातारौ स्वमातापितरौ प्रति। अस्माकम् देशः देवानाम् अपि स्पृहणीयः अस्ति, यथा हि—

'गायन्ति देवाः किल गीतकानि,
धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदहेतुभूते-
भवन्ति भूयः पुरुषाः सुरत्वात्।'

अस्माकम् अखिलकोटिब्रह्माण्डनायकस्य भगवतः चरणारविन्दयोः इयम् एव हार्दिकी प्रार्थना अस्ति यत्—

विजयताम् अस्माकम् देशः! विजयताम् भारतमाता!

